आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ७१

त्रिमल्लभट्टविरचिता

# बृहद्योगतरङ्गिणी ।

अस्याः प्रथमो भागः ।

एतत्पुस्तकं

ोरस्थैः वे० शा० रा० रा० हनुमन्त पाध्येशास्त्री
इत्येतैः संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८३५

खिस्ताब्दाः १९१३



मूल्यं रूपकपञ्चकम् । ( रु. ५)

# आदर्शपुस्तकोल्लेखपत्रिका ।

अस्या बृहद्योगतरङ्गिण्याः पुस्तकानि यैः परहितैकपरतया प्रदत्तानि तेषां नामानि पुस्तकानां संज्ञाश्च प्रदर्श्यन्ते ।

(क.) इति संज्ञितम्—आनन्दाश्रमस्थम् ।

(ख.) इति संज्ञितम्—व्यङ्कटेश्वरमुद्रणालये मुद्रितम् ।

(ग.) इति संज्ञितम्—कै० वे० शा० रा० रा० कृष्णशास्त्री माटे इत्येतेषाम् । अस्य लेखनशकः १७३३.

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका ।

ॐ तत्सद्ब्रह्मणे नमः ।

त्रिमल्लभट्टविरचिता

# बृहद्योगतरङ्गिणी ।

तत्र ग्रन्थावतारिकानाम प्रथमस्तरङ्गः ।

जयति जगति जनताजयहेतुः सकलदुरितचयवारिधिसेतुः ।
गणपतिरचलसुतासुखसिन्धुः प्रणतमनुजमुनिदैवतबन्धुः ॥ १ ॥

कुचकलशपयोभिर्मेनया साधुसिक्ता
पुरमथनसुरद्रुस्तम्भमालम्बमाना ।
करकिसलयकान्ता मन्दहासप्रसूना
फलतु फलमभीष्टं कल्पवल्ली शिवा नः ॥ २ ॥
ब्रह्मादीनभिवन्दे संदेहध्वान्तभास्करान्भिषजः ।
सुश्रुतचरकाचार्यानुच्चैश्च वैद्यके शास्त्रे ॥ ३ ॥
सत्काथादिरसैर्निदानसहितैरात्मानुभूतैर्मितै-
स्तैलङ्गस्त्रिपुरान्तकस्य नगरे योगी त्रिमल्लो द्विजः ।
नाम्ना योगतरङ्गिणीं ग्रथयति ग्रन्थं ज्वराद्यामय
श्रेणीपावककालजुष्टवपुषां नृणामिह श्रेयसे ॥ ४ ॥
अत्र ग्रन्थे भूरितन्त्रात्तसारे सद्भिर्दत्तं दूषणं भूषणं नः ।
छिन्नं वृग्णं घृष्टमष्टापदं हि च्छायामच्छामृच्छति स्वेच्छयैव ॥५॥
देहादुत्पाद्यते पुंसः पुरुषार्थचतुष्टयम् ।
न नीरोगः स कस्यापि तच्छान्तिस्तु चिकित्सया ॥ ६ ॥
रोगपङ्कार्णवे मग्नं यः समुद्धरते नरम् ।
कस्तेन न कृतो धर्मः कां च पूजां न सोऽर्हति ॥ ७ ॥
अन्नदो जलदश्चैव विप्रो रोगचिकित्सकः ।
त्रयस्ते स्वर्गमायान्ति विना यज्ञेन भारत ॥ ८ ॥
क्वचिद्धर्मः क्वचिन्मैत्री क्वचिदर्थः क्वचिद्यशः ।
कर्माभ्यासः क्वचिच्चेति चिकित्सा नास्ति निष्फला ॥ ९ ॥
अतो मम श्रमस्तोमश्चिकित्सायां तपस्यथम् ।
संक्षिप्ता सरसा चेयं संहिता भुवि जृम्भताम् ॥ १० ॥

हारीतात् ॥

जन्मान्तरकृतं पापं व्याधिरूपेण बाधते ।
तच्छान्तिरौषधैर्दानैर्जपहोमसुरार्चनैः ॥ ११ ॥

वाग्भटात् ॥

रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता ।
निजागन्तुविभेदेन ते च रोगा द्विधा मताः ॥ १२ ॥
कालार्थकर्मणां योगो हीनमिथ्यातिमात्रकः ।
सम्यग्योगश्च विज्ञेयो रोगारोग्यैककारणम् ॥ १३ ॥
रसादिस्थेषु दोषेषु व्याधयः संभवन्ति ये ।
तज्जा इत्युपचारेण तानाहुर्घृतदग्धवत् ॥ १४ ॥
शल्यं शालाक्यमगदं कुमारमरणं तथा ।
कायभूतक्रिया वाजीकरणं च रसायनम् ॥ १५ ॥
अष्टौ चिकित्सितस्योक्तान्यङ्गानीति समासतः ।
रम्यत्वमुक्तैरेतैर्हि सनाथा रुक्प्रतिक्रिया ॥ १६ ॥
वैद्यो व्याध्युपसृष्टश्च भेषजं परिचारकः ।
एते पादाश्चिकित्सायाः कर्मसाधनहेतवः ॥ १७ ॥
ज्ञातशास्त्रः शुचिः शूरो लघुहस्तः कृतोद्यमः ।
दृष्टकर्मा कृती धर्मी स भिषक्पाद उच्यते ॥ १८ ॥
आढ्यो रोगी भिषग्वश्यो ज्ञापकः सत्त्ववाञ्शुचिः ।
असर्वलक्षणः पथ्यशीलः पादः परो मतः ॥ १९ ॥
दोषकालवयोदेशमात्राप्रकृतिरेव सा ।
सात्म्यं पद्भेषजं तत्स्यात्परः पादश्चिकित्सिते ॥ २० ॥
अबह्वाशी जितस्वप्नो हितो धर्मार्थकोविदः ।
बहुदर्शी कर्मदक्षः पादः स्यात्परिचारकः ॥ २१ ॥
वातः पित्तं कफश्चेति त्रयो दोषाः समासतः ।
प्रत्येकं पञ्चधा तेऽथ तेषां भेदो द्विषष्टिधा ॥ २२ ॥
तेषां कायमनोभेदादधिष्ठानमपि द्विधा ।
विकृता घ्नन्ति ते देहान्वर्धयन्त्यविकारिणः ॥ २३ ॥
चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु ।
वर्षादिषु तु पित्तस्य श्लेष्मणः शिशिरादिषु ॥ २४ ॥

ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः।
वयोहोरात्रिभुक्तानां तेऽन्तमध्यादिगाः क्रमात् ॥ २५ ॥
विमलसलिलपूर्णा निर्झरा सा धरित्री
हरितयवसलीलावृक्षवल्ल्योऽतिशीताः।
द्युमणिरपि कदाचिद्दृक्पथं याति नो वा
कफपवनविकारी स्यात्स आनूपदेशः ॥ २६ ॥
प्रबलरविकरोच्चैर्भूधराः संप्रतप्ताः
पृथुलदलविहीनाः पादपाः कण्टकाढ्याः।
दिशि दिशि मृगतृष्णा निर्जला भूतधात्री
दहनरुधिरकोपी पित्तकृज्जाङ्गलोऽयम् ॥ २७ ॥
नोष्णं यस्मिन्वैपरीत्यं न शीतं
स्वे स्वे काले षड्ऋतूनां प्रकाशः।
मिश्रैश्चिह्नैः पूर्वमुक्तैर्विमिश्रो
देशः प्रोक्तोऽसौ तु साधारणाख्यः ॥ २८ ॥
मात्रा चतुर्विधा ज्ञेया मृदुर्मन्दा च तीक्ष्णका।
विषमा चेति संप्रोक्ता तत्तद्वह्निविशेषतः ॥ २९ ॥
शुक्रार्तवस्थैर्जन्मादौ विषेणेव विषक्रिमेः।
तैश्च प्रकृतयस्तिस्रो हीनमध्योत्तमाः पृथक् ॥ ३० ॥
मलायत्तं बलं पुंसां शुक्रायत्तं तु जीवितम्।
अतश्चिकित्सितं कार्यं संरक्षन्मलरेतसी ॥ ३१ ॥
जातमात्रचिकित्स्यस्तु नोपेक्ष्योऽल्पतया गदः।
वह्निशत्रुविषैस्तुल्यः स्वल्पोऽपि विकरोत्ययम् ॥ ३२ ॥
यावज्जीवं चिकित्स्यस्तु नोपेक्ष्यो भिषजा गदी।
यावत्कण्ठगताः प्राणास्तावत्कार्याः प्रतिक्रियाः ॥ ३३ ॥
कदाचिद्दैवयोगेन दृष्टारिष्टोऽपि जीवति।
आदौ सर्वेषु रोगेषु निदानपरिवर्जनम् ॥
तेनैव रोगाः शीर्यन्ते शुष्कनीरा इवाङ्कुराः ॥ ३४ ॥
चिकित्सितं शरीरं यो न निष्क्रीणाति दुर्मतिः।
स यत्करोति सुकृतं तत्सर्वं भिषगश्नुते ॥ ३५
नैव कुर्वीत लोभेन चिकित्सापण्यविक्रयम्।
ईश्वराणां वसुमतां लिप्सेतार्थं तु वृत्तये ॥ ३६

१ संस्थिताः।

रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् ।
ततः कर्म भिषक्कुर्याज्ज्ञानपूर्वं विचक्षणः ॥ ३७ ॥
कर्मप्रकोपजाः केचित्केचिद्दोषप्रकोपजाः ।
कर्मदोषोद्भवाः केचिन्मनःकायस्थिता गदाः ॥ ३८ ॥
कर्मक्षयात्कर्मकृतो दोषजः स्वशमौषधैः ।
कर्मदोषोद्भवो याति कर्मदोषक्षयात्क्षयम् ॥ ३९ ॥
यथाशास्त्रं तु निर्णीतो तथा व्याधिचिकित्सितः ।
न शमं याति यो व्याधिः स ज्ञेयः कर्मजो बुधैः ॥ ४० ॥
पुण्यैश्च भेषजैः शान्तास्ते ज्ञेयाः कर्मदोषजाः ।
विज्ञेया दोषजास्त्वन्ये केवला वाऽथ संकराः ॥ ४१ ॥
याभिः क्रियाभिर्जायन्ते शरीरे धातवः समाः ।
सा चिकित्सा विकाराणां कर्म तद्भिषजां मतम् ॥ ४२ ॥
दर्शनस्पर्शनप्रश्नैर्व्याधिज्ञानं त्रिधा मतम् ।
आयुरादि दृशा स्पर्शाच्छीतादि प्रश्नतोऽपरम् ॥ ४३ ॥
स्वभावाद्व्याधयः साध्याः केचिद्याप्या उपेक्षिताः ।
साध्या याप्यत्वमायान्ति याप्यश्चासाध्यतां तथा ॥ ४४ ॥
निवृत्तोऽपि पुनर्व्याधिः स्वल्पेनाऽऽयाति हेतुना ।
दोषैर्मार्गीकृते देहे शेषः सूक्ष्म इवानलः ॥ ४५ ॥
व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः ।
एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ॥ ४६ ॥
विकारनामाकुशलो न जिह्नीयात्कदाचन ।
न हि सर्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः ॥४७॥
नास्ति रोगो विना दोषैर्यस्मात्तस्माद्विचक्षणः ।
अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत् ॥ ४८ ॥

अथाऽऽह तीसटाचार्यः ।

वातस्य पित्तस्य कफस्य वापि
विकारिणः कायवतां हि काये ।
प्रकोपहेतुः कुपितस्य लिङ्गं
चिकित्सितं चेति निरूपणीयम् ॥ ४९ ॥

रूक्षैस्तिक्तैः कषायैः कटुभिरनशनैर्वेगसंधारणैश्च
व्यायामैश्च व्यवायैः प्रतरणगलवद्भिग्रहैर्जागरैश्च ।

श्यामानीवारकङ्गुप्रभृतिभिरशनैरुल्लसद्भिः पयोदै-
रन्ने जीर्णे च जन्तोरिति भवति तनौ मारुतस्य प्रकोपः॥५०॥
कट्वम्लोष्णविदाहितीक्ष्णलवणक्रोधोपवासातप-
स्त्रीसंपर्कतिलातसीदधिसुरासुक्तारनालादिभिः ।
भुक्ते जीर्यति भोजने च शरदि ग्रीष्मेऽपि च प्राणिनां
मध्याह्नेऽपि तथाऽर्धरात्रसमये पित्तप्रकोपो भवेत् ॥ ५१ ॥
गुरुमधुरातिशीतदधिदुग्धनवान्नपय-
स्तिलविकृतीक्षुभक्षणलवणानि दिवा शयनैः ।
समविषमाशनाध्यशनपायसपिष्टकृतै-
रपि च कफः प्रकुप्यति मधौ दिनादिश्च ॥ ५२ ॥
इति प्रकोपकारणैः प्रकोपमेत्य सर्वगाः
समीरणादयस्तनौ रुजः सृजन्ति जन्तुषु ।
वातपित्तकफकोपकारणं सूचितं यदिह सूत्रसंग्रहे
प्रोच्यते तदिह सांप्रतं मया रुक्परीक्षणमनेन कारयेत्॥५३॥
दृशि शिरसि च शङ्खे श्रोत्रनेत्रान्तरेषु
भ्रुवि हृदि हनुमन्यास्कन्धमूर्धार्धसंधौ ।
रुगतिर्निशि दिवाऽल्पा स्यादकस्मात्प्रशान्ता
भवति च भुजजङ्घास्तब्धसंकोचता च ॥ ५४ ॥
कटिविटपपक्षात्सु क्लोम्नि च प्लीह्नि पृष्ठे
जठरवृषणवक्षःकुक्षिकक्षान्तरेषु ।
प्रसरति गुरुशूलं नाभिबस्तिस्तनेषु
त्रिकवलिगुदगुह्योपान्तपक्षद्वयेषु ॥ ५५ ॥
वदनविरसता स्याद्रूक्षः कर्कशत्वं
भवति वपुषि कार्श्यं रात्रिनिद्रानिवृत्तिः ।
त्वचि च परुषता स्यात्स्याच्च वैपथुप्रभृ-
रिति पवनविकारे लक्षणं लक्षणीयम् ॥ ५६ ॥
भ्रममदमुखशोषस्वेदसंतापमूर्छा
मुखनयननखत्वङ्मूत्रविट्पीतता च ।
प्रलपनमतिसारश्चारुचिश्च ज्वरश्च
पित्तरोगस्य लिङ्गम् ॥ ५७ ॥

अङ्गस्य गौरवमपाटवमन्तराग्ने-
रुत्क्लेशता च हृदयस्य मुखप्रसेकः ।
आलस्यमास्यमधुरत्वमकाण्डकण्डू-
रापाण्डुता नयनयोरतिरोमहर्षः ॥ ५८ ॥
मज्जाप्लुतिर्वमथुपीनसकासनिद्रा
तन्द्रादयश्चुलुचुलापनमुल्बणं च ।
स्यादोष्ठकण्ठरसनारवमूलतालु-
घ्राणेक्षणश्रवणशष्कुलिकान्तरेषु ॥ ५९ ॥
श्लेष्मोल्बणे भवति लिङ्गमिदं नराणां
संसर्गजेषु च गदेषु भवेद्विदोषम् ।

उक्तं च—

कफवातौ वातकफौ वातः पित्तं च वृद्धिशमौ ॥ ६० ॥
त्रिभिराद्यैस्त्रिभिरन्त्यैस्त्रिभिराद्यपरैस्तदन्यैश्च ।
अन्त्याद्यावाद्यमाद्यान्त्यावन्त्यं कोपशमौ मलम् ॥ ६१ ॥
मध्यमध्येतरौ मध्यं प्रयोगान्नयतास्त्रिकौ ।
आद्यमध्यं नयत्यन्तं मधुराद्याः शमेतरौ ॥ ६२ ॥
आद्यं मध्यान्त्यमाद्यं तु मध्यमान्तिममन्तिमम् ।
आद्यमध्यं मध्यमान्त्यमाद्यं मध्यान्तिमं क्रमात् ॥ ६३ ॥
आद्यं दोषरसाः प्रायः प्रयोगपरिशीलिताः ।

एवम्—

रात्र्यहोरादिमध्यान्ते पुनरन्त्याद्यमध्यतः ॥ ६४ ॥
मध्ये चान्ते तथाऽऽदौ च दोषैर्नाल्पाऽतिरुक्क्रमात् ।
भुक्ते जीर्यति जीर्णेऽन्ने जीर्णे भुक्ते च जीर्यति ॥ ६५ ॥
जीर्णे जीर्यति भुक्ते च दोषैर्नाल्पाऽतिरुक्क्रमात् ।
कफपित्तानिलाः पूर्वमध्यान्तेषु व्यवस्थिताः ॥ ६६ ॥
देहाहोरात्रिवयसां संधिष्वपि कफानिलौ ।
आद्यन्ते च दौर्बल्यं विसर्गादानयोर्नृणाम् ॥ ६७ ॥
मध्ये मध्यबलं त्वन्ते श्रेष्ठमाद्यौ च निर्दिशेत् ।

इति श्रीबृहद्योगतरङ्गिण्यां प्रन्थावतारिका नाम प्रथमस्तरङ्गः ॥ १ ॥

अथ द्वितीयस्तरङ्गः ॥

---

## अथ शारीरम् ।

दोषधातुमलादीनामाधारस्तु वपुर्यतः ।
तत्स्वरूपमतो ज्ञातुं शारीरं प्राङ्निरूप्यते ॥ १ ॥

### शारीरज्ञानप्रयोजनमाह—

यः शारीरमविज्ञाय शस्त्रक्षारादिकर्मसु ।
प्रवर्ततेऽसौ स्खलति वर्त्मनीव गतेक्षणः ॥ २ ॥

### अथ सर्वशारीरसंग्रहश्लोकमाह—

अङ्गप्रत्यङ्गजीवाशयधमनिशिरास्नायुभिः कण्डराभिः
पेश्यस्थित्वक्कलाभिर्निजमलसहितैर्धातुभिः संधिभिश्च ।
वातैः पित्तैर्बलासैः प्रकृतिभिरखिलैर्मर्मरन्ध्रोपधातु-
स्रोतःश्रेणीगुणैरप्यमलतरधियः साभिशारीरमाहुः ॥ ३ ॥

### अथ शरीरोत्पत्तिक्रममाह—

शुक्रशोणितसंबन्धे जातमात्रे स्वकर्मणा ।
जीवो विशति सौराद्रि मणेरग्निरिवेन्धनम् ॥ ४ ॥
शुक्रशोणितसंबन्धो वायुनैव विधीयते ।
धातुदोषमलादेर्यद्वायुरेव प्रवर्तकः ॥ ५ ॥

### अथ गृहीतगर्भाया लक्षणम् ।

लिङ्गं तु सद्योगर्भाया योन्यां बीजस्य संग्रहः ।
तृप्तिर्गुरुत्वं स्फुरणं शुक्रास्रस्य तु बन्धनम् ॥ ६ ॥
हृदयस्पन्दनं तन्द्रा तृड्ग्लानिर्लोमहर्षणम् ।

### अथर्तुलक्षणम् ।

मासि मासि रजः स्त्रीणां ऽयहं स्रवति योनितः ॥ ७ ॥
ऋतुस्तु द्वादशाहानि पूर्वास्तिस्रोऽत्र निन्दिताः ।
एकादशी च युग्मासु स्यात्पुत्रोऽन्यासु कन्यका ॥ ८ ॥

### अथानार्तवकाले कथं न गर्भो भवतीत्याह—

पद्मं संकोचमायाति दिनेऽतीते यथा तथा ।
ऋतावतीते योनिस्तु शुक्रं नातः प्रतीच्छति ॥ ९ ॥

अथ गर्भवृद्धिमाह—

बीजात्मकैर्महाभूतैः सूक्ष्मैः सत्त्वानुगैश्च सः ।
मातुश्चाऽऽहाररसजैः क्रमाद्गर्भो विवर्धते ॥ १० ॥

अथ प्रतिमासं गर्भवृद्धिव्यवस्थामाह—

अव्यक्तं प्रथमे मासि सप्ताहात्कललं भवेत् ।
द्वितीये मासि कललाद्घनः पेश्यथ वाऽर्बुदम् ॥ ११ ॥
पुंस्त्रीक्लीबाः क्रमात्तेभ्यस्तत्र व्यक्तस्य लक्षणम् ।
क्षामता गरिमा कुक्षेर्मूर्च्छा छर्दिररोचकः ॥ १२ ॥
जृम्भाप्रसेकः सदनं रोमराज्याः प्रकाशनम् ।
अम्लेष्टता स्तनौ पीनौ सस्तन्यौ कृष्णचूचुकौ ॥ १३ ॥
पादशोफो विदाहोऽङ्गे श्रद्धाश्च विविधात्मिकाः ।
व्यक्ती भवति मासेऽस्य तृतीये गात्रपञ्चकम् ॥ १४ ॥
मस्तकं सक्थिनी बाहू सर्वसूक्ष्माङ्गजन्म च ।
सममेव हि मूर्धाद्यैर्ज्ञानं च सुखदुःखयोः ॥ १५ ॥
गर्भस्य नाभौ मातुस्तु हृदि नाडी निबध्यते ।
यया स पुष्टिमाप्नोति केदार इव कुल्यया ॥ १६ ॥
चतुर्थे व्यक्तताऽङ्गानां चेतनायाश्च जायते ।
प्रतिबुद्धतरत्वं तु मनसो मासि पञ्चके ॥ १७ ॥
षष्ठे स्नायुशिरारोमबुद्धिवर्णनखत्वचाम् ।
सर्वैः सर्वाङ्गसंपूर्णैर्भावैः पुष्णाति सप्तमे ॥ १८ ॥
ओजोऽष्टमे संचरति मातापुत्रौ मुहुः क्रमात् ।
तेन तौ म्लानमुदितौ स्यातां जातो न जीवति ॥ १९ ॥
स देही नवमे मासि सर्वलक्षणलक्षितः ।
दशमे वैकादशे वा द्वादशे मासि वा क्वचित् ॥ २० ॥
जानञ्शुभाशुभं कर्म संस्मरन्पूर्वजन्मजम् ।
मातरो विविधा दृष्टाः पितरो भ्रातरस्तथा ॥ २१ ॥
नानायोनिरहं प्राप्तः पशुपन्नगपक्षिणाम् ।
कीटादीनां च तत्रस्थो मलमूत्रादिभिर्वृतः ॥ २२ ॥

---

१ विदाहोऽन्ये इत्यष्टाङ्गहृदयपाठः ।

जरायुवेष्टितो भुग्नपृष्ठग्रीवास्थिसंहतिः ।
गर्भाशये स्थितो देही ज्ञानवानतिचिन्तयन् ॥ २३ ॥
किं मया दुष्कृतं कर्म कृतं गर्भाशये यतः ।
पतितो निरये घोरे नानादुःखप्रदायिनि ॥ २४ ॥
यदि गर्भाद्विनिर्यामि करिष्यामि तदा शुभम् ।
येन भूयो गर्भवासदुःखं द्रक्ष्यामि न क्वचित् ॥ २५ ॥
इति संचिन्त्यमानः स देही योगीव तत्त्ववित् ।
निःसारितः समीरेण योनिमार्गनियन्त्रितः ॥ २६ ॥
निर्गतो योनितो देही मायया विष्यते पुनः ।
तत्क्षणादात्मविज्ञानविनाशादिव रोदिति ॥ २७ ॥

अथ गर्भस्य द्वैविध्ये हेतुमाह—

परस्परानिलाद्घातात्प्रभिन्ने कलले द्विधा ।
द्विधा ततः प्रवृद्धयेत युग्मं तस्मात्प्रजायते ॥ २८ ॥

अथ विकृतोत्पत्तिहेतुमाह—

मातुः श्रद्धाविघातेन स्वस्य दुष्कर्मणा तथा ।
कुब्जवामनखञ्जं वा विकृताश्च भवन्ति ते ॥ २९ ॥

गर्भनष्टहेतुमाह—

आघातादिनिमित्तेन जठरान्तर्मृते शिशौ ।
जठरं जायते शीतं स्तब्धाध्मातं भृशव्यथम् ॥ ३० ॥
गर्भास्पन्दो भवत्युष्णाः कृच्छ्रादुच्छ्वसनं क्रमः ।
अरतिस्रस्तनेत्रत्वमावीनामसमुद्भवः ॥ ३१ ॥

अथाङ्गप्रत्यङ्गोत्पत्तिः—

शिरोन्तराधिर्द्वौ बाहू सक्थिनी च समासतः ।
षडङ्गमङ्गप्रत्यङ्गं तस्याक्षिहृदयादिकम् ॥ ३२ ॥

अथ प्रत्यङ्गानि—

चक्षुष्कर्णौष्ठनासास्तनगलरसनागल्लमन्यांसगण्ड-
भ्रूकक्षाजत्रुहस्ताङ्गुलिनखरकटीनाभिपृष्ठाण्डमेढ्रम् ।
जानू स्फिग्बस्तिपार्श्वोदरगुदपदपार्ष्ण्यङ्गुलीगुल्फकादि
प्रत्यङ्गं चेत्युभाभ्यां ज[illegible]ह विबुधास्तच्छरीरं समस्तम् ॥ ३३ ॥

अथाऽऽकाशादीनां शब्दादीन्गुणानाह—

शब्दः स्पर्शश्च रूपं च रसो गन्धः क्रमाद्गुणाः ।
खानिलाग्निमुखार्येकगुणवृद्ध्यादयः परे ॥ ३४ ॥

अथ कुतो भूतात्किमुत्पद्यत इत्याह—

तत्र खात्खानि देहेऽस्मिञ्श्रोत्रं शब्दो विविक्तता ।
वातात्स्पर्शत्वगुच्छ्वासा वह्नेर्दृग्रूपपक्तयः ॥ ३५ ॥
अद्भ्यो जिह्वारसक्लेदा घ्राणगन्धास्थि तु क्षितेः ।

अथ देहे पितृमातृजमत्यङ्गविभागमाह—

मृद्वत्र मातृजं रक्तमांसमज्जागुदादिकम् ॥ ३६ ॥
पैतृकं तु स्थिरं शुक्रधमन्यस्थिकचादिकम् ।

आत्मजं यथा—

चैतन्यं चित्तमक्षाणि नानायोनिषु जन्म च ॥ ३७ ॥

सात्म्यजं यथा—

सात्म्यजं चाऽऽयुरारोग्यमनालस्य प्रभा बलम् ।

रसजं यथा—

रसजं वपुषो जन्म वृत्तिर्वृद्धिरलोलता ॥ ३८ ॥

सत्त्वादिगुणमाह—

सात्त्विकं शौचमास्तिक्यं साधुकर्म रुचिर्मतिः ।
राजसं बहुभाषित्वं मानक्रुद्दम्भमत्सरम् ॥ ३९ ॥
तामसं भयमज्ञानं निद्रालस्यं विषादिता ।
इति भूतमये देहे संधिमर्मादिसाधने ॥ ४० ॥
कलाः सप्ताऽऽशयाः सप्त धातवः सप्त तन्मलाः ।
सप्तोपधातवः सप्त त्वचः सप्त प्रकीर्तिताः ॥ ४१ ॥
त्रयो दोषा नवशतं स्नायूनां संधयस्तथा ।
दशाधिकं च द्विशतमस्थ्नां च त्रिशतं मतम् ॥ ४२ ॥
सप्तोत्तरं मर्मशतं शिराः सप्तशतं तथा ।
चतुर्विंशतिराख्याता धमन्यो रसवाहिकाः ॥ ४३ ॥

मांसपेश्यः समाख्याता नृणां पञ्चशतं बुधैः ।
स्त्रीणां तु विंशत्यधिकाः कण्डराश्चैव षोडश ॥ ४४ ॥
नृदेहे दश रन्ध्राणि नारीदेहे त्रयोदश ।
एतत्समासतः प्रोक्तं विस्तरेणाधुनोच्यते ॥ ४५ ॥

कलालक्षणम्—

धात्वाशयान्तरे यस्य यः क्लेदस्त्ववतिष्ठते ।
देहोष्मणा विपक्वस्तु सा कलेत्यभिधीयते ॥ ४६ ॥
यथा हि सारः काष्ठेषु च्छिद्यमानेषु दृश्यते ।
तथा धातुर्हि मांसेषु च्छिद्यमानेषु वीक्ष्यते ॥ ४७ ॥
मांसासृङ्मेदसां तिस्रो यकृत्प्लिह्नोश्चतुर्थिका ।
पञ्चमी च तथाऽन्त्राणां षष्ठी चाग्निधरा मता ॥ ४८ ॥
रेतोधरा सप्तमी स्यादिति सप्त कला मताः ।
यथा पयसि सर्पिस्तु गूढश्चेक्षौ रसो यथा ॥ ४९ ॥
शरीरेऽपि तथा रक्तं नृणां विद्याद्भिषग्वरः ।

वशिष्ठसंहितायां तु—

स्त्रीणां दश कला ज्ञेया गर्भस्य स्तनयोरपि ॥ ५० ॥
इति कलाः ।

अथाऽऽशयाः—

जीवास्राशयमामनन्ति हृदये स्याच्छ्लेष्मणस्त्वाशय-
स्तस्याधस्तदधस्तु सर्वभिषजामामाशयः संमतः ।
नाभेर्वामत ऊर्ध्वमीषदनलस्याधोऽस्य पक्वाशय-
स्तस्याधः पवनाशलयो निगदितो बस्तिस्तु मूत्राशयः ॥ ५१ ॥
गर्भाशयोऽष्टमः स्त्रीणामामपक्वाशयान्तरे ।
स्तनौ स्तन्याशयावेवं विज्ञेयास्तु दशाऽऽशयाः ॥ ५२ ॥
कोष्ठाङ्गानि स्थितान्येषु हृदयं क्लोमफुप्फुसः ।
यकृत्प्लीहोण्डुकवृक्कौ नाभिर्डिम्भान्त्रबस्तयः ॥ ५३ ॥
दश जीवितधामानि शिरोरसनबन्धनम् ।
कण्ठोऽस्रं हृदयं नाभिर्बस्तिः शुक्रौजसी गुदम् ॥ ५४ ॥
असृजः श्लेष्मणश्चापि यः प्रसादः परो मतः ।
तं पच्यमानं पित्तेन ... ॥ ५५ ॥

ततोऽस्यान्त्राणि जायन्ते गुदं बस्तिश्च देहिनः ।
तेषु मुख्यान्त्रमाबद्धं सार्धं त्रिव्यामसंमितम् ॥ ५६ ॥
गुदे कृकाटिकायां च यत्र कोष्ठानि सर्वशः ।
त्रिव्यामसंमितं स्त्रीणां मुख्यमन्त्रं जगुर्बुधाः ॥ ५७ ॥
कफासृजोः प्रसादात्तु हृदयं चेतनास्पदम् ।
यदाश्रिता धमन्यस्तु तिष्ठन्ति प्राणधारिकाः ॥ ५८ ॥
पुण्डरीकेण सदृशं हृदयं स्यादधोमुखम् ।
जाग्रतस्तद्विकसति स्वपतस्तु निमीलति ॥ ५९ ॥
उदरे पच्यमानानामाध्मातात्कमसारवत् ।
कफशोणितमांसानां साराज्जिह्वा प्रजायते ॥ ६० ॥
रक्तमेदःप्रसादात्तु वृक्कौ स्तः कुक्षिगोलकौ ।
तौ तु पुष्टिकरौ ज्ञेयौ जठरस्थस्य मेदसः ॥ ६१ ॥
मेदःकफास्रमांसानां प्रसादाद्वृषणौ मतौ ।
बीजवाहिशिराधारौ विशेषात्पौरुषावहौ ॥ ६२ ॥
ग्रीवाहृद्ग्राहिणीनां तु कण्डराणां मिथो युतः ।
अधोभागगतानां हि प्ररोहो मेढ्र उच्यते ॥ ६३ ॥
गर्भाधानकरं लिङ्गमयनं बीजमूत्रयोः ।
वामेऽधस्ताद्धृदः प्लीहा दक्षिणे तु यकृन्मतम् ॥ ६४ ॥
रक्तवाहिशिरामूलं प्लीहा प्रोक्ता महर्षिभिः ।
यकृद्रञ्जनपित्तस्य स्थानं रक्तस्य संश्रयः ॥ ६५ ॥
हृन्नाडिकानिबद्धस्तु वामे शोणितफेनजः ।
उदानवायोराधारः फुप्फुसः प्रोच्यते बुधैः ॥ ६६ ॥
हृदि दक्षिणभागेऽधो विज्ञेयं क्लोमरक्तजम् ।
जलवाहिशिरामूलं तृष्णाच्छादनकं तु तत् ॥ ६७ ॥
पक्वाशये मलाधार उन्दुको रक्तकिट्टजः ।
इत्याशयाः ॥

अथ धातवः—

रसासृङ्मांसमेदोस्थिमज्जाशुक्राणि धातवः ॥ ६८ ॥
शरीरं धारयन्त्येते यस्मात्तस्मात्तु धातवः ।
जायन्तेऽन्योन्यतः सर्वे पाचिताः पित्ततेजसा ॥ ६९ ॥

अन्नं कालेऽभ्यवहृतं कोष्ठे प्राणानिलाहृतम् ।
द्रवैर्विभिन्नसंघातं नीतं पित्तेन मार्दवम् ॥ ७० ॥
संधुक्षितः समानेन पचत्यामाशयस्थितम् ।
औदर्योऽग्निर्यथा बाह्यः स्थालीस्थं तोयतण्डुलम् ॥ ७१ ॥
आदौ षड्रसमप्यन्नं मधुरीभूतमीरयेत् ।
फेनभूतं कफं यातं विदाहादम्लतां ततः ॥ ७२ ॥
पित्तमामाशयात्कुर्याच्च्यवमानं च्युतं पुनः ।
अग्निना शोषितं पक्वं पिण्डितं कटुमारुतम् ॥ ७३ ॥
भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः ।
पञ्चाऽऽहारगुणान्स्वान्स्वान्पार्थिवादीन्पचन्त्यनु ॥ ७४ ॥
यथास्वं ते च पुष्णन्ति पक्वा भूतगुणान्पृथक् ।
पार्थिवाः पार्थिवानेव शेषाः शेषांश्च देहगान् ॥ ७५ ॥
किट्टं सारश्च तत्पक्वमन्नं संभवति द्विधा ।
तत्राच्छं किट्टमन्नस्य मूत्रं विद्याद्घनं शकृत् ॥ ७६ ॥
रसस्तु सप्तभिर्भूयो यथास्वं पच्यतेऽग्निभिः ।
रसाद्रक्तं ततो मांसं मांसान्मेदोऽस्थि मेदसः ॥ ७७ ॥
अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भः प्रजायते ।
केचिदाहुरहोरात्रात्षडहादपरे परे ॥ ७८ ॥
मासेन याति शुक्रत्वमन्नं पाकरसक्रमात् ।
तन्वाहारस्य पक्वाग्निभूते पित्तं तदुच्यते ॥ ७९ ॥

बालाग्रस्य तु कोटिधा विगलितस्यैकेन भागेन य-
स्तुल्योऽग्निः प्रभुरन्नपानमखिलं संपाचयत्याशये ।
पित्तं भिन्नमिहानलास्त्वकृतिकृत्तद्भेदविख्यापकाः
सन्त्यर्था बहुशोऽत्र धारिमादिरामत्स्यज्वराद्यादयः ॥८०॥

इति धातवः ।

अथ धातुमलाः ।

जिह्वानेत्रकपोलवारिरसविड्रक्तस्य तद्रञ्जकं
पित्तं कर्णमलश्च मांसविड्यो मेदो मलो रासनिः ।
कक्षामेढ्रदतो [illegible]श्च नखरास्त्वस्थ्नां मलो नेत्रवि-
[illegible] वक्त्रापिटकास्त्वैग्ध्ये स्युरेते मलाः ॥८१॥

रसाद्याधिक्यतः प्रायो रसादीनां मलोद्भवः ।

अथोपधातवः

स्तन्यं रजो वसास्वेदो दन्ताः केशौजसी तथा ॥ ८२ ॥
एते सप्त क्रमेणैव ज्ञातव्या उपधातवः ।
ओजस्तु सर्वधातूनां तेजः सोमात्मकं स्थिरम् ॥ ८३ ॥
स्निग्धं शीतं शरीरस्य बलपुष्टिकरं मतम् ।
शुद्धमांसभवस्नेहो वसा सा परिकीर्त्यते ॥ ८४ ॥

अथ सप्त त्वचः ।

पच्यमानस्य पिण्डस्य शारीरेणोष्मणा शनैः ।
सप्त त्वचः स्युः क्षीरस्य क्रमात्संतानिका इव ॥ ८५ ॥
ज्ञेयाऽवभासिनी पूर्वा सिध्मस्थानं च सा स्मृता ।
द्वितीया लोहिता ज्ञेया तिलकालकजन्मभूः ॥ ८६ ॥
श्वेता तृतीया विख्याता स्थानं चर्मदलस्य सा ।
ताम्रा चतुर्थी विज्ञेया किलासश्वित्रभूमिका ॥ ८७ ॥
पञ्चमी वेदिनी ख्याता सर्वं कुष्ठोद्भवा ततः ।
विख्याता लोहिता षष्ठी ग्रन्थिगण्डापची स्थितिः ॥ ८८ ॥
स्थूला त्वक्सप्तमी ख्याता विद्रध्यादेः स्थितिश्च सा ।
इति सप्त त्वचः प्रोक्ताः स्थूला व्रीहिद्विभात्रया ॥ ८९ ॥

अथ दोषाः ।

वातपित्तकफा दोषाः प्रत्येकं ते तु पञ्चधा ।
प्रकृतिस्था देहमूलं विकृता देहनाशकाः ॥ ९० ॥
पवनस्तेषु बलवान्विकारकरणान्मतः ।
रजोगुणमयः सूक्ष्मः शीतो रूक्षो लघुश्चलः ॥ ९१ ॥
प्राणापानौ समानश्चोदानव्यानौ च वायवः ।
हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ॥ ९२ ॥
उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः ।
हंसरूपस्थितः प्राणः प्रीणनाद्वपुषो हृदि ॥ ९३ ॥
मलमूत्रापनयनादपानः कथ्यते बुधैः ।
पीतभक्षितमाघ्रातं रक्तपित्तकफादि च ॥ ९४ ॥

समं नयति गात्राणि समानस्तेन कथ्यते।
स्यन्दनादूर्ध्वनयनादुदानो भण्यते बुधैः ॥ ९५ ॥
व्यानो व्यानयति प्रायो रोगादीन्सर्वदेहगः।
नाभेरधो विशेषेण वायुर्वसति देहधृत् ॥ ९६ ॥
पित्तमुष्णं द्रवं पीतं नीलं सत्त्वगुणोल्बणम्।
कटुतिक्तरसं ज्ञेयं विदग्धं वाऽऽम्लतां व्रजेत् ॥ ९७ ॥
अग्न्याशये परेत्पित्तमग्निरूपं तिलोन्मितम्।
पाचकं भ्राजकं चैव रञ्जकालोचकं तथा ॥ ९८ ॥
साधकं चेति पञ्चैव पित्तनामान्यनुक्रमात्।
हुततारनिभं भुक्तपाचनात्पाचकं विदुः ॥ ९९ ॥
रसरञ्जनतो रक्ते यकृत्प्लीह्नोश्च रञ्जकम्।
अभ्यङ्गादि गृहीत्वाऽङ्गं भ्राजनाद्भ्राजकं स्मृतम् ॥ १०० ॥
आलोचयति यद्दृष्ट्या रूपमालोचकं हि तत्।
तमोरूपं कफं भित्त्वा साधके धर्मसाधनात् ॥ १ ॥
स्युरेतान्यग्न्युपपदान्यखिलानि स्वकर्मसु।
स्थानं विशिष्टं पित्तस्य हृदोऽधस्तात्प्रकीर्तितम् ॥ २ ॥
कफः स्निग्धो गुरुः श्वेतः पिच्छिलः शीतलस्तथा।
तमोगुणाधिकः स्वादुर्विदग्धो लवणो भवेत् ॥ ३ ॥
कफस्त्वामाशये मूर्ध्नि कण्ठे हृदि च संधिषु।
तिष्ठन्करोति देहस्य स्थैर्यं सर्वाङ्गपाटवम् ॥ ४ ॥
क्लेदनस्तर्पकश्चैव बोधनश्चावलम्बकः।
श्लेष्मकश्चेति नामानि कफस्योक्तान्यनुक्रमात् ॥ ५ ॥
क्लेदको भुक्तसंक्लेदात्तर्पको नेत्रतर्पणात्।
बोधको रससंबोधादालम्बादवलम्बकः ॥ ६ ॥
श्लेष्मकः संधिसंश्लेषादिति तेषां विचेतना।
कण्ठस्याधो विशेषेण कफस्थानं जगुर्बुधाः ॥ ७ ॥
दुष्टं रक्तमपि प्राहुर्दोषं केचन पित्तवत्।
वातपित्तकफानां तु त्रयो वैशेषिका गुणाः ॥ ८ ॥
रौक्ष्यं वातस्य पित्तस्य तैक्ष्ण्यं स्नैग्ध्यं कफस्य च।
साम्यं वृद्धिक्षयश्चेति दोषाणां त्रिविधा गतिः ॥ १०९ ॥

तत्साम्यकृतमारोग्यं रोगो वृद्धिक्षयात्मकः।

अथ शिराः-

चत्वारिंशन्मूलशिरा वातपित्तकफासृजाम् ॥ ११० ॥
पृथक् पृथग्दशाऽऽधारास्तासां सप्तशती भिदा।
स पञ्चसप्तत्यधिकशतं ता वायुधामगाः ॥ ११ ॥
विभिद्यन्ते प्रतानैः स्वैरेवमन्या अपि स्मृताः।
नीलाः शीता मरुत्पूर्णाः शिराः स्युर्मरुदाश्रयाः ॥ १२ ॥
पीतोष्णाः पित्तलास्तास्तु श्लेष्मलाः स्युः सिताः स्थिराः।
यकृत्प्लीह्नोरक्तवहाः कृष्णात्युष्णारुणारुणाः ॥ १३ ॥
प्राप्नुवन्त्यभितो देहं नाभितः प्रसृताः शिराः।
प्रतानाः पद्मिनीकन्दाद्बिसादीनां यथा जलम् ॥ १४ ॥
यथा द्रुपत्रसेवन्यः प्रसृताः स्युः समन्ततः।
तथा शिराप्रतानास्तु प्रसरन्त्यत्र वर्ष्मणि ॥ १५ ॥
यथा बिसमृणालानि विवर्धन्ते समन्ततः।
भूमौ पङ्कोदकस्थानि तथा मांसे शिराद्रुपः ॥ १६ ॥

अथ स्नायवः-

स्नायवो बन्धनानि स्युर्देहे मांसास्थिमेदसाम्।
मेदसः स्नेहमादाय शिरा स्थूला भवेद्यदा ॥ १७ ॥
तदा स्नायुत्वमाप्नोति तासां नवशती भिदा।
शाखासु षट्शती तासां ग्रीवादौ सप्ततिर्मता ॥ १८ ॥
कोष्ठगास्त्रिंशदधिकं द्विशतं स्नायवः स्मृताः।

अथ कण्डराः-

अतिस्थूलाः स्नायवस्तु कण्डराः कण्डनक्षमाः ॥ १९ ॥
सर्वदेहक्रियाधाराः स्युः स्तम्भाः सद्मनामिव।
कण्डराः षोडश ख्यातास्तत्र शाखासु ताश्चतुः ॥ १२० ॥
पक्वामाशययोश्चापि चतस्रो बस्तिगाश्चतुः।
उरःशिरःपृष्ठपार्श्वद्वंद्वेऽपि च चतुर्मताः ॥ २१ ॥

अथ धमन्यः-

चतुर्विंशतिराख्याता धमन्यो रसवाहिकाः।
नाभेरूर्ध्वं दशाधस्ताद्दश च प्रसरन्ति ताः ॥ २२ ॥

द्वे द्वे तिर्यगथ व्यस्याः प्रत्येकं प्रभवन्ति ताः ।
पार्श्वपृष्ठोदरस्कन्धग्रीवोरो बाहुशीर्षकम् ॥ २३ ॥
दधत्यूर्ध्वगतास्तत्राधो याताः सक्थिनी अपि ।
पक्वाशयकटीवस्तिविण्मूत्रगुदमेढ्रकम् ॥ २४ ॥
तिर्यग्गतास्त्वसंख्येयशाखा बध्नन्त्यधो वपुः ।
अन्तर्बहिश्च दधति रसं स्वेदं च पुष्टये ॥ २५ ॥

अथ पेश्यः—

पेश्यः पञ्च शतानि स्युस्तासां शाखाचतुष्टये ।
चतुःशत्यथ कोष्ठेषु षट्षष्टिः समुदाहृताः ॥ २६ ॥
ग्रीवादौ तु चतुस्त्रिंशत्स्त्रीणां ता विंशताधिकाः(?)।
स्तनयोर्दश पेश्यः स्युरपत्यपथगाश्चतुः ॥ २७ ॥
तिस्रो जरायोस्तिस्रस्तु गर्भच्छिद्रसमाश्रिताः ।
मांसपेश्यो बलाय स्युरवष्टम्भाय देहिनाम् ॥ २८ ॥

अथास्थीनि—

अस्थीनि त्रिशतानि स्युस्तत्र शाखाचतुष्टये ।
सविंशतिशतं तानि शतं सप्तदशाधिकम् ॥ २९ ॥
श्रोण्यादावथ कण्ठादौ त्रिषष्टिस्तानि पञ्चधा ।
कपालरुचकौ चैव तरुणो वलयं तथा ॥ १३० ॥
नलकश्चेति नामानि तेषां भेदा अनेकशः ।
इत्यस्थीनि ॥

अथ संधयः—

संधयश्च द्विधा प्रोक्ताश्चेष्टावन्तश्च सुस्थिराः ॥ ३१ ॥
शाखासु हन्वोः कट्यां च चेष्टावन्तस्तु संधयः ।
शेषास्तु संधयः सर्वे विज्ञेयाः स्युः स्थिरा बुधैः ॥ ३२ ॥
दशाधिकं तु द्विशतं संधीनामिह सर्वशः ।
शाखासु तेऽष्टषष्टिः स्युरूनषष्टिस्तु कोष्ठगाः ॥ ३३ ॥
ग्रीवादौ तु अशीतिस्ते सर्वे कीकससंश्रिताः ।
इति संधयः ॥

अथ रन्ध्राणि—

नृदेहे दश रन्ध्राणि नारीदेहे त्रयोदश ॥ ३४ ॥

नासानयनकर्णानां द्वे द्वे रन्ध्रे प्रकीर्तिते ।
मेहनापानवक्त्राणामेकैकं रन्ध्रमुच्यते ॥ ३५ ॥
दशमं मस्तके प्रोक्तं रन्ध्राणीति नृणां विदुः ।
स्त्रीणां त्रीण्यधिकानि स्युः स्तनयोर्गर्भवर्त्मनि ॥ ३६ ॥
सूक्ष्मच्छिद्राणि चान्यानि मतानि त्वचि जन्मिनाम् ।
इति रन्ध्राणि ॥

## अथ स्रोतांसि—

प्राणान्नरसरक्ताम्बुपललार्तवरेतसाम् ॥ ३७ ॥
मेदोमूत्रमलादीनां स्रोतांसि भिषजो जगुः ।
इति स्रोतांसि ॥
नृणां प्रकृतयः सप्त पृथग्द्वंद्वाखिलैर्मलैः ॥ ३८ ॥
दोषलिङ्गेन भिषजा विज्ञेयास्ता यथाक्रमम् ।

## उक्तं च सुश्रुते—

अधृतिरदृढसौहृदः कृतघ्नः कृशपरुषो धमनी ततः प्रलापी ।
द्रुतगतिरटनोऽनवस्थितात्मा वियति च गच्छति संभ्रमेण सुप्तः ॥३९॥
अव्यवस्थितमतिश्चलदृष्टिर्मन्दरत्नधनसंचयमित्रः ।
किंचिदेव विलपत्यनिबद्धं मारुतप्रकृतिरेष मनुष्यः ॥ १४० ॥

मेधावी निपुणमतिर्विगृह्यवक्ता
तेजस्वी समितिषु दुर्निवारवीर्यः ।
सुप्तः सन्कनकपलाशकर्णिकारा-
न्संपश्येदपि च हुताशविद्युदुल्काः ॥ ४१ ॥

न भयात्प्रणमेदनतेष्वमृदुः
प्रणतेष्वपि सान्त्वनदानपरः ।
भवतीह सदा व्यथितास्यगतिः
स भवेदिह पित्तकृतप्रकृतिः ॥ ४२ ॥

शुक्लाक्षः स्थिरकुटिलालिनीलकेशो
लक्ष्मीवाञ्जलदमृदङ्गसिंहघोषः ।
सुप्तः सन्सकमलहंसचक्रवाका-
न्संपश्येदपि च जलाशयान्मनोज्ञान् ॥ ४३ ॥

रक्तान्तनेत्रः सुविभक्तगात्रः
स्निग्धच्छविः सत्त्वगुणोपपन्नः ।
क्लेशक्षमो मानयिता गुरूणां
ज्ञेयो बलासप्रकृतिर्मनुष्यः ॥ ४४ ॥
द्वयोर्वा तिसृणां वाऽपि प्रकृतीनां तु लक्षणैः ।
ज्ञात्वा संसर्गजा वैद्यः प्रकृतीरभिदर्शयेत् ॥ ४५ ॥
विषजातो यथा कीटो न विषेण विपद्यते ।
तद्वत्प्रकृतयो मर्त्यं शक्नुवन्ति न बाधितुम् ॥ ४६ ॥
इति प्रकृतयः ।
शिराः स्रोतांसि धमनी मर्माण्यपि विशेषतः ।
शस्त्रादिभिः परिहरेद्यदि जीवितुमिच्छति ॥ ४७ ॥

अथ मर्माणि—

अष्टौ स्युरस्थिमर्माणि संधिमर्माणि विंशतिः ।
शिरामर्माण्येकचत्वारिंशदेकादशैव तु ॥ ४८ ॥
मांसमर्माण्यथ स्नायुमर्मणां सप्तविंशतिः ।
एवं सप्तोत्तरं मर्मशतं धन्वन्तरिर्जगौ ॥ ४९ ॥
मर्माणि जीवाधाराणि प्रायेण मुनयो जगुः ।
अतस्तेषु हता विद्धा दग्धाः स्युर्दुःखिता नराः ॥ १५० ॥

तत्रास्थिमर्माणि—

त्रिकचक्रे पृष्ठवंशमुभयत्रास्थिमर्मणि ।
नाम्नांसफलके अर्धाङ्गुले वैकल्यकारिणि ॥ ५१ ॥
श्रोण्योरुपर्युभयतः पृष्ठवंशस्य संनिधौ ।
कटीकतरुणे तद्वत्सद्योघ्ने अस्थिमर्मणि ॥ ५२ ॥
आशयाच्छादनावन्तरुपरि श्रोणिकाण्डयोः ।
सद्योघ्ने पार्श्वसंबद्धौ नितम्बावस्थिमर्मणि ॥ ५३ ॥
अपाङ्गकर्णयोर्मध्ये शङ्खौ द्वावस्थिमर्मणी ।
अर्धाङ्गुलमिते तत्र हतः सद्यो विपद्यते ॥ ५४ ॥

अथ संधिमर्माणि—

जंघोर्वोस्त्र्यङ्गुले मध्ये जानुनी संधिमर्मणी ।
हतस्तत्राऽऽमयान्मर्त्यो वैकल्यं खञ्जतामपि ॥ ५५ ॥

मध्यगी भुजयोः पश्चात्कूर्परौ संधिमर्मणी ।
एकाङ्गुलमिते तत्र हतो वैकल्यमृच्छति ॥ ५६ ॥
शीर्षस्यान्तः सिरासंधिरुपर्यावर्तलक्षणः ।
नामतोऽधिपतिः संधिमर्मार्धाङ्गुलमाशुहा ॥ ५७ ॥
निम्नयोस्तु भ्रुवोरूर्ध्वमावर्तौ संधिमर्मणी ।
अर्धाङ्गुलमिते तत्र हतो विकलतां व्रजेत् ॥ ५८ ॥
कृकाटिके शिरोग्रीवासंधाने संधिमर्मणी ।
अर्धाङ्गुलमिते तत्र हतः स्याच्चलमस्तकः ॥ ५९ ॥
जङ्घाचरणसंधाने गुल्फौ द्वौ संधिमर्मणी ।
अर्धाङ्गुलमिते तत्र हतः खाञ्ज्यं व्रजेन्नरः ॥ ६० ॥
पृष्ठवंशं तूभयतः किंचिन्निम्नौ कुकुन्दरौ ।
अर्धाङ्गुलौ बहिः पार्श्वजघनात्संधिमर्मणी ॥ ६१ ॥
पाणिप्रकोष्ठमध्यस्थावङ्गुलात्संधिमर्मणी ।
मणिबन्धौ तत्र हतः पक्षाघातमवाप्नुयात् ॥ ६२ ॥
संधयः पञ्च शिरसि विभक्ताश्चतुरङ्गुलाः ।
संधिमर्माण्यत्र हतः पक्षाघातमवाप्नुयात्॥ ६३ ॥

## अथ शिरामर्माणि—

कण्ठनाडीमुभयतः शिरामर्माणि ताश्चतुः ।
द्वे मर्म्ये द्वे तु नीले स्तस्तत्र विद्धो विपद्यते ॥ ६४ ॥
चतस्रो मातृकाख्यास्तु ग्रीवामुभयतः शिराः ।
वेदाङ्गुलाः शिरामर्माण्यत्रो सद्यो मृतिप्रदाः ॥ ६५ ॥
शिराणामक्षिरसनाकर्णघ्राणजुषां मिथः ।
योगाः शृङ्गाटकानि स्युः शिरामर्माणि पूर्ववत् ॥ ६६ ॥
नेत्राङ्गयोरपाङ्गाख्ये द्वे शिरामर्मणी स्मृते ।
अर्धाङ्गुलमिते तत्र हतो वैकल्यमाप्नुयात् ॥ ६७ ॥
स्थपनी तु भ्रुवोर्मध्ये शिरामर्मार्धमङ्गुलम् ।
विशल्यघ्नं मर्म तत्रोद्धृतशल्यो विपद्यते ॥ ६८ ॥
अन्तःस्रोतोद्वयान्तर्द्वे नासामुभयतः फणे ।
अर्धाङ्गुले मर्मणी स्तो घाताद्वैकल्यकारिणी ॥ ६९ ॥
स्तनमूले मर्मणी स्तः स्तनयोर्द्व्यङ्गुलादधः ।
समं ततः शिरे तत्र हतः कालेन नश्यति ॥ ७० ॥

ऊर्ध्वमन्यो रसोवातवहे नाड्यौ तु मर्मणी ।
अर्धाङ्गुले अपस्तम्भौ कालान्तरस्मृतिपदे ॥ ७१ ॥
पार्श्वद्वंद्वस्योपरिष्टादधस्तादन्तयोः शिरे ।
अर्धाङ्गुले अपालापौ मर्मणी चिरमारके ॥ ७२ ॥
हृदयं स्तनयोर्मध्यं चतुरङ्गुलसंमितम् ।
शिरामर्मात्र हननात्सद्य एव विपद्यते ॥ ७३ ॥
शिरामूलं शिरामर्म नाभिः स्याच्चतुरङ्गुला ।
समन्ततस्तत्र हतः सद्यो मृतिमवाप्नुयात् ॥ ७४ ॥
अधस्तात्पार्श्वयोर्मध्ये जघनस्योर्ध्वमल्पशः ।
पृष्ठगौ पार्श्वसंघाते तिर्यगूर्ध्वं तु मर्मणी ॥ ७५ ॥
स्तनमूलादुभयतः पृष्ठवंशमृजू शिरे ।
अर्धाङ्गुले बृहत्यौ स्तो मर्मणी चिरमारके ॥ ७६ ॥
ऊरुमध्योर्ध्वतोऽधस्ताद्वङ्क्षणस्याङ्गुलार्धतः ।
लोहिताक्षाणि मर्माणि घाताद्वैकल्यदानि हि ॥ ७७ ॥
ऊरुमध्ये शिरे ऊर्वोरङ्गुलैकमिते ऋजू ।
मर्मणी स्तस्तत्र हते वैकल्यमुपजायते ॥ ७८ ॥
इत्येकचत्वारिंशच्छिरामर्माणि ।

## अथैकादश मांसमर्माणि ।

अर्धाङ्गुलं नाम तलहृदयं चिरमारकम् ।
मांसमर्म चतुर्धा स्यात्पाणिपत्तलमध्यगम् ॥ ७९ ॥
त्रयोदशाङ्गुलादूर्ध्वं प्रतिपार्ष्णीन्द्रबस्तयः ।
मांसमर्माणि चत्वारि द्व्यङ्गुलान्मानजङ्घयोः ॥ ८० ॥
अधश्चुबुकयोरर्धाङ्गुलौ तु स्तनरोहितौ ।
कालान्तरप्राणहरे जायेते मांसमर्मणी ॥ ८१ ॥
सद्योघाति गुदो मांसमर्म स्याच्चतुरङ्गुलम् ।

## अथ सप्तविंशतिस्नायुमर्माणि ।

स्नायुमर्माणि चत्वारि स्युः श्रोण्योर्जानुसंधितः ॥ ८२ ॥
ऊर्ध्वं चोभयतो घाताद्व्यङ्गुला विकलत्वदाः ।
मुष्कवङ्क्षणयोर्मध्ये विटपौ स्नायुमर्मणी ॥ ८३ ॥

एकाङ्गुलमिते घाताद्वैकल्यं कुरुते भृशम् ।
द्वे वक्षःकक्षधरयोः स्नाय्वोः कक्षधरात्रिमे (?) ॥ ८४ ॥
मध्य एकाङ्गुले स्नायुमर्मणी दोःक्रियाहरे ।
क्षिप्रस्योर्ध्वं तूभयतोऽधश्च कूर्चाः क्षमाङ्गुलाः ॥ ८५ ॥
स्नायुमर्माणि चत्वारि हते पञ्चमणप्रदः ।
गुल्फसंधेरधः कूर्चशिरांस्युन्नयतश्चतुः ॥ ८६ ॥
स्नायुमर्माणि वैकल्यकृन्ति त्वेकाङ्गुलानि वै ।
बस्तिः स्यात्स्नायुमर्मात्र विद्धे ह्युभयतोऽश्मरीम् ॥ ८७ ॥
विना विपद्यते सद्यः स्नाविव्रणपथ वा भवेत् ।
पादाङ्गुष्ठाङ्गुलीमध्यं क्षिप्रमर्धाङ्गुलोन्मितम् ॥ ८८ ॥
स्नायुमर्म चतुर्धाऽत्र घातात्कालान्तरे मृतिः ।
अंसमध्यं त्र्यङ्गुलं तु स्नायुमर्मद्वयं हते ॥ ८९ ॥
तत्र स्यात्पक्षघाती वा किं वा निष्क्रियबाहुकः ।
विधुरे कर्णपृष्ठाधः संस्थिते स्नायुमर्मणी ॥ १९० ॥
किंचिन्निम्ने तत्र घाताद्विकलो बधिरत्वता ।
केशान्ते शङ्खयोरूर्ध्वमुत्क्षेपौ स्नायुमर्मणी ॥ ९१ ॥
अर्धाङ्गुले सशल्योऽत्र जीवेन्नोद्धृतशल्यकः ।
इति स्नायुमर्माणि ।
इति सप्तोत्तरं मर्मशतम् ।

## अथाऽऽहारादिलक्षणम् ।

उदानकोपादाहारसुस्थिरत्वाच्च यद्भवेत् ॥ ९२ ॥
पवनस्योर्ध्वगमनं तदुद्गारं प्रचक्षते ।
तमःकफाभ्यां निद्रा स्यान्मूर्छा पित्ततमोद्भवा ॥ ९३ ॥
रजःपित्तानिलैर्भ्रान्तिस्तन्द्रा श्लेष्मतमोनिलैः ।
ग्लानिरोजःक्षयाद्दुःखादजीर्णाच्च श्रमाद्भवेत् ॥ ९४ ॥
यः सामर्थ्येऽप्यनुत्साहस्तदालस्यमुदीर्यते ।
चैतन्यशिथिलत्वाच्च पीत्वैकं श्वासमुद्वहेत् ॥ ९५ ॥
विदीर्णवदनश्वासं जृम्भा सा कथ्यते बुधैः ।
उदानप्राणयोरूर्ध्वयोगान्मौलिकफस्रवात् ॥ ९६ ॥
शब्दः संजायते नस्तः क्षुतं तत्कथ्यते बुधैः ।

अथ स्वस्थसमधातोर्मज्जादिमानं वाग्भटात्—

मज्जा मेदो वसा मूत्रं पित्तश्लेष्मशकृदसृक् ॥ १७ ॥
रसो जलं च देहेऽस्मिन्नेकैकाञ्जलिवर्धितम् ।
पृथक्स्वप्रसृतं प्रोक्तमोजोमस्तिष्करेतसाम् ॥ १८ ॥
द्वावञ्जली तु स्तन्यस्य चत्वारो रजसस्त्रियाः ।
समधातोरिदं मानं विद्याद्वृद्धिक्षयान्विताः ॥ १९ ॥
शुक्रासृग्गर्भिणीभोज्यचेष्टागर्भाशयर्तुषु ।
यः स्याद्दोषोऽधिकस्तेन प्रकृतिः सप्तधोदिता ॥ २०० ॥

अथ वयोविचारः—

बाल्यमाषोडशाद्वर्षात्ततो मध्येऽधिसप्ततिः ।
वृद्धस्तदूर्ध्वं विज्ञेयं वयोमानमिति त्रिधा ॥ १ ॥

उक्तं च वाग्भटे—

वयस्त्वा षोडशाद्बाल्यं तत्र धात्विन्द्रियौजसाम् ।
वृद्धिरा सप्ततेर्मध्यं तत्रावृद्धिः परं क्षयः ॥ २ ॥
स्वं स्वं हस्तत्रयं सार्धं वपुः पात्रं सुखायुषोः ।

इति योगतरङ्गिण्यां शारीरं नाम द्वितीयस्तरङ्गः ॥ २ ॥

अथ तृतीयस्तरङ्गः ।

---

अथ परिभाषा ।

न मानेन विना युक्तिर्द्रव्याणां ज्ञायते क्वचित् ।
अतः प्रयोगकार्यार्थं मानमत्रोच्यते मया ॥ १ ॥
मानं च द्विविधं प्रोक्तं कालिङ्गं मागधं तथा ।
कालिङ्गान्मागधं श्रेष्ठमिति मानविदो विदुः ॥ २ ॥
त्रसरेणुर्बुधैः प्रोक्तस्त्रिंशता परमाणुभिः ।
त्रसरेणोस्तु पर्यायैर्नाम्ना वंशी निगद्यते ॥ ३ ॥
जालान्तरगतैः सूर्यकरैर्वंशी निगद्यते ।
षड्वंशीभिर्मरीचिः स्यात्ताभिः षड्भिश्च राजिका ॥ ४ ॥
तिसृभी राजिकाभिश्च सर्षपः प्रोच्यते बुधैः ।
यतोऽष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तच्चतुष्टयम् ॥ ५ ॥
षड्भिश्च रक्तिकाभिश्च माषको हेमधानकौ ।
माषैश्चतुर्भिः शाणः स्याद्धरणः स निगद्यते ॥ ६ ॥

टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते ।
क्षुद्रको वटकश्चैव द्रङ्क्षणः स निगद्यते ॥ ७ ॥
कोलद्वयं च कर्षः स्यात्स प्रोक्तः पाणिमानिका ।
अक्षं पिचुः पाणितलं किंचित्पाणिश्च तिन्दुकम् ॥ ८ ॥
बिडालपदकं चैव तथा षोडशिका मता ।
करमध्ये हंसपदं सुवर्णं कवलग्रहः ॥ ९ ॥
उदुम्बरश्च पर्यायैः कर्ष एव निगद्यते ।
स्यात्कर्षाभ्यामर्धपलं शुक्तिरष्टमिका मता ॥ १० ॥
शुक्तिभ्यां च पलं ज्ञेयं मुष्टिराम्रं चतुर्थिका ।
प्रकुञ्चः षोडशी बिल्वं पलमेवात्र कीर्त्यते ॥ ११ ॥
पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतं च निगद्यते ।
प्रसृतिभ्यामञ्जलिः स्यात्कुडवोऽर्धशरावकः ॥ १२ ॥
अर्धमानं च विज्ञेयं कुडवाभ्यां च मानिका ।
शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः ॥ १३ ॥
शरावाभ्यां भवेत्प्रस्थश्चतुःप्रस्थैस्तथाऽऽढकम् ।
भाजनं कंसपात्रं च चतुःषष्टिपलश्च सः ॥ १४ ॥
चतुर्भिराढकैर्द्रोणः कलशो नल्वणो मतः ।
उन्मानश्च घटो राशिर्द्रोणपर्यायसंज्ञकः ॥ १५ ॥
द्रोणाभ्यां सूर्पकुम्भौ च चतुःषष्टिशरावकः ।
सूर्पाभ्यां च भवेद्द्रोणी वाहो गोणी च सा स्मृता ॥ १६ ॥
गोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः ।
चतुःसहस्रपलिका षण्णवत्यधिका च सा ॥ १७ ॥
पलानां द्विसहस्रेण भार एकः प्रकीर्तितः ।
तुला पलशतं ज्ञेयं सर्वत्रैवैष निश्चयः ॥ १८ ॥
माषटङ्काक्षबिल्वानि कुडवः प्रस्थमाढकम् ।
राशिर्गोणी खारिकेति यथोत्तरचतुर्गुणाः ॥ १९ ॥

उक्तं च—

सिद्धार्थैरष्टसंख्यैर्यव इह गदितस्तैश्चतुर्भिश्च गुञ्जा
षड्भिस्ताभिश्च माषो जलधिभिरपि तैष्टङ्कस्तौ च कोलः ।
कर्षः शुक्तिः पलं च प्रसृतिकुडवकौ मानिका प्रस्थकश्च
भाग्भ्यां द्वाभ्यां क्रमेण स्युरथ हरिकरैः प्रस्थकैराढकं स्यात् ॥ २० ॥

शाणस्तैः स्याच्चतुर्भिर्युगलमथ तयोः सूपकस्तौ च हस्त-
स्तद्वौ खारी तुला स्यात्पलशतमथ तद्विंशतिर्भार एकः ।
गुञ्जादिमानमारभ्य यावत्स्यात्कुडवस्थितिः ॥ २१ ॥
द्रवार्द्रशुष्कद्रव्याणां तावन्मानं च संस्मृतम् ।
प्रस्थादिमानमारभ्य द्विगुणं तु द्रवार्द्रयोः ॥ २२ ॥
मानं तथा तुलायास्तु द्विगुणं न क्वचित्स्मृतम् ।
मृद्वृक्षवेणुलोहादेर्भाण्डं यच्चतुरङ्गुलम् ॥ २३ ॥
विस्तीर्णं च तथोच्चं च तन्मानं कुडवं वदेत् ।
यदीपधं तु प्रथमं यस्य योगस्य कथ्यते ॥ २४ ॥
तन्नाम्नैव स योगो हि कथ्यतेऽत्र विनिश्चयः ।
त्रुणिः स्यादणुभिः षड्भिस्ताः षड्लिक्षा समीरिता ॥२५॥
ताभिः षड्भिर्भवेद्यूका षड्यूकाभी रजात्तमम् ।
जालान्तरगतैः सूर्यकरैर्वंशी विलोक्यते ॥ २६ ॥
तस्या नामान्तरं ज्ञेयं त्रसरेणू रजस्तथा ।

इति मागधपरिभाषा ॥

अथ कलिङ्गपरिभाषा—

यवो द्वादशभिर्गौरसर्षपैः प्रोच्यते बुधैः ॥ २७ ॥
यवद्वयेन गुञ्जा स्यात्त्रिगुञ्जो वल्ल उच्यते ।
माषो गुञ्जाभिरष्टाभिः सप्तभिर्वा भवेत्क्वचित् ॥ २८ ॥
स्याच्चतुर्माषकैः शाणः स निष्कष्टङ्क एव च ।
गद्याणो माषकैः षड्भिः कर्षः स्याद्दशमाषकः ॥ २९ ॥
चतुष्कर्षैः पलं प्रोक्तं दशशाणमितं बुधैः ।
चतुष्पलैश्च कुडवं प्रस्थाद्याः पूर्ववन्मताः ॥ ३० ॥

इति शार्ङ्गधरात् ॥

अथ कृष्णात्रेयात्—

रजांसि त्रीणि सिकता ताभिः षोडशभिस्तथा ।
सर्षपश्च भवेद्गौरस्ते चाष्टौ तण्डुलं विदुः ॥ ३१ ॥
तद्द्वयं धान्यकं माषं तत्त्रयं रक्तिका मता ।
रक्तिकात्रितयेनापि वल्लः प्रोक्तो विशारदैः ॥ ३२ ॥
चतुर्भिश्चाण्डिका तैः स्यादेवं मानपरम्परा ।

तथोक्तं मतिमुकुरे—

द्विचत्वारिंशता माषैरष्टादशकवर्धकैः ॥ ३३ ॥
पलं द्वादशवल्लं स्याद्गुञ्जाषट्कसमन्वितैः ॥

इति योगतरङ्गिण्यां मानपरिभाषाकथनं नाम तृतीयस्तरङ्गः ॥ ३ ॥

---

अथ चतुर्थस्तरङ्गः ।

---

अथ युक्तायुक्तकथनम् ।

नवान्येव हि योज्यानि द्रव्याण्यखिलकर्मसु ।
विना विडङ्गकृष्णाभ्यां गुडधान्याज्यमाक्षिकैः ॥ १ ॥
गुडूची कुटजो वासा कूष्माण्डं च शतावरी ।
अश्वगन्धा सहचरा शतपुष्पा प्रसारिणी ॥ २ ॥
प्रयोक्तव्याः सदैवाऽऽर्द्रा द्विगुणा नैव कारयेत् ।
शुष्कं नवीनं यद्द्रव्यं योज्यं सकलकर्मसु ॥ ३ ॥
आर्द्रं च द्विगुणं युञ्ज्यादेष सर्वत्र निश्चयः ।
कालेऽनुक्ते प्रभातं स्यादङ्गेऽनुक्ते जटा भवेत् ॥ ४ ॥
भागेऽनुक्ते च साम्यं स्यात्पात्रेऽनुक्ते च मृन्मयम् ।
एकमप्यौषधं योगे यस्मिन्यत्पुनरुच्यते ॥ ५ ॥
मानतो द्विगुणं प्रोक्तं तद्द्रव्यं तत्त्वदर्शिभिः ।
चूर्णस्नेहासवा लेहाः प्रायशश्चन्दनान्विताः ॥ ६ ॥
कषायलेपयोः प्रायो युज्यते रक्तचन्दनम् ।
गुणहीनं भवेद्वर्षादूर्ध्वं तद्रूपमौषधम् ॥ ७ ॥
मासद्वयात्तथा चूर्णं हीनवीर्यत्वमाप्नुयात् ।
हीनत्वं गुटिकालेहौ लभेते वत्सरात्परम् ॥ ८ ॥
हीनाः स्युर्घृततैलाद्याश्चतुर्मासाधिकास्तथा ।
ओषध्यो लघुपाकाः स्युर्निर्वीर्या वत्सरात्परम् ॥ ९ ॥
पुराणाः स्युर्गुणैर्युक्ता आसवा धातवो रसाः ।
व्याधेरयुक्तं यद्द्रव्यं गणोक्तमपि तत्त्यजेत् ॥ १० ॥
अनुक्तमपि युक्तं हि योजयेत्तत्र तद्बुधः

शार्ङ्गधरात्—

वज्राभावे तु वैक्रान्तं स्वर्णाभावे तु माक्षिकम् ॥ ११ ॥

हेममाक्षिकजं सत्त्वं मृतहेमसमं गुणैः ।
विमला माक्षिकं ज्ञेयं ध्रुवं रजतवद्गुणैः ॥ १२ ॥
मुक्ताभावे क्षिपेन्नूनं मुक्ताशुक्तिं च तद्गुणाम् ।
अभावेऽभ्रकसत्त्वस्य कान्तलोहं प्रकल्पयेत् ॥ १३ ॥
कान्ताभावे तीक्ष्णलोहमित्युक्तं रसदर्पणे ।
अभावे मधुनो योज्यो गुडो जीर्णश्च तद्गुणः ॥ १४ ॥
सिताभावे भवेत्खण्डं शाल्यभावे च षष्टिकाः ।
असंभवे तु द्राक्षायाः प्रदेयं काश्मरीफलम् ॥ १५ ॥
वृक्षाम्लं न भवेद्यत्र दाडिमाम्लं प्रयोजयेत् ।
वेतसाम्लस्य चाभावे ह्यरिमन्थाम्लमादिशेत् ॥ १६ ॥
अभावे चन्दनस्यापि मेलयेद्रक्तचन्दनम् ।
अभावे सति पत्राणां रसादेर्भावनाविधौ ॥ १७ ॥
विषमुष्टिकपायेण पञ्चगुणा भावना भवेत् ।

गोरक्षमतात् ।

मेदाजीवककाकोलीद्वंद्वाभावे प्रयोजयेत् ॥ १८ ॥
यष्टीविदार्यश्वगन्धाबलावाराहिका नवाः ।

वैद्यालंकारात् । अन्यत्राप्युक्तम्—

मेदाजीवककाकोली ऋद्धिद्वंद्वेऽसति क्षिपेत् ॥ १९ ॥
वरीविदार्यश्वगन्धावाराहीः क्रमशो भिषक् ।
फलमाममपुष्टं च त्यजेद्बिल्वादृते सदा ॥ २० ॥
द्राक्षाबिल्वशिवादीनां फलं शुष्कं गुणोत्तरम् ।
आदिशब्दाद्विभीतकपरूषकादेरपि ।

गोरक्षमतात्—

भल्लातकासहत्वे तु प्रदेयं रक्तचन्दनम् ॥ २१ ॥
तुगाभावे प्रदातव्या त्वक्षीरी तद्गुणा चतुः ।
अन्तः संमार्जने मोदास्थाने योज्या यवानिका ॥ २२ ॥
बहिः संमार्जने मोदा ह्यजमोदैव गृह्यते ।
अन्तः संमार्जने योज्यं वचास्थाने कुलिञ्जनम् ॥ २३ ॥
बहिः संमार्जने सैव प्रयोक्तव्या मनीषिभिः ।
कृष्णजीरकयोगो न कर्तव्यो भक्ष्यभेषजे ॥ २४ ॥

तस्य स्थाने विधातव्यो जीरकः कुशलैः सदा ।
सारश्च खदिरादीनां निम्बादीनां त्वचः स्मृताः ॥ २५ ॥
फलं च दाडिमादीनां पटोलादेर्दलं मतम् ।

इति भद्रशौनकात् ॥

क्वचित्पत्रं क्वचिन्मूलं क्वचित्पुष्पं क्वचित्फलम् ॥ २६ ॥
क्वचिद्बीजं क्वचिद्वल्कं क्वचित्काष्ठं क्वचिज्जलम् ।
क्वचिन्नालं योजनीयं क्षीरं क्षारं क्वचित्क्वचित् ॥ २७ ॥
एकैकस्यौषधस्यैवं यथायोगं प्रयोजयेत् ॥ २८ ॥
अर्धः सिद्धरसस्य तैलघृतयोर्लोहस्य भागोऽष्टमः
संसिद्धाखिललोहचूर्णगुटिकादीनां तथा सप्तमः ॥
यो दीयेत भिषग्वराय सरुजा निर्दिश्य धन्वन्तरिं
देहारोग्यसुखाप्तये निगदितो भागः स धन्वन्तरेः ॥ २९ ॥
क्रीतद्रव्यस्य भैषज्ये भागश्चैकादशो हि यः ॥ ३० ॥
क्रीतस्य भेषजस्यापि भागश्चैकादशो मतः ।
वणिग्भ्यो गृह्यते वैद्यै रुद्रभागः स कथ्यते ॥ ३१ ॥
गृहीत्वाऽधिकमीशांशाद्योऽसमीचीनमौषधम् ।
दापयेल्लुब्धहृद्वैद्यः स स्याद्विश्वासघातकः ॥ ३२ ॥

इति वैद्यालंकारात् ॥

इति योगतरङ्गिण्यां युक्तायुक्तकथनं नाम चतुर्थस्तरङ्गः ॥ ४ ॥

---

अथ पञ्चमस्तरङ्गः ।

---

## अथ स्नेहपानविधिः ।

स्नेहाद्या अथ कथ्यन्ते योगा रोगोपघातकाः ।
स्नेहश्चतुर्विधः प्रोक्तो घृतं तैलं वसा तथा ॥ १ ॥
मज्जा च तं पिबेन्मर्त्यः किंचिदभ्युदिते रवौ ।
स्थावरो जङ्गमश्चैव द्वियोनिः स्नेह उच्यते ॥ २ ॥
तिलतैलं स्थावरेषु जङ्गमेषु घृतं वरम् ।
द्वाभ्यां त्रिभिश्चतुर्भिस्तैर्यमकस्त्रिवृतो महान् ॥ ३ ॥
पिबेत्त्र्यहं चतुरहं पञ्चाहं षडहं तथा ।
सप्तरात्रात्परं स्नेहः सात्मी भवति सेवितः ॥ ४ ॥

(दोषकालाग्निवयसां बलं दृष्ट्वा प्रयोजयेत् ।
हीनां च मध्यमां ज्येष्ठां मात्रां स्नेहस्य बुद्धिमान् ॥
अमात्रया तथाऽकाले मिथ्याहारविहारतः) ।
स्नेहः करोति शोफार्शस्तन्द्रानिद्राविसंज्ञताः ।
देया दीप्ताग्नये मात्रा स्नेहस्य पलसंमिता ॥ ५ ॥
मध्यमा च त्रिकर्षा स्याज्जघन्या च द्विकार्षिकी ।
केवलं पैत्तिके सर्पिर्वातिके सैन्धवान्वितम् ॥ ६ ॥
पेयं बहुकफे वाऽपि व्योपक्षारसमन्वितम् ।
रूक्षक्षतविषार्तानां वातपित्तविकारिणाम् ॥ ७ ॥
हीनमेधास्मृतीनां च सर्पिष्पानं प्रशस्यते ।
कृमिकोष्ठानिलाविष्टाः प्रवृद्धकफमेदसः ॥ ८ ॥
पिबेयुस्तैलसात्म्या ये तैलं दार्ढ्यार्थिनश्च ये ।
व्यायामकर्षिणः शुष्का रेतोरिक्ता महारुजः ॥ ९ ॥
महाग्निमारुतप्राणा वसायोग्या नरा मताः ।
क्रूराशयाः क्लेशसहा वातार्ता दीप्तवह्नयः ॥ १० ॥
मज्जानमापिबेयुस्ते सर्पिर्वा सर्वतो हितम् ।
शीतकाले दिवा स्नेहमुष्णकाले पिबेन्निशि ॥ ११ ॥
वातपित्ताधिके रात्रौ वातश्लेष्माधिके दिवा ।
नस्याभ्यञ्जनगण्डूषे मूर्धकर्णाक्षितर्पणे ॥ १२ ॥
तैलं घृतं वा युञ्जीत दृष्ट्वा दोषबलाबलम् ।
घृते कोष्णं जलं पेयं तैले यूषः प्रशस्यते ॥ १३ ॥
वसामज्जाविधौ मण्डमनुपानं सुखावहम् ।
वृद्धबालकृशा रूक्षाः क्षीणास्राः क्षीणरेतसः ॥ १४ ॥
वातार्तास्तिमिरार्ता ये तेषां स्नेहनमुत्तमम् ।
रूक्षस्य स्नेहनं स्नेहैरतिस्निग्धस्य रूक्षणम् ॥ १५ ॥
भक्तद्वेषो मुखस्रावो गुदे दाहः प्रवाहिका ।
तन्द्रातीसारपाण्डुत्वं भृशं स्निग्धस्य लक्षणम् ॥ १६ ॥
श्यामाकचणकाद्यैश्च भक्तपिण्याकसक्तुभिः ।
रूक्षणं [illegible]तैर्यथादोषं यथाबलम् ॥ १७ ॥
स्नेहे [illegible]शीतवेगाघातप्रजागरान् ।
[illegible] रूक्षान्नं च विवर्जयेत् ॥

इति स्नेहपानविधिः शार्ङ्गधरात् ।

अथ स्नेहपाकविधिः ।

विघ्नेशक्षेत्रपालौ वटुकमपि शुभे वासरे पूजयित्वा
तैलस्याऽऽज्यस्य किं वा रचयतु निपुणं संस्कृतिं संभवापात् ।
आदौ वह्निं प्रदद्याद्यदवधि शनकैः फेनशब्दव्ययः स्या-
त्पश्चान्मृत्पिण्डकैस्तद्दशभिरलघुभिर्नातिपीनैर्विशोध्यम् ॥१९॥
एकं संस्थाप्य घस्रं विधिवदथ पचेद्वासराद्ग्निमान्द्यं
क्राथैर्दुग्धैश्च कल्कैस्तदनुसुरभिभिः शोधनीयैर्विशुद्धैः ।
कस्तूरीचन्दनं ग्लौर्जलजलदसटीरक्तपाटीरकुष्ठ-
त्वङ्मञ्जिष्ठातुरुष्कागुरुनखरदलपातकक्कोलमुख्यैः ॥ २० ॥

सारसंग्रहात् ।

तैलं कृत्वा कटाहे दृढतरविमले मन्दमन्दानलैस्त-
त्पक्वं निष्फेनभावं गतमिह हि यदा शैत्यभावं समेत्य ।
मञ्जिष्ठारात्रिलोध्रैर्जलधरतनुकैः सामलैः साक्षपथ्यैः
सूचीपुष्पाङ्घ्रिनीरैरुपहितमथितैस्तैलगन्धं जहाति ॥२१॥
तैलस्येन्दुकलांशकैकविकसाभागास्तु तस्यांशको
ये चान्ये त्रिफला पयोदरजनीह्रीबेरलोध्रादयः ॥
सूचीपुष्पवटावरोहनलिका तस्याश्च पादांशका
दुर्गन्धं विनिहृत्य तैलमरुणं सौरभ्यमाकुर्वते ॥ २२ ॥
आम्रजम्बूकपित्थानां बीजपूरकबिल्वयोः ॥
शोधनं तिलतैलस्य पल्लवानां तु पञ्चकम् ॥ २३ ॥
जलस्नेहौषधीनां च प्रमाणं यत्र नोदितम् ।
तत्र स्यादौषधात्स्नेहः स्नेहात्क्वाथश्चतुर्गुणः ॥ २४ ॥
स्नेहाच्चतुर्गुणं क्वाथ्यं सदा च स्नेहसंविधौ ।
जलं चतुर्गुणं दत्त्वा क्वाथः क्वाथ्यसमो मतः ॥ २५ ॥

उक्तं च चरकात्—

कल्काच्चतुर्गुणः स्नेहः स्नेहात्क्वाथ्यं चतुर्गुणम् ।
क्वाथ्याच्चतुर्गुणं वारि क्वाथः क्वाथ्यसमो मतः ॥ २६ ॥

---

१ ख. °धयेत्तैर्विशोध्यम् । क°। २ ख. °दलभैरकाकी°। ३ ख. °भगोऽपि मूर्च्छाविधौ ये। ४ ख. °ध्राब्दिवत: सू°।

मृदौ चतुर्गुणं देयं कठिनेऽष्टगुणं जलम् ।
कठिनात्कठिने द्रव्ये वारि षोडशभागकम् ॥ २७ ॥
कर्षादितः पलं यावद्वारि षोडशकं क्षिपेत् ।
तदूर्ध्वं कुडवं यावत्क्षिपेदष्टगुणं जलम् ॥ २८ ॥
प्रस्थादितः क्षिपेन्नीरं खारी यावच्चतुर्गुणम् ।
अम्बुक्वाथरसैर्यत्र पृथक्स्नेहस्य साधनम् ॥ २९ ॥
कल्कस्यांशं तत्र दद्याच्चतुर्थं पञ्चमष्टमम् ।
दुग्धे दधिरसे तक्रे कल्को देयोऽष्टमांशकः ॥ ३० ॥
कल्कस्य सम्यक्पाकार्थं तोयमत्र चतुर्गुणम् ।
द्रव्याणि यत्र स्नेहेषु पञ्चादीनि भवन्ति हि ॥ ३१ ॥
तत्र स्नेहसमान्याहुर्यथापूर्वं चतुर्गुणम् ।
द्रव्येण केवलेनैव स्नेहपाको भवेद्यदि ॥ ३२ ॥
तत्राम्बुपिष्टः कल्कः स्याज्जलं चात्र चतुर्गुणम् ।
क्वाथेन केवलेनैव पाको यत्रेरितः क्वचित् ॥ ३३ ॥
क्वाथ्यद्रव्यस्य कल्कोऽपि तत्र स्नेहे प्रयुज्यते ।
शुष्ककल्कस्तु यः स्नेहस्तत्र तोयं चतुर्गुणम् ॥ ३४ ॥
स्नेहात्स्नेहाष्टमांशस्य शुष्ककल्कः प्रयुज्यते ।
स्नेहकल्को यदाऽङ्गुल्या वर्तितो वर्तिवद्भवेत् ॥ ३५ ॥
वह्नौ क्षिप्ते च नो शब्दस्तदा सिद्धं विनिर्दिशेत् ।

उक्तं च—

शब्दव्युपरमे प्राप्ते फेनस्योपशमे तथा ॥ ३६ ॥
गन्धवर्णरसादीनां संपत्तौ सिद्धमादिशेत् ।
घृतस्यैवं विपक्वस्य संसिद्धं कुशलो भिषक् ॥ ३७ ॥
फेनोद्गमे च तैलस्य शेषं घृतवदादिशेत् ।

योगरत्नावलितः—

अकल्कयोग्यद्रव्याणां कठिनानां विचारतः ॥ ३८ ॥
क्वाथो विधीयतेऽन्येषां कल्क एव भिषग्वरैः ।

वैद्यालंकारात्—

आदौ संचारयेत्क्वाथं दुग्धं कल्कं ततः क्रमात् ॥ ३९ ॥
ततोऽन्यत्सुरभि द्रव्यमेष स्नेहविधौ क्रमः ।

मतिमुकुरात्—

क्षीरं स्नेहसमं दद्यादनुक्ते स्नेहसंविधौ ॥ ४० ॥
शक्रद्रसं मांसरसं मूत्रं सौवीरकादिकम् ।
स्नेहादष्टगुणं देयं जलं च द्विगुणं क्षिपेत् ॥ ४१ ॥
अर्धावशिष्टः कर्तव्यः पाको गन्धाम्बुकं ततः ।
चन्द्रकस्तूरिकादीनां सहस्रांशं प्रयोजयेत् ॥ ४२ ॥
पुष्पाणि गन्धनिर्यासं सिद्धे शीतेऽवतारिते ।

चरकात्—

ईषत्पिष्टो भवेत्कल्कः क्राथोऽग्निक्कथितो मतः ॥ ४३ ॥
स्नेहपाकस्त्रिधा प्रोक्तो मृदुर्मध्यः खरस्तथा ।
ईषत्सरसकल्कस्तु स्नेहपाको मृदुर्भवेत् ॥ ४४ ॥
मध्यपाकस्य संसिद्धिः कल्के नीरसकोमले ।
ईषत्कठिनकल्कश्च स्नेहपाको भवेत्खरः ॥ ४५ ॥
तदूर्ध्वं दग्धपाकः स्याद्दाहकृन्निष्प्रयोजनः ।
आमपाकश्च निर्वीर्यो वह्निमान्द्यकरश्च सः ॥ ४६ ॥
नस्यार्थं स्यान्मृदुः पाको मध्यमः सर्वकर्मसु ।
अभ्यङ्गार्थे खरः प्रोक्तो युञ्ज्यादेवं यथोचितम् ॥ ४७ ॥
घृततैलगुडादींस्तु साधयेन्नैकवासरे ।
प्रकुर्वन्त्युषिता ह्येते विशेषाद्गुणसंचयम् ॥ ४८ ॥
शार्ङ्गधरात् ।

इति योगतरङ्गिण्यां स्नेहपानपाकविधिर्नाम पञ्चमस्तरङ्गः ॥ ५ ॥

---

अथ षष्ठस्तरङ्गः ।

---

अथ स्वेदविधिः—

स्वेदश्चतुर्विधः प्रोक्तस्तापोष्मस्वेदसंज्ञितौ ।
उपनाहो द्रवः स्वेदः सर्वे वातार्तिहारिणः ॥ १ ॥
स्वेदौ तापोष्मजौ प्रायः श्लेष्मघ्नौ समुदीरितौ ।
उपनाहस्तु वातघ्नः पित्तसंङ्गे द्रवो हितः ॥ २ ॥
महाबले महाव्याधौ शीते स्वेदो महान्मतः ।
दुर्बले दुर्बलः स्वेदो मध्ये मध्यतमो मतः ॥ ३ ॥

(+ येषां नस्यं प्रदातव्यं बस्तिश्चापि हि देहिनाम् ।
शोधनीयाश्च ये केचित्पूर्वं स्वेद्याश्च ते मताः ॥ ४ ॥ )
स्वेद्या ऊर्ध्वं भगो प्लीहगर्भदर्पर्शसस्तथा ।
अश्मर्या चाऽऽतुरो जन्तुः शमयेच्छस्त्रकर्मणा ॥ ५ ॥
पश्चात्स्वेद्यो हृते शल्ये मूढगर्भगदे तथा ।
काले प्रसूताऽकाले वा पश्चात्स्वेद्या नितम्बिनी ॥ ६ ॥
सर्वान्स्वेदान्निपाते च जीर्णाहारे च कारयेत् ।
स्विद्यमानशरीरस्य हृदयं शीतलैः स्पृशेत् ॥ ७ ॥
स्नेहाभ्यक्तशरीरस्य शीतैराच्छाद्य चक्षुषी ।
अजीर्णी दुर्बलो मेही क्षतक्षीणः पिपासितः ॥ ८ ॥
अतीसारी रक्तपित्ती पाण्डुरोगी तथोदरी ।
मदार्तो गर्भिणी चैव न हि स्वेद्या विजानता ॥ ९ ॥
एतानपि मृदुस्वेदैः स्वेदसाध्यानुपाचरेत् ।
मृदुस्वेदं प्रयुञ्जीत तथा हृन्मुष्कदृष्टिषु ॥ १० ॥
अतिस्वेदात्संधिपीडा दाहस्तृष्णा क्लमो भ्रमः ।
पित्तासृक्पिटिकाकोपस्तत्र शीतैरुपाचरेत् ॥ ११ ॥
तेषु तापाभिधः स्वेदो वालुकावस्त्रपाणिभिः ।
प्रस्तरैरम्लसिक्तैश्च काये रल्लकवेष्टिते ॥ १२ ॥
अथ वा वातनिर्नाशिद्रवक्वाथरसादिभिः ।
उष्णैर्घटं पूरयित्वा पार्श्वे छिद्रं विधाय च ॥ १३ ॥
विमुद्याऽऽस्यं त्रिखण्डां च धातुजां काष्ठजामथ ।
षडङ्गुलास्यां गोपुच्छां नाडीं कुर्याद्विशुण्डिकाम् ॥ १४ ॥
सुखोपविष्टमभ्यक्तं गुरुप्रावरणावृतम् ।
हस्तिशुण्डिकया नाड्या स्वेदयेद्वातरोगिणम् ॥ १५ ॥
पुरुषायाममात्रां वा भूमिमुत्कीर्य खादिरैः ।
काष्ठैर्दग्ध्वा तथाऽभ्युक्ष्य क्षीरधान्याम्लवारिभिः ॥ १६ ॥
वातघ्नपत्रैराच्छाद्य शयानं स्वेदयेन्नरम् ।
एवं माषादिभिः स्विन्नैः शयाने स्वेदमाचरेत् ॥ १७ ॥
तथोपनाहस्वेदं च कुर्याद्वातहरौषधैः ।
प्रदिग्धदेहं वातार्तं क्षीरमांसरसान्वितैः ॥ १८ ॥

+ धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तके वर्तते ।

१ ख. °री । मदार्तो । २ °ये वल्लक° । ३ ख. °ज्याद्विहस्तिकाम् । सु° ।

अम्लपिष्टैः सलवणैः सुखोष्णैः स्नेहसंयुतैः ।
उपग्राम्यानूपमांसैर्जीवनीयगणेन च ॥ १९ ॥
दधिसौवीरकक्षीरैर्वीरतर्वादिना तथा ।
कुलित्थमाषगोधूमैरतसीतिलसर्षपैः ॥ २० ॥
शतपुष्पादेवदारुशेफालीस्थूलजीरकैः ।
एरण्डमूलबीजैश्च रास्नामूलकशिग्रुभिः ॥ २१ ॥
मिशिकृष्णाकुठेरैश्च लवणैरम्लसंयुतैः ।
प्रसारिण्यश्वगन्धाभ्यां बलया दशमूलकैः ॥ २२ ॥
गुडूच्या वानरीबीजैर्यथालाभं समाहृतैः
क्षुण्णैः स्विन्नैश्च वस्त्रेण बद्धैः संस्वेदयेन्नरम् ॥ २३ ॥
महाशाल्वणसंज्ञोऽयं योगः सर्वानिलार्तिहृत् ।
द्रवस्वेदस्तु वातघ्नद्रव्यक्वाथेन पूरितम् ॥ २४ ॥
कटाहं कोष्णकं चापि सूपविष्टोऽवगाहयेत् ।
नाभेः षडङ्गुलं यावन्मग्नः क्वाथस्य धारया ॥ २५ ॥
कोष्णया स्कन्धयोः सिक्तो भवेत्स्निग्धतनुर्नरः ।
एवं तैलेन दुग्धेन सर्पिषा स्वेदयेन्नरम् ॥ २६ ॥
एकान्तरे द्व्यन्तरे वा स्नेहो युक्तोऽवगाहने ।
शिरामुखै रोमकूपैर्धमनीभिश्च तर्पयेत् ॥ २७ ॥
शरीरे बलमाधत्ते युक्तः स्नेहोऽवगाहने ।
जलसिक्तस्य वर्धन्ते यथामूलेऽङ्कुरास्तरोः ॥ २८ ॥
तथा धातुविवृद्धिर्हि स्नेहसिक्तस्य जायते ।
नातः परतरः कश्चिदुपायो वातनाशनः ॥ २९ ॥
कार्पासास्थिकुलित्थकातिलयवैर्माषातसीषष्टिका-
मुद्गैरण्डपुनर्नवायुगलकैर्धान्याम्लपिष्टैः समैः ।
स्वेदो भीहिमवो बुधैर्निगदितो वातामयानां हितो
हन्यात्पृष्ठगतां रुजं त्रिकगतां पार्श्वाङ्घ्रिकटयूरुजाम् ॥ २९ ॥
शीतशूलस्योपरमे स्तम्भगौरवनिग्रहे ।
दीप्तेऽग्नौ मार्दवे जाते स्वेदनाद्विरतिर्मता ॥ ३० ॥
इति योगरत्नावल्यां स्वेदविधिः ।
इति योगतरङ्गिण्यां स्वेदनविधिर्नाम षष्ठस्तरङ्गः ॥ ६ ॥

---

१ ख. छिन्नैः छिन्नैः छि° २ ख. °म्लपिष्टैः स°।

अथ सप्तमस्तरङ्गः ।

## अथ पञ्च कर्माणि—

वमनं रेचनं नस्यं निरूहश्चानुवासनम् ।
एतानि पञ्च कर्माणि कथितानि मुनीश्वरैः ॥ १ ॥

### तत्र प्रथमं वमनविधिः—

शरत्काले वसन्ते च प्रावृट्काले च देहिनाम् ।
वमनं रेचनं चैव कारयेत्कुशलो भिषक् ॥ २ ॥
बलवन्तं कफव्याप्तं हृल्लासादिनिपीडितम् ।
तथा वमनसात्म्यं च धीरचित्तं च वामयेत् ॥ ३ ॥
विषदोषे स्तन्यरोगे मन्दाग्नौ श्लीपदेऽर्बुदे ।
हृद्रोगकुष्ठवीसर्पमेहाजीर्णभ्रमेषु च ॥ ४ ॥
विदारिकापचीकासश्वासपीनसवृद्धिषु ।
अपस्मारे ज्वरोन्मादे तथा रक्तातिसारिषु ॥ ५ ॥
नासाताल्वोष्ठपाके च कर्णस्रावेऽधिजिह्वके ।
गलशुण्ड्यामतीसारे पित्तश्लेष्मगदे तथा ॥ ६ ॥
मेदोगदेऽरुचौ चैव वमनं कारयेद्भिषक् ।
न वामनीयस्तिमिरी न गुल्मी नोदरी कृशः ॥ ७ ॥
नातिवृद्धो गर्भिणी च न स्थूलो न क्षतातुरः ।
मदार्तो बालको रूक्षः क्षुधितश्च निरूहितः ॥ ८ ॥
उदावर्त्यूर्ध्वरक्ती च[2] क्षुच्छर्द्यः केवलानिली ।
पाण्डुरोगी कृमिव्याप्तः पठनात्स्वरघातकः ॥ ९ ॥
एतेऽप्यजीर्णव्यथिता वाम्या ये विषपीडिताः ।
कफव्याप्ताश्च ते वाम्या मधूकक्काथपानतः ॥ १० ॥
सुकुमारं कृशं बालं वृद्धं भीरुं न वामयेत् ।
पीत्वा यवागूमाकण्ठं क्षीरतक्रदधीनि च ॥ ११ ॥
असात्म्यैः श्लेष्मलैर्भोज्यैर्दोषानुत्क्लिश्य देहिनः ।
स्निग्धस्विन्नाय वमनं दत्तं सम्यक्प्रवर्तते ॥ १२ ॥
वमनेषु च सर्वेषु सैन्धवं मधुना हितम् ।
बीभत्सं वमनं दद्याद्विपरीतं विरेचनम् ॥ १३ ॥

१ ख. °वे द्विजि° । २ ख. च दुच्छर्दः ।

क्वाथद्रव्यस्य कुडवं स्थापयित्वा जलाढके ।
अर्धभागावशिष्टं च वमनेष्ववतारयेत् ॥ १४ ॥
क्वाथपाने नवप्रस्था श्रेष्ठा मात्रा प्रकीर्तिता ।
मध्यमा षण्मिता प्रोक्ता त्रिप्रस्था च कनीयसी ॥ १५ ॥
कल्कचूर्णावलेहानां त्रिपलं श्रेष्ठमात्रया ।
मध्यमं द्विपलं विद्यात्कनीयस्तु पलं भवेत् ॥ १६ ॥
वमने चापि वेगाः स्युरष्टौ पित्तान्त उत्तमाः ।
षड्वेगा मध्यमा वेगाश्चत्वारस्त्ववरा मताः ॥ १७ ॥
वमने च विरेके च तथा शोणितमोक्षणे ।
अर्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः ॥ १८ ॥
कफं कटुकतीक्ष्णोष्णैः पित्तं स्वादुहिमैर्जयेत् ।
सुस्वादुलवणाम्लोष्णैः संसृष्टं वायुना कफम् ॥ १९ ॥
कृष्णाराठफलं सिन्धुं कफे कोष्णैर्जलैः पिबेत् ।[1]
पटोलवासानिम्बैश्च पित्ते शीतजलैः पिबेत् ॥ २० ॥
सश्लेष्मवातपीडायां सक्षीरं मदनं पिबेत् ।
अजीर्णे कोष्णपानीयं सिन्धुं पीत्वा वमेत्सुधीः ॥ २१ ॥
वामनं पाययित्वा तु जानुमात्रासने स्थितम् ।
कण्ठमेरण्डनालेन स्पृशन्तं वामयेद्भिषक् ॥ २२ ॥
प्रसेको हृद्ग्रहः कोठः कण्डूर्दुश्छर्दिते भवेत् ।
अतिवान्ते भवेत्तृष्णा हिक्कोद्गारौ विसंज्ञता ॥ २३ ॥
जिह्वानिःसर्पणं चाक्ष्णोर्व्यावृत्तिर्हनुसंहतिः ।
रक्तच्छर्दिष्ठीवनं च कण्ठपीडा च जायते ॥ २४ ॥
वमनस्यातियोगे तु मृदु कुर्याद्विरेचनम् ।
वमनान्तःप्रविष्टायां जिह्वायां कवलग्रहः ॥ २५ ॥
स्निग्धाम्ललवणैर्हृद्यैर्घृतक्षीररसैर्हितः ।
फलान्यम्लानि खादेयुस्तस्य चान्येऽग्रतो नराः ॥ २६ ॥
निःसृतां तु[2] लिहेद्द्राक्षां कल्कलिप्तां प्रवेशयेत् ।
व्यावृत्ताक्ष्णोर्घृताभ्यक्ते पीडयेच्च शनैः शनैः ॥ २७ ॥

---

१ ख. °ष्वपि चा° । बीभत्समदर्च्यं विपरीतं हृद्यम् । २ ख. °तु तिलैर्द्राक्षाक° । ३ क. °वृतेऽक्ष्णो° ।

हनोर्मोक्षे स्मृतः स्वेदो रक्तच्छर्दिविधौ पुनः ।
रक्तपित्तविधानेन रक्तच्छर्दिमुपाचरेत् ॥ २८ ॥
धात्रीरसाञ्जनोशीरलाजचन्दनवारिभिः ।
क्वाथं कृत्वा पाययेच्च सघृतक्षौद्रशर्करम् ॥ २९ ॥
शाम्यन्त्यनेन तृष्णाद्याः पीडाश्छर्दिसमुद्भवाः ।
हृत्कण्ठशिरसां शुद्धिर्दीप्ताग्नित्वं च लाघवम् ॥ ३० ॥
कफपित्तविनाशश्च सम्यग्वान्तस्य चेष्टितम् ।
ततोऽपराह्णे दीप्ताग्निं मुद्गषष्टिकशालिभिः ॥ ३१ ॥
हृद्यैश्च जाङ्गलरसैः कृत्वा यूषं च भोजयेत् ।
तन्द्रा निद्राऽऽस्यदौर्गन्ध्यं पाण्डुश्च ग्रहणीविषम् ॥ ३२ ॥
सुवान्तस्य न पीडायै भवन्त्येते कदाचन ।
अजीर्णं शीतपानीयं व्यायामं मैथुनं तथा ॥ ३३ ॥
स्नेहाभ्यङ्गान्प्रदेहांश्च दिनैकं वर्जयेत्सुधीः ॥

इति योगतरङ्गिण्यां वमनविधिर्नाम सप्तमस्तरङ्गः ॥ ७ ॥

---

अथाष्टमस्तरङ्गः ।

---

## अथ विरेकविधिः—

स्निग्धस्विन्नस्य वान्तस्य दद्यात्सम्यग्विरेचनम् ।
अवान्तस्य त्वधः स्रस्तो ग्रहणीं छादयेत्कफः[1] ॥ १ ॥
मन्दाग्निं गौरवं कुर्याज्जनयेद्वा प्रवाहिकाम् ।
अथ वा पाचनैरामं बलासं च विपाचयेत् ॥ २ ॥
पित्ते विरेचनं युञ्ज्यादामोद्भूते गदे तथा ।
उदरे च तथाऽऽध्माने कोष्ठशुद्धौ विशेषतः ॥ ३ ॥
दोषाः कदाचित्कुप्यन्ति जिता लङ्घनपाचनैः ।
ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः ॥ ४ ॥
बालवृद्धावतिस्निग्धः क्षतक्षीणो भयान्वितः[2] ।
वान्तस्तृषार्तः स्थूलश्च गर्भिणी च नवज्वरी ॥ ५ ॥
नवप्रसूता नारी च मन्दाग्निश्च मदात्ययी ।
शल्योद्धृतश्च रूक्षश्च न विरेच्या विजानता ॥ ६ ॥

---

१ ख. °ध्याने । २ ख. °तः । श्रान्त°।

जीर्णज्वरी गरव्याप्तो वातरक्ती भगंदरी ।
अर्शःपाण्डूदरग्रन्थिहृद्रोगारुचिपीडिताः ॥ ७ ॥
योनिरोगप्रमेहार्तगुल्मप्लीहव्रणार्दिताः ।
विद्रधिच्छर्दिविस्फोटविषूचीकुष्ठसंयुताः ॥ ८ ॥
कर्णनासाशिरोवक्त्रगुदमेढ्रामयान्विताः ।
प्लीहशोथाक्षिरोगार्ताः क्रिमिक्षारानिलार्दिताः ॥ ९ ॥
शूलिनो मूत्रघातार्ता विरेकार्हा नरा मताः ।
बहुपित्तो मृदुः प्रोक्तो बहुश्लेष्मा च मध्यमः ॥ १० ॥
बहुवातः क्रूरकोष्ठो दुर्विरेच्यः स कथ्यते ।
मृद्वी मात्रा मृदौ कोष्ठे मध्यकोष्ठे तु मध्यमा ॥ ११ ॥
क्रूरे तीक्ष्णा मता द्रव्यैर्मृदुमध्यमतीक्ष्णकैः ।
मृदुर्द्राक्षापयश्चौरुतैलैरपि विरिच्यते ॥ १२ ॥
मध्यमस्त्रिवृतातिक्ताराजवृक्षैर्विरिच्यते ।
क्रूरः स्नुक्पयसा हेमक्षीरीदन्तीफलादिभिः ॥ १३ ॥
मात्रोत्तमा विरेकस्य त्रिंशद्वेगैः कफान्तका ।
वेगैर्विंशतिभिर्मध्या हीनोक्ता दशवेगकैः ॥ १४ ॥
द्विपलं श्रेष्ठमाख्यातं मध्यमं तु पलं भवेत् ।
पलार्धं च कषायाणां कनीयस्तु विरेचनम् ॥ १५ ॥
कल्कमोदकचूर्णानां कर्षं मध्वाज्यलेहतः ।
कर्षद्वयं पलं वाऽपि देयं रोगाद्यपेक्षया ॥ १६ ॥
पित्तोत्तरे त्रिवृच्चूर्णं द्राक्षाक्काथादिभिः पिबेत् ।
त्रिफलाक्काथगोमूत्रैः पिबेद्व्योषं कफार्दितः ॥ १७ ॥
त्रिवृत्सैन्धवशुण्ठीनां चूर्णमम्लैः पिबेन्नरः ।
वातार्दितो विरेकाय जाङ्गलानां रसेन वा ॥ १८ ॥
एरण्डतैलं त्रिफलाक्काथेन द्विगुणेन वा ।
युक्तं पीतं पयोभिर्वा नचिरेण विरिच्यते ॥ १९ ॥
त्रिवृता कौटजं बीजं पिप्पली विश्वभेषजम् ।
समृद्विकारसः क्षौद्रं वर्षाकाले विरेचनम् ॥ २० ॥
त्रिवृद्दुरालभोदीच्यशर्करामुस्तचन्दनम् ।
द्राक्षाम्बुना सयष्ट्याह्वं शीतलं च घनात्यये ॥ २१ ॥

१ ख. °मेहार्त° । २ ख. °र्वोकाक्षि° । ३ ख. °श्चाम्बुतैलै° ।

त्रिवृतां चित्रकं पाठामजाजीं सरलं वचाम् ।
हेमक्षीरीं च हेमन्ते चूर्णमुष्णाम्बुना पिबेत् ॥ २२ ॥
पिप्पलीं नागरं शुण्ठीं श्यामां त्रिवृतया सह ।
लिहेत्क्षौद्रेण शिशिरे वसन्ते च विरेचनम् ॥ २३ ॥
त्रिवृता शर्करातुल्या ग्रीष्मकाले विरेचनम् ।

अथाभयामोदकः—

अभया मरिचं शुण्ठी विडङ्गामलकानि च ।
पिप्पली पिप्पलीमूलं त्वक्पत्रं मुस्तमेव च ॥ २४ ॥
एतानि समभागानि दन्ती च त्रिगुणा भवेत् ।
त्रिवृदष्टगुणा ज्ञेया षड्गुणा च सिता मता ॥ २५ ॥
मधुना मोदकान्कृत्वा कर्षमात्रान्प्रमाणतः ।
एकैकं भक्षयेत्प्रातः शीतं चानु पिबेज्जलम् ॥ २६ ॥
तावद्विरिच्यते जन्तुर्यावदुष्णं न सेवते ।
पानाहारविहारेषु भवेन्निर्यन्त्रणः सदा ॥ २७ ॥
विषमज्वरमन्दाग्निपाण्डुकासभगंदरान् ।
दुर्नामकुष्ठगुल्मार्शोगलगण्डभ्रमोदरान् ॥ २८ ॥
विदाहप्लीहमेहांश्च यक्ष्माणं नयनामयान् ।
वातरोगांस्तथाऽऽध्मानं मूत्रकृच्छ्राणि चाश्मरीम् ॥ २९ ॥
पृष्ठपार्श्वोरुजघनजानूदररुजं जयेत् ।
सततं शीलनादेष पलितानि विनाशयेत् ॥ ३० ॥
अभयामोदका एते रसायनमनुत्तमम् ।

[ *मृद्वीका कटुरोहिणी जलधरः शंपाकमज्जाशिवा
कृष्णा मूलपटोलिके त्रिवृदिला वृश्चीवपत्रं समम् ।
संक्वाथ्याऽऽशु निपीत एष तु गणः संरेचयेदाश्वयं
ताम्बूलाशिनमग्निसेविनमिलागेहस्थितं मानवम् ॥ ३१ ॥]

अभयामोदकविरेकस्य कृ[त्य]माह—

पीत्वा विरेचनं शीतजलैः संसिच्य चक्षुषी ।
सुगन्धि किंचिदाघ्राय ताम्बूलं शीलयेन्नरम् ॥ ३२ ॥

---

* अयं श्लोकः ख. पुस्तकस्थः ।

---

१ ख. जीरकं । २ ख. लिम्पु । ३ ख. °त्रु । वाताम° ।

निर्वातस्थो न वेगांश्च धारयेन्न स्वपेत्तथा ।
शीताम्बु न स्पृशेत्क्वापि कोष्णं नीरं पिबेन्मुहुः ॥ ३३ ॥
बलासौषधपित्तानि वारि वान्ते यथा व्रजेत् ।
रेकात्तथा मलं पित्तं भेषजं च कफो व्रजेत् ॥ ३४ ॥

तत्र दुर्विरिक्तस्य लक्षणमाह—

दुर्विरिक्तस्य नाभेस्तु स्तब्धत्वं कुक्षिशूलता ।
पुरीषवातसङ्गं च कण्डूमण्डलगौरवम् ॥ ३५ ॥
विदाहोऽरुचिराध्मानं भ्रमश्छर्दिश्च जायते ।

तत्र विरेकस्यातियोगमाह—

तं पुनः पाचनैः स्नेहैः पक्त्वा संस्नेह्य रेचयेत् ।
तेनास्योपद्रवा यान्ति दीप्ताग्निर्लघुता भवेत् ॥ ३६ ॥

तस्योपशमनमाह—

विरेकस्यातियोगेन मूर्छा भ्रंशो गुदस्य च ।
शूलं कफातियोगः स्यान्मांसधावनसंनिभम् ॥ ३७ ॥
मेदोनिभं जलाभासं रक्तं चापि विरिच्यते ।

तस्य शान्तिमाह—

तस्य शीताम्बुभिः सिक्त्वा शरीरं तण्डुलाम्बुभिः ॥ ३८ ॥
मधुमिश्रैस्तथा शीतैः कारयेद्वमनं मृदु ।
सहकारत्वचः कल्को दध्ना सौवीरकेण वा ॥ ३९ ॥
पिष्टो नाभिप्रलेपेन हन्त्यतीसारमुल्बणम् ।
अजाक्षीरं गवां वाऽपि वैष्किरं हारिणं तथा ॥ ४० ॥
शालिभिः षष्टिभिः साकं मसूरैर्वाऽपि भोजयेत् ।
शीतैः संग्राहिभिर्द्रव्यैः कुर्यात्संग्रहणं भिषक् ॥ ४१ ॥

सुविरक्तत्वमाह—

लाघवे मनसस्तुष्टावनुलोमं गतेऽनिले ।
सुविरिक्तं नरं ज्ञात्वा पाचनं पाययेन्निशि ॥ ४२ ॥

तत्र रेचकस्य सेवनगुणमाह—

इन्द्रियाणां बलं बुद्धेः प्रसादो वह्निदीप्तता ।
धातुस्थैर्यं वयःस्थैर्यं भवेद्रेचनसेवनात् ॥ ४३ ॥

---

१ ख. स्तभोशीरैः का° । २ °र्यं बलःस्थै° ।

तत्र विरेक( च )न्मध्ये यो निषेधस्तमाह—

प्रवातसेवां शीताम्बु स्नेहाभ्यङ्गमजीर्णताम् ।
व्यायामं मैथुनं चैव न सेवेत विरेचितः ॥ ४४ ॥

तत्र भोज्यानाह—

शालिषष्टिकमुद्गाद्यैर्यवागूं भोजयेत्कृताम् ।
जङ्गलविष्किराणां वा रसैः शाल्योदनं हितम् ॥ ४५ ॥

इति शार्ङ्गधरात् ।

सारसंग्रहात्—

शंभोर्बीजं सटङ्कं वलिमरिचयुतं शृङ्गवेरं च तुल्यं
योज्यं नैकुम्भबीजं समशिखिसहितं मर्दितं याममेकम् ।
भुक्तं गुञ्जाद्विमात्रं शिशिरजलयुतं त्यक्तसंततमुच्चै-
रिच्छाभेदी रसोऽयं प्रबलमलहरः सर्वरोगैकहर्ता ॥ ४६ ॥

( * व्योषवरैलामुस्तविडङ्गं पत्रमखिलसममत्र लवङ्गम् ।
सर्वेभ्यो द्विस्त्रिवृताकन्दं प्रबलमलहरमुष्णकबन्धम् ॥ १ ॥
शिवा कृष्णामूलं त्रिकटुकमजाजीजलधर-
त्रिवृद्ब्राह्मी भूमी तरुपटुविडङ्गामरसुमम् ।
दलं कुष्ठं हिङ्गुर्ज्वलन इति संपिष्य मृदुलं
जलैरावेग्युत्थैर्मलहरमिदं सूष्णपयसा ॥ २ ॥ )

अथ नाराचो रसः—

जेपालेन समैः सूतव्योषटङ्कणगन्धकैः ।
नाराचः स्याद्रसो माषमात्रः सर्पिःसितायुतः ॥ ४७ ॥
हन्ति संग्रहमानाहमामशूलं नवज्वरम् ।
जीर्णज्वरं विरेकेण शीतलाम्बुनिषेवणात् ॥ ४८ ॥

इति नाराचो रसः रसरत्नप्रदीपात् ।

अथ विचित्रविद्याधरः—

वराम्बुना देशसमाख्यबीजं सुवर्णमित्रं कुसुमाभिधानम् ।
विचित्रविद्याधरनामकोऽयं मलं विना मुञ्चति माऽऽममेव ॥ ४९ ॥

---

* इदं श्लोकद्वयं ख. पुस्तकस्थम् ।

---

१ ख. °जं शिखिगुणसहितं म° । २ ख. ग. °मू । मेलाऽप° ।

इति विचित्रविद्याधरः ।

अथ इच्छाविभेदी रसः—

शुण्ठीतीक्ष्णरसेन्द्रटङ्कणबलिप्रोक्तं समं तद्द्विधा
कुम्भीबीजयुतं विमर्द्य स भवेदिच्छाविभेदी रसः ।
वल्लः शर्करयोऽन्वितो हि चुलुकं पुंसः सुरं रेचयेत्
निःशेषं मलदोषमेव विनिहन्त्युच्चैर्यथेभं हरिः ॥ ५० ॥

इतीच्छाविभेदी रसः ।

अथ नाराचरसः—

तुल्यं पारदटङ्कणं समरिचं गन्धाश्मतुल्यं त्रिभि
र्विश्वं च त्रिगुणं ततो नवगुणं जेपालबीजं क्षिपेत् ।
खल्वे यामयुगं विमर्द्य विधिवत्संन्यस्य पर्णे ततः
स्विन्नं गोमयवह्निना स तु भवेन्नाराचनामा रसः ॥५१॥
गुञ्जैकमानितो रसो हिमजलैः संसेवितो रेचयेत् ।
यावन्नोष्णजलं भजेत्खलु नरो भोज्यं तु दध्योदनम् ॥५२॥

इति नाराचरसः ।

रेचनानां तु सर्वेषां दध्यन्नं स्तम्भने हितम् ।
आमान्ते च प्रदातव्यमन्यथा मुद्गयूपकम् ॥ ५३ ॥

इति योगतरङ्गिण्यां विरेकविधिर्नामा-
ष्टमस्तरङ्गः ॥ ८ ॥

---

अथ नवमस्तरङ्गः ।

---

अथ प्रथमं वस्तिविधिः ।

वस्तिर्द्विधाऽनुवासाख्यो निरूहश्च ततः परम् ।
यः स्नेहैर्दीयते स स्यादनुवासननामकः ॥ १ ॥
कषायक्षीरतैलैर्वा निरूहः स निगद्यते ।
बस्तिभिर्दीयते यस्मात्तस्माद्वस्तिरिति स्मृतः ॥ २ ॥
मृगाजसूकरगवां महिषस्यापि वा भवेत् ।
मूत्रकोशस्तु वस्तिः स्यात्तदलाभेऽन्यचर्मजः ॥ ३ ॥
नेत्रं कार्यं सुवर्णादिधातुमृद्वृक्षवेणुभिः ।
नलैर्दन्तैर्विषाणाग्रैर्मणिभिर्वा विधीयते ॥ ४ ॥

---

१ ख. °याऽधिकूपचु° । २ ग. °वतुष्प° । ३ क. °मं च ने° ।

आतुराङ्गुष्ठमानेन मूले स्थूलं विधीयते ।
कनिष्ठिकापरीणाहमग्रे च गुटिकामुखम् ॥ ५ ॥
मुद्गच्छिद्रयुतं यत्नेे गोपुच्छसदृशं दृढम् ।
षडङ्गुलमितं तच्च किं वा स्याद्द्वादशाङ्गुलम् ॥ ६ ॥
तन्मूले कर्णिके द्वे च कार्ये भागाच्चतुर्थकात् ।
योजयेत्तत्र बस्तिं च बन्धद्वयविधानतः ॥ ७ ॥

तत्र मात्रामाह—

उत्तमस्य पलैः षड्भिर्मध्यमस्य पलैस्त्रिभिः ।
पलेनार्धेन हीनस्य युक्ता मात्राऽनुवासने ॥ ८ ॥
भोजयित्वा यथाशास्त्रं कृतचङ्क्रमणं ततः ।
उत्सृष्टानिलविण्मूत्रं योजयेत्स्नेहबस्तिना ॥ ९ ॥
सुप्तस्य वामपार्श्वे वा वामजङ्घाप्रसारिणः ।
प्रकुञ्चितान्यजङ्घस्य नेत्रं स्निग्धे गुदे न्यसेत् ॥ १० ॥
वामेन पाणिना बस्तिकण्ठमालम्ब्य धीरधीः ।
बस्तिं संपीडयेत्पश्चान्मध्यवेगोऽन्यपाणिना ॥ ११ ॥
जृम्भाकासक्षवादींश्च बस्तिकाले न कारयेत् ।
त्रिंशन्मात्रामितः कालः प्रोक्तो बस्तेस्तु पीडने ॥ १२ ॥
ततः प्रणिहितः स्नेह उत्तानो वाक्शतं भवेत् ।
प्रसारितैः सर्वगात्रैर्यथावीर्यं प्रसर्पति ॥ १३ ॥
ताडयेत्तलयोरेनं त्रींस्त्रीन्वारान्शनैः शनैः ।
स्फिजोश्चैव ततः श्रोणीं शय्यां चैव क्षिपेत्ततः ॥ १४ ॥
जाते विधाने च ततो कुर्यान्निद्रां यथासुखम् ।
सतैलः सपुरीषश्च स्नेहः प्रत्येति यस्य तु ॥ १५ ॥
उपद्रवं विना चैव स सम्यगनुवासितः ।
अनेन विधिना देयाः सप्त षाड्ष्टौ च बस्तयः ॥ १६ ॥
अनायाते त्वहोरात्रे स्नेहं संशोधनैर्हरेत् ।
अतिसंक्षेपतः प्रोक्तो बस्तिरेषोऽनुवासनः ॥ १७ ॥

अथ निरूहबस्तिः ।

निरूहबस्तिर्बहुधा भिद्यते कारणान्तरैः ।
तैरेव तस्य नामानि कृतानि मुनिपुङ्गवैः ॥ १८ ॥

१ ख. षौ नवापि वा । अ°।

निरूहस्यापरं नाम प्रोक्तमास्थापनं बुधैः ।
स्वस्थानस्थापनाद्दोषधातूनां स्थापनं मतम् ॥ १९ ॥
निरूहस्य प्रमाणं च प्रस्थं पादोत्तरं मतम् ।
मध्यमं प्रस्थमुद्दिष्टं हीनं च कुडवात्रयः ॥ २० ॥
( * अनुवास्यस्तु रूक्षः स्यात्तीक्ष्णाग्निः केवलानिली ।
नानुवास्यस्तु कुष्ठी वै मेही स्थूली तथोदरी ॥ १ ॥
न स्थाप्या नानुवास्याः स्युरजीर्णोन्मादतृड्युताः ।
शोकमूर्छारुचिभयाश्वासकासक्षयातुराः ॥ २ )
अतिस्निग्धः क्लिष्टदोषः क्षतोरस्कः कृशस्तथा ।
आध्मानच्छर्दिहिक्कार्शःकासश्वासप्रपीडितः ॥ २१ ॥
गुदशोफातिसारार्तो विषूचीकुष्ठसंयुतः ।
गर्भिणी मधुमेही च नाऽऽस्थाप्यश्च जलोदरी ॥ २२ ॥
वातव्याधावुदावर्ते वातासृग्विषमज्वरे ।
मूर्छातृष्णोदरानाहमूत्रकृच्छ्राश्मरीषु च ॥ २३ ॥
वृद्ध्यसृग्दरमन्दाग्निप्रमेहेषु निरूहणम् ।
शूलाम्लपित्ते हृद्रोगे योजयेद्विधिवद्बुधः ॥ २४ ॥
स्नेहबस्तिवदत्रापि विधिरन्यो निरूहणे ।
( + मगधामधुकाभयबिल्ववचामिसिपुष्करमूलसटीशिखिभिः ।
मदनामरदारुयुतैर्विपचेत्पयसा गुदबस्तिषु तैलमिदम् ॥ १ ॥ )
गुडतित्तिडिका कुडवस्तु भवेदपि चात्र मूत्रकुडवद्वितयम् ।
मिसिरामठराढकसिन्धुयुतं नृनिरूहणं तु विहितं मुनिभिः ॥ २५ ॥

इति द्विमात्रो निरूहबस्तिः ।

## अथोत्तरबस्तिः—

अतःपरं प्रवक्ष्यामि बस्तिमुत्तरसंज्ञितम् ।
द्वादशाङ्गुलमानेन नेत्रं कुर्यात्सकर्णिकम् ॥ २६ ॥
मालतीपुष्पवृन्ताभं छिद्रं सर्षपनिर्गमम् ।
पञ्चविंशतिवर्षाणामधोमात्रा द्विकार्षिकी ॥ २७ ॥

* अनुष्टिहान्तर्गततो ग्रन्थः ख. पुस्तकस्थः । + अयमपि श्लोकः ख. पुस्तकस्थः ।

१ ख. नेत्रं वा समक° । ग. नेत्रमग्रे सक° ।

तदूर्ध्वं पलमात्रा हि स्नेहस्योक्ता भिषग्वरैः ।
स्थितस्य जानुमात्रे च पीठेऽन्विष्य शलाकया ॥ २८ ॥
स्निग्धया मेढ्रमार्गे च ततो नेत्रं नियोजयेत् ।
अनुवासक्रमः सर्वोऽप्यन्यत्रापि निवेदितः ॥ २९ ॥
स्त्रीणां दशाङ्गुलं नेत्रं स्थूलं प्रोक्तं कनिष्ठया ।
मुद्गच्छिद्राननं योज्यं योन्यन्तश्चतुरङ्गुलम् ॥ ३० ॥
द्व्यङ्गुलं मूत्रमार्गे तु सूक्ष्मं नेत्रं नियोजयेत् ।
मूत्रकृच्छ्रविकारेषु बालानामेकमङ्गुलम् ॥ ३१ ॥
शनैर्निष्कम्पमाधेयं सूक्ष्मं नेत्रं विचक्षणैः ।
योनिमार्गेषु नारीणां स्नेहमात्रा द्विपालिका ॥ ३२ ॥
द्विकार्षिकी च बालानां मूत्रमार्गे निरूपिता ।
बस्तौ शुक्ररुजः पुंसां स्त्रीणामार्तवजा रुजः ॥ ३३ ॥
हन्यादुत्तरबस्तिस्तु नोचितो मेहिनां क्वचित् ।

इत्युत्तरबस्तिः ।

## अथ नेत्रबस्तिरुच्यते—

नेत्रसंतर्पणार्थं च नेत्रबस्तिं प्रकल्पयेत् ॥ ३४ ॥
वातातपरजोहीनदेशे चोत्तानशायिनः ।
नेत्रक्षेत्रं परित्यज्य सार्धं च द्व्यङ्गुलम् ॥ ३५ ॥
सर्वतश्चाप्यथ मर्षीं जलं दत्त्वा प्रमर्दयेत् ।
तेन पिण्डे नालवालं दृढं संधिविवर्जितम् ॥ ३६ ॥
कृत्वा नवीनतैलेन शुक्रमार्गं द्रवेण वै ।
पूरयेच्च यथा पक्ष्म पूरितं चैव जायते ॥ ३७ ॥
नेत्रे यत्नं प्रकुर्वीत विकाशस्तु तथैव च ।
बस्तौ कफे संधिरोगे मात्रा पञ्चशतं विदुः ॥ ३८ ॥
कफे वाते कृष्णरोगे सप्तमात्राशतं मतम् ।
दृष्टिरोगेष्वष्टशतमधिमन्थे सहस्रकम् ॥ ३९ ॥
शुष्केऽतिकुटिले ह्रस्वे स्याद्द्वादशशती मता ।
पित्तरोगे नवशतं सहस्रं वातरोगिणाम् ॥ ४० ॥
एकाहं वा त्र्यहं वाऽपि पञ्चाहं वेष्यतेऽथ वा ।

१ ख. शुक्रेति॰ ।

भ्रुवं चापाङ्गतो नीत्वा नीलद्रव्यं विलोक्य च ॥ ४१ ॥
सुखं निरीक्षयेत्पश्चान्नेत्रवस्तिविधिस्त्वयम् ।
निर्वृतिर्व्याधिशान्तिश्च क्रियालाघवमेव च ॥ ४२ ॥
सम्यग्योगे सुखं सुप्तिर्वैशद्यं वर्णपाटवम् ।
शोफाश्रुपातगुरुता मौग्ध्यं स्यादतितर्पिते ॥ ४३ ॥
रूक्षाविलं सरक्तं च नेत्रं स्याद्धीनतर्पितम् ।
रूक्षः स्निग्धः क्रमश्चात्र प्रयोज्यः संप्रदायतः ॥ ४४ ॥

इति नेत्रबस्तिर्बृहदात्रेयात् ।

## अथ शिरोबस्तिः—

अभ्यङ्गः परिषेकश्च पिचुर्बस्तिरिति क्रमात् ।
तैलं मूर्ध्नि चतुर्धैवं बलवच्चोत्तरोत्तरम् ॥ ४५ ॥
एतेषां च परा मात्रा यावत्स्रावश्च नेत्रयोः ।
सूचीभिरिव तोदश्च केशभूमिषु जायते ॥ ४६ ॥
स्नेहं पिचुप्लुतं कृत्वा प्रदद्यान्मस्तकोपरि ।
ऊर्ध्वजत्रुविकारेषु पिचुतैलं प्रशस्यते ॥ ४७ ॥
शिरोबस्तिश्चर्मकृतो द्विमुखो द्वादशाङ्गुलः ।
शिरःप्रमाणं तं कृत्वा चर्मबन्धेन यन्त्रयेत् ॥ ४८ ॥
अथ वा संधिरोधं च चमसीभिः प्रयोजयेत् ।
ततस्तैलं न्यसेत्तावद्यावत्संपूर्णता भवेत् ॥ ४९ ॥
तावद्धार्यस्तु यावत्स्यात्कर्णनासामुखस्रुतिः ।
वेदनोपशमो वाऽपि मात्राणां वा सहस्रकम् ॥ ५० ॥
विना भोजनमेवात्र शिरोबस्तिर्विधीयते ।
विमोच्याथ शिरोबस्तिं युगपत्तु विमर्दयेत् ॥ ५१ ॥
इति शिरोबस्तिः ।

## अथ बस्तिमात्रा-

दक्षजानुकरावर्तश्छोटिकां चाङ्गुलिद्वयात् ।
निमेषोन्मेषकाले वा बस्तौ मात्रा कृता बुधैः ॥ ५२ ॥

१ क. °पितः । रू° । २ क. विवर्जयेत् । ३ ख. वर्ते छोटि° । ४ ख. °काच्छादिकाकु-
कम् । नि° ।

इति बस्तिमात्रा ।

## अथ बस्त्यवगाहनविधिः ।

कटाहे मृन्मये पात्रे किं वा पक्वकमूलके ।
ताम्रादिजेऽथ वा पात्रे किं वा पाषाणसंभवे ॥ ५३ ॥
आकण्ठमर्भो निवसेन्मनुजः प्रातरेव वै ।
रोमान्तेष्विह कूपेषु स्थित्वा मात्राशतत्रयम् ॥ ५४ ॥
तान्विभिद्य ततः स्नेहश्चतुर्भिर्गच्छति त्वचम् ।
पञ्चभिश्च मजेद्रक्तं षड्भिर्मांसं प्रपद्यते ॥ ५५ ॥
मेदःस्थानं सप्तशतैरष्टभिश्चास्थिषु व्रजेत् ।
नवभिर्याति मज्जानं ततो मात्रां न कारयेत् ॥ ५६ ॥
ततस्तु हरते रोगान्वातपित्तकफोद्भवान् ।
मात्राणां त्रिचतुःपञ्चषट्सप्तवसुनन्दकैः ॥ ५७ ॥
शतैः स्नेहः क्रमाद्याति धातुषु स्नेहगाहने ।
स्नेहावगाहे मात्राणां द्विचत्वारिंशता शतैः ॥ ५८ ॥
कालः सुखकरोऽन्योऽस्माद्बलाबलमपेक्षते ।
स्रोतसां मार्दवकरः कफपित्तविनाशनः ॥ ५९ ॥
धातूनां पुष्टिजननो बलवर्णकरः परः ।
वातरोगानशेषांश्च जयेदेष विशेषतः ॥ ६० ॥
यथा मूलेऽम्बुसंसिक्तो वृक्षः पल्लवितो भवेत् ।
स्नेहसिक्तस्तथा मर्त्यः पृथुधातुबलो भवेत् ॥ ६१ ॥
इति बस्त्यवगाहविधिः ।

## अथ कर्णपूरणमात्राविधिः ।

रसाद्यैः पूरणं कर्णे भोजनात्प्राक्प्रशस्यते ।
तैलाद्यैः पूरणं कर्णे भास्करेऽस्तमुपागते ॥ ६२ ॥
स्वेदयेत्कर्णदेशं तु परिवर्तनशायिनः ।
मूत्रैः स्नेहे रसैः कोष्णैः पूरयेच्च ततो भिषक् ॥ ६३ ॥
स्वस्थस्य पूरयेत्स्नेहैर्मात्राशतमवेदने ।
शतत्रयं श्रोत्रगदे शिरोरोगे तथैव च ॥ ६४ ॥
कर्णं प्रपूरयेत्सम्यक्स्नेहाद्यैर्मात्रयोक्तया ।

१ ग. °कशूल° । २ ख. °भो वासेत प्रहरं प्रा° ।

नोच्चैः श्रुतिर्न बाधिर्यं स्यान्नित्यं कर्णपूरणात् ॥ ६५ ॥
इति प्रयोगपारिजातात्कर्णपूरणमात्राविधिः ।

कृष्णात्रेयात् ।

निद्राकरो देहसुखश्चक्षुष्यः पादरोगहा ॥ ६६ ॥
पादत्वङ्मृदुकर्ता च पादाभ्यङ्गः प्रशस्यते ।
मृदौ समे सुपर्यङ्के गतस्वस्थतमो नरः ॥ ६७ ॥
उत्तानशायी संभूय तैलाभ्यङ्गं समाचरेत् ।
तद्विशेषो नवाभ्यङ्गः शिरोनासाक्षितापजित् ॥ ६८ ॥
शिरोभ्यक्तेन तैलेन नाङ्गं किंचिदुपस्पृशेत् ।
तपो विद्यां धनं चक्षुरायुः कीर्तिं प्रजां हरेत् ॥ ६९ ॥
श्रोत्राक्षिबलदं पित्तभ्रमतृड्दाहमेहनुत् ।
वाते पित्ते कफे रक्ते संनिपाते तथैव च ॥ ७० ॥
मदमूर्छाप्रलापेषु तृष्णाजीर्णज्वरेषु च ।
संतप्ते सतताजीर्णे मार्गश्रान्ते विशेषतः ॥ ७१ ॥
बाले वृद्धे च तरुणे तैलाभ्यङ्गः सदोत्तमः ।
कृष्णात्रेयात् ।

इति योगतरङ्गिण्यां संक्षेपतो बस्तिविधिर्नाम नवमस्तरङ्गः ॥ ९ ॥

---

अथ दशमस्तरङ्गः ।

---

## अथ नस्यविधिः ।

नस्यं तत्कथ्यते धीरैर्नासाग्राह्यं यदौषधम् ।
नावनं सूक्ष्मकर्मेति यस्य नामद्वयं मतम् ॥ १ ॥
तस्य भेदद्वयं प्रोक्तं रेचनं स्नेहनं तथा ।
रेचनं कर्षणं प्रोक्तं स्नेहनं बृंहणं मतम् ॥ २ ॥
कफपित्तानिलध्वंसे पूर्वमध्यापराह्णके ।
दिनस्य गृह्यते नस्यं रात्रावप्युत्कटे गदे ॥ ३ ॥

नस्यनिषेधमाह—

नस्यं त्यजेद्भोजनादौ दुर्दिने चापतर्पिते ।
तथा नवप्रतिश्यायी गर्भिणी गरदूषितः ॥ ४ ॥

---

१ क. °सास्थिता° । २ क. पुस्तके नस्तकस्य इतिपाठान्तरम् । नासिकायां कर्मभिः चिकित्सा येन तन्नस्तकर्म इति च टिप्पणी । ग. °नं नस्यक° ।

अजीर्णी दत्तबस्तिश्च पीतस्नेहोदकासवः ।
क्रुद्धः शोकाभिभूतश्च तृषार्तो वृद्धबालकौ ॥ ५ ॥
वेगावरोधी स्नातश्च स्नातुकामश्च वर्जयेत् ।

नस्यदाने च क्रममाह—

अष्टवर्षस्य बालस्य नस्यकर्म समाचरेत् ॥ ६ ॥
अशीतिवर्षादूर्ध्वं च नावनं नैव दीयते ।

तस्य क्रममाह—

अथ वै रेचनं नस्यं ग्राह्यं तैलैः सुतीक्ष्णकैः ॥ ७ ॥
तीक्ष्णभेषजसिद्धैर्वा स्नेहैः क्वाथै रसैस्तथा ।

नस्यस्य बिन्दुमात्रामाह—

नासिकारन्ध्रयोरष्टौ षट् चत्वारश्च बिन्दवः ॥ ८ ॥
प्रत्येकं रेचनं योज्यं मुख्यमध्यान्त्यमात्रया ।

तस्य नस्यस्य मात्रामाह—

नस्यकर्मणि दातव्यं शाणिकं तीक्ष्णमौषधम् ॥ ९ ॥
हिङ्गु स्याद्यवमात्रं तु माषकं सैन्धवं मतम् ।
क्षीरं चैवाष्टशाणं स्यात्पानीयं च त्रिकार्षिकम् ॥ १० ॥
कार्षिकं मधुरद्रव्यं नस्यकर्मणि योजयेत् ।
षडङ्गुला द्विवक्त्री या नली चूर्णं तया धमेत् ॥ ११ ॥
तीक्ष्णं कोलमितं वक्त्रवातैः प्रधमनं हितम् ।

वैरेचनं यथा—

नस्यं स्याद्गुडशुण्ठीभ्यां पिप्पल्या सैन्धवेन वा ॥ १२ ॥
जलपिष्टेन तेनाक्षिकर्णनासाशिरोगदाः ।
मन्याहनुगलोद्भूता नश्यन्ति भुजपृष्ठजाः ॥ १३ ॥
मधूकसारकृष्णाभ्यां वचामरिचसैन्धवैः ।
नस्यं कोष्णजलैः पिष्टं दद्यात्संज्ञाप्रबोधनम् ॥ १४ ॥
अपस्मारे तथोन्मादे संनिपातेऽपतन्त्रके ।
सैन्धवं श्वेतमरिचं सर्षपाः कुष्ठमेव च ॥ १५ ॥

---

१ ग. °वं पश्चा° ।

बस्तमूत्रेण पिष्टानि नस्यं तन्द्रानिवारणम् ।
रोहीतमत्स्यपित्तेन भावितं मरिचं वचा ॥ १६ ॥
कट्फलं चेति चूर्णं हि देयं प्रधमनं बुधैः ।

अथ बृंहणप्रकारः—

[1]मर्शश्च प्रतिमर्शश्च द्वौ भेदौ स्नेहने मतौ ॥ १७ ॥
मर्शस्य तर्पणी मात्रा मुख्या शाणैः स्मृताऽष्टभिः ।
मध्यमा च चतुःशाणैर्हीना शाणमिता मता ॥ १८ ॥

नस्यदाने दिनमर्यादामाह—[2]

एकैकस्मिंस्तु मात्रेयं देया नासापुटे बुधैः ।
मर्शस्य द्वित्रिवेलं च दृष्ट्वा दोषबलाबलम् ॥ १९ ॥
एकान्तरं द्व्यन्तरं वा नस्यं दद्याद्विचक्षणः ।
[3]त्र्यहं पञ्चाहमथ वा सप्ताहं वा सुयन्त्रितः ॥ २० ॥
मर्शः शिरोविरेके च व्यापदो विविधाः स्मृताः ।
शोषोत्क्लेशाक्षयाश्चापि विज्ञेयास्ता यथाक्रमात् ॥ २१ ॥
शिरोनासाक्षिरोगेषु सूर्यावर्तार्धभेदके ।
दन्तरोगे बले हीने मन्याबाहूंसजे गदे ॥ २२ ॥
मुखशोषे कर्णनादे वातपित्तगदे तथा ।
अकालपलिते चैव केशश्मश्रुप्रपातने ॥ २३ ॥
युज्यते बृंहणं नस्यं स्नेहैर्वा मधुरद्रवैः ।

यथा—

सशर्करं पयःपिष्टं भृष्टमाज्येन कुङ्कुमम् ॥ २४ ॥
नस्यप्रयोगतो हन्याद्वातरक्तभवां रुजम् ।
भ्रूशङ्खाक्षिशिरःकर्णसूर्यावर्तार्धभेदकान् (कम्) ॥ २५ ॥
नस्यं स्यादणुतैलेन तथा नारायणेन वा ।
माषादिना वा सर्पिर्भिस्तत्तद्भेषजसाधितैः ॥ २६ ॥
तैलं कफे सवाते च केवले पवने वसा ।
दद्यान्नस्यं सदा पित्ते सर्पिर्मज्जानमेव वा ॥ २७ ॥
माषात्मगुप्तारास्नाभिर्बलारुचकरौहिषैः ।
कृतोऽश्वगन्धया क्वाथो हिङ्गुसैन्धवसंयुतः ॥ २८ ॥

---

१ ख. °षा । बङ्घोर्ध्व चे° । २ ग. वैकं दिनमर्यादा दे° । ३ ख. त्र्यावित्त्वे° ।

कोष्णो नस्यप्रयोगेण पक्षाघातं सकम्पनम् ।
जयेदर्दितवातं च मन्यास्तम्भमपबाहुकौ ॥ २९ ॥
प्रतिमर्शस्य मात्रा तु द्वित्रिबिन्दुमिता मता ।
प्रत्येकयोर्नासिकयोः स्नेहेनेति विनिश्चितम् ॥ ३० ॥

तत्र बिन्दुप्रमाणमाह—

स्नेहे ग्रन्थिद्वयं यावन्निमग्नं चोद्धृतं ततः ।
तर्जन्याश्च स्रवेत्तस्या यः स बिन्दुरुदाहृतः ॥ ३१ ॥
एवंविधैरष्टसंख्यैर्बिन्दुभिः शाण उच्यते ।
स ज्ञेयो मर्शनस्येषु प्रतिमर्शो द्विबिन्दुकः ॥ ३२ ॥
समयाः प्रतिमर्शस्य बुधैः प्रोक्ताश्चतुर्दश ।
प्रभाते दन्तकाष्ठान्ते गृहान्निर्गमने तथा ॥ ३३ ॥
व्यायामाध्वव्यवायान्ते विण्मूत्रान्तेऽञ्जने कृते ।
कवलान्ते भोजनान्ते दिवास्वप्नोत्थिते तथा ॥ ३४ ॥
वमनान्ते तथा सायं प्रतिमर्शः प्रयुज्यते ।
प्रतिमर्शेन शाम्यन्ति रोगाश्चैवोर्ध्वजत्रुजाः ॥ ३५ ॥
बिभीतनिम्बकम्भारीशिवाः शैलुश्च काकिनी ।
एकैकतैलनस्येन पलितं नश्यति ध्रुवम् ॥ ३६ ॥

इति योगतरङ्गिण्यां नस्यविधिर्नाम दशमस्तरङ्गः ॥ १० ॥

---

अथैकादशस्तरङ्गः ।

---

## अथ धूमपानविधिः—

धूमस्तु पञ्चविधः प्रोक्तः शमनो बृंहणस्तथा ।
रेचनः कासहा चैव वामनो व्रणशोधनः ॥ १ ॥
शमनस्य तु पर्यायो मध्यः प्रायोगिकस्तथा ।
बृंहणस्य च पर्यायौ स्नेहनो मृदुरेव च ॥ २ ॥
रेचनस्य तु पर्यायौ शोधनस्तीक्ष्ण एव च ।

एतेषां धूमस्य निषेधमाह—

अधूमार्हाश्च खल्वेते शीतो भीतश्च दुःखितः ॥ ३ ॥
दत्तबस्तिर्विरिक्तश्च रात्रौ जागरितस्तथा ।
पिपासितश्च दाहार्तस्तालुशोषी तथोदरी ॥ ४ ॥

---

१ ख. ग. °कर्णो नासि° । २ ख. °ते भ्रान्तो शी° ।

शिरोभितापी तिमिरी छर्द्याध्मानप्रपीडितः ।
क्षतोरस्कः प्रमेहार्तः पाण्डुरोगी च गर्भिणी ॥ ५ ॥
रूक्षः क्षीणोऽभ्यवहृतक्षीरक्षौद्रघृतासवः ॥
भुक्तान्नदधिमत्स्यश्च बालो वृद्धः कृशस्तथा ॥ ६ ॥
अकाले चातिपीतश्च धूमः कुर्यादुपद्रवान् ।
धूमो द्वादशमाद्वर्षाद्दीयतेऽशीतितो न च ॥ ७ ॥
कासश्वासप्रतिश्यायमन्याहनुशिरोरुजः ।
वातश्लेष्मविकारांश्च हन्याद्धूमः सुयोजितः ॥ ८ ॥
धूमप्रयोगात्पुरुषः प्रसन्नेन्द्रियवाङ्मनाः ।
दृढकेशद्विजश्मश्रुः सुगन्धिवदनो भवेत् ॥ ९ ॥
वदनेन पिबेद्धूमं वदनेनैव संत्यजेत् ।
नासिकाभ्यां ततः पीत्वा मुखेनैव वमेत्सुधीः ॥ १० ॥
शरावसंपुटे क्षिप्त्वा कल्कमङ्गारदीपितम् ।
छिद्रे नेत्रं निवेश्याथ व्रणं तेनैव धूपयेत् ॥ ११ ॥
एलादिकल्कं शमने स्निग्धं सर्जरसं मृदौ ।
रेचने तीक्ष्णकल्कं च कासघ्ने क्षुद्रिकोषणम् ॥ १२ ॥
वामने स्नायुचर्माद्यं दद्याद्धूमस्य पानकम् ।
व्रणे निम्बवचाद्यं च धूपनं तु प्रशस्यते ॥ १३ ॥
अन्येऽपि धूमा गेहेषु कर्तव्या रोगशान्तये ।
मयूरपिच्छं निम्बस्य पत्राणि बृहतीफलम् ॥ १४ ॥
मरिचं हिङ्गु मांसी च बीजं कार्पाससंभवम् ।
छागरोमाणि निर्मोकं विष्ठा वैडालिकी तथा ॥ १५ ॥
गजदन्तस्य चूर्णं हि किंचिद्घृतविमिश्रितम् ।
गृहेषु धूपनं दत्तं सर्वान्बालग्रहाञ्जयेत् ॥ १६ ॥
पिशाचान्राक्षसान्हत्वा सर्वज्वरहरो भवेत् ।

इत्यपराजितो धूमः ।

नेत्राणि धातुजान्याहुर्नलवंशभवान्यपि ॥ १७ ॥
चतुर्विंशत्यङ्गुलानि खण्डानि त्रीणि युक्तितः ।
योजितानि त्रिखण्डेयं नलिका नेत्रसंज्ञिता ॥ १८ ॥

इति योगतरङ्गिण्यां धूमपानविधिर्नामैकादशस्तरङ्गः ॥ ११ ॥

अथ द्वादशस्तरङ्गः ।

---

## अथ रक्तस्रुतिः—

शरत्काले स्वभावेन कुर्याद्रक्तस्रुतिं नरः ।
त्वग्दोषग्रन्थिशोफाद्या न स्यू रक्तस्रुतेर्यतः ॥ १ ॥
विस्रता द्रवता रागश्चलनं विलयस्तथा ।
भूम्यादिपञ्चभूतानामेते रक्ते गुणाः स्मृताः ॥ २ ॥

### रुधिरस्वरूपमाह—

इन्द्रगोपनिभं ज्ञेयं प्रकृतिस्थमसंहतम् ।
अन्यत्सर्वमशुद्धं हि विज्ञेयं रुधिरं नृणाम् ॥ ३ ॥

### तेषां रक्तस्रावः प्रशस्त इत्याह—

शोथे दाहेऽङ्गपाके च रक्तवर्णे सृजः स्रुतौ ।
वातरक्ते तथा कुष्ठे सपीडे दुर्जयेऽनिले ॥ ४ ॥
पाणिरोगे श्लीपदे च विषदुष्टे च शोणिते ।
ग्रन्थ्यर्बुदापचीक्षुद्ररोगरक्ताधिमन्थिषु ॥ ५ ॥
विदारीस्तनरोगेषु वपुषश्चातिगौरवे ।
रक्ताभिष्यन्दतन्द्रायां पूतिघ्राणस्य हेतवे ॥ ६ ॥
यकृत्प्लीहविसर्पेषु विद्रधौ पिडकोद्गमे ।
कर्णोष्ठघ्राणवक्त्राणां पाके दाहे शिरोरुजि ॥ ७ ॥
उपदंशे रक्तपित्ते रक्तस्रावः प्रशस्यते ।

### येन रक्तमोक्षकरणं तद्विधिमाह—

एषु रोगेषु शृङ्गैर्वा *जलौकालाबुकैरपि ॥ ८ ॥
अथवाऽपि शिरावेधै रक्तस्रावः प्रशस्यते ।
पञ्चकर्मविशुद्धस्य पीतस्नेहस्य देहिनः ॥ ९ ॥
सर्वाङ्गशोथयुक्तानामुदरश्वासकासिनाम् ।
छर्द्यतीसारदुष्टानां पाण्डूनां स्विन्नदेहिनाम् ॥ १० ॥

---

* जलौका° इत्यत्रेयं टिप्पणी क. पुस्तके—जलौकसां लक्ष°ताः द्वादश सविषानिर्विषाश्च सविषाः ॥ ६ ॥ तावन्त्य एव निर्विषाः ६ कलुषजलादौ सविषाः । अच्छजले निर्विषाः दैवाष्ठ-रथाः । क्षेत्राणि ग्रहणं जातिः पोषणं साधारणम् । जलौकसां च ये वेत्ति स साध्यान्जयेद्गदान् ।

---

१ क. °स्य चार्शसाम् । ध° ।

ऊनषोडशवर्षस्य गतसप्ततिकस्य च ।
आघातस्रुतरक्तस्य शिरामोक्षो न शस्यते ॥ ११ ॥
गृह्णाति शोणितं शृङ्गं दशाङ्गुलमितं स्थलात् ।
जलौका हस्तमात्रं तु तुम्बं च द्वादशाङ्गुलम् ॥ १२ ॥

तत्र रक्तमोक्षेऽङ्गुलप्रमाणमाह—

पदमङ्गुलमात्रं तु शिरा सर्वाङ्गशोधनी ।

तत्र सावशेषरक्तस्रावितमाह—

रक्ते दुष्टेऽवशिष्टेऽपि व्याधिर्नैव प्रकुप्यति ॥ १३ ॥
सावशेषमतः स्राव्यं रक्ते नातिक्रमो मतः ।

अतिरक्तस्रावितस्य लक्षणमाह—

आन्ध्यमाक्षेपकं तृष्णां तिमिरं च शिरोरुजम् ॥ १४ ॥
पक्षघातं श्वासकासौ हिक्कां दाहं च पाण्डुताम् ।
कुरुतेऽतिस्रुतं रक्तं मरणं वा करोति हि ॥ १५ ॥

तस्य क्रिया—

देहस्योत्पत्तिरसृजा देहस्तेनैव धार्यते ।
विना तेन व्रजेज्जीवो रक्षेद्रक्तमतो बुधः ॥ १६ ॥
शीतोपचारैः कुपिते स्रुतरक्तस्य मारुते ।
कोष्णेन सर्पिषा शोथं शनकैः परिषेचयेत् ॥ १७ ॥

तस्य हितमाह—

क्षीणस्यैणशशोरभ्रहरिणच्छागमांसजः ।
रसः समुचितः पाने क्षीरं वा षष्टिका हिता ॥ १८ ॥
पीडा शान्तिर्लघुत्वं च व्याधेरुद्रेकसंक्षयः ।
मनःस्वास्थ्यं भवेच्चिह्नं सम्यग्विस्राविते‌ऽसृजि ॥ १९ ॥

तस्य निषेधमाह—

व्यायाममैथुनक्रोधशीतस्नानप्रवातकान् ।
एकाशनं दिवा निद्रां क्षाराम्लकटुभोजनम् ॥ २० ॥
शोकं वाऽपि मदाजीर्णं त्यजेद्यावद्बली भवेत् ।

---

१ ख. ग. °तं बलात् । म° । २ क. रक्तं नैव कदाचन । आ° । ३ ख. °काशनं ।

तत्र त्रिदोषरुधिरचिह्नमाह—

फेनि रूक्षं भवेत्सूची निस्तोदि पवनादसृक् ॥ २१ ॥
विसृताश्यावपीताभं कोष्णं पित्तेन जायते ।
मन्दगं बहलं स्निग्धं मांसपेशीप्रभं कफात् ॥ २२ ॥
द्विदोषदुष्टं संसृष्टं रुधिरं पूतिगन्धिकम् ।
सर्वलक्षणसंपन्नं काञ्जिकाभं च जायते ॥ २३ ॥
विषदुष्टं भवेच्छ्यावं नासिकोन्मार्गगं तथा ।
मिश्रं काञ्जिकसंकाशं सर्वकुष्ठकरं भवेत् ॥ २४ ॥

इति शार्ङ्गधरात् ।

इति योगतरङ्गिण्यां रुधिरमोक्षविधिनामा द्वादशस्तरङ्गः ॥ १२ ॥

---

अथ त्रयोदशस्तरङ्गः ।

---

अथ राजार्हरसवत्यादिगुणाः ।

आग्नेयां दिशि कर्तव्यमावासस्य महानसम् ।
गवाक्षजालमार्गाढ्यमर्धमित्युपलेपितम् ॥ १ ॥
अग्निस्थाने यतस्तत्र भोक्तुरन्नं तु वर्धते ।
जाठरोऽग्निरिति प्रायो वृद्धवैद्योक्तिविश्रुतिः ॥ २ ॥
चुल्ली तत्र प्रकर्तव्या पूर्वपश्चिममायता ।
मृन्मयादीनि भाण्डानि क्षालितानि च वारिणा ॥ ३ ॥
तेषु यत्पच्यते द्रव्यं गुणवत्सर्वसंमतम् ।

तत्र भाण्डस्य गुणमाह—

मृद्भावे पचेल्लोहे चक्षुरर्शोविकारनुत् ।
कांस्यजे पाचितं यद्धि तद्धितं मतिदं शुचि ॥ ४ ॥
यत्तु ताम्रमये सिद्धमरुच्यं त्वम्लपित्तकृत् ।
सौवर्णे राजते पाच्यमाढ्यभूमिभुजां गृहे ॥ ५ ॥
तत्पात्रं सर्वदोषघ्नं धिषणोत्सवदं सदा ।
संकीर्णे पात्रसंभारे मार्गे वा ग्रामवर्जिते ॥ ६ ॥

---

१ ख. °ष्टं त्रिदुष्टं पू° ।

## अथ पाकविधिः—

स्थापयेद्गुणवत्सूदः सिद्धान्नं पात्रकान्तरे।
भक्तं स्वपात्रके स्थाप्यं न स्थाप्यं पात्रकान्तरे ॥ ७ ॥
घृतं काष्ठायसोः स्थाप्यं मांसमांसरसौ पुनः।
स्थापयेद्राजते हैमे पात्रे लोहेऽथ काष्ठजे ॥ ८ ॥
पत्रादि षड्विधं शाकं स्थाप्यं काष्ठाश्मलोहजे।
पक्कान्नं पिष्टजं भक्ष्यं स्थाप्यं कांस्येऽथ दारुजे ॥ ९ ॥
शृतं क्षीरं स्थापनीयं पात्रे काष्ठस्य वा सूदः।
पानीयं पायसं तक्रं मृन्मयेष्वेव धारयेत् ॥ १० ॥
काञ्चने स्फाटिके वाऽथ वैडूर्यादिविचित्रिते।
धारयेत्सर्वदा पात्रे रागखाडवसक्तुकान् ॥ ११ ॥
एतेषु स्थापितं द्रव्यं पात्रेषु गुणदं भवेत्।
सर्वदा सुखदं हृद्यमन्यथा दोषकारकम् ॥ १२ ॥

## अथ महानसोपयोग्युपकरणानि—

वस्तूनि भोजनार्हाणि विविच्यानि पुनः पुनः।
सर्वाणि गुणयुक्तानि स्थापितानि महानसे ॥ १३ ॥

## अथ सर्ववस्तून्याह—

दार्स्यारया(?)मार्जनी वाढा पूतहण्डी सुकूर्चिका।
घर्षणी वैणवं पात्रं जलपूर्णं स्थलं ततः ॥ १४ ॥
वह्निसंजननग्रावा कुद्दालः सुकुठारकः।
दारुखण्डानि शुष्काणि हस्तमात्राणि चेन्धनम् ॥ १५ ॥
अजीर्णान्यगुरूणीह कीटवर्ज्यानि सन्ति च।
अम्बरीषश्चालनी च मुसलं चाप्युलूखलम् ॥ १६ ॥
शिला शिलासुतः शूर्पं चतुरस्रा च पट्टिका।
संदंशकौ च दर्पश्च वस्त्रखण्डचतुष्टयम् ॥ १७ ॥
नलिका छुरिका चैव शूलानि च कटाहकम्।
वह्निसंचालनार्थाय दर्वी दीर्घा सुलोहजा ॥ १८ ॥
इत्यादिवस्तुजातैः स्याद्गुणाढ्यं तन्महानसम् ॥

---

१ ग. °प्यं दिने तु पा° । २ ग. °गषाण्डावस° । ३ ग. °विधाने । ४ ग. °स्यांशामा° ।

अथान्नरक्षार्थं विषदुष्टान्नपरीक्षार्थं च सद्वैद्यस्थापनम् ।

राजा राजगृहासन्ने प्राणाचार्यं निवेशयेत् ॥ १९ ॥
सर्वदा स भवत्येवं सर्वत्र प्रतिजागृविः ।
अन्नपानं विषाद्रक्षेद्विशेषेण महीपतेः ॥ २० ॥
योगक्षेमौ तदायत्तौ धर्माद्या यन्निबन्धनाः ।
तस्माद्वैद्येन सततं विषाद्रक्ष्यो नराधिपः ॥ २१ ॥

अथ सद्वैद्यलक्षणम् ।

आयुर्वेदकृताभ्यासः सर्वत्र प्रियदर्शनः ।
उक्तिहेतुसमायुक्त एष वैद्यो विधीयते ॥ २२ ॥
क्रोधपारुष्यमात्सर्यमायाशादिविवर्जितम् ।
जितेन्द्रियं क्षमावन्तं शीलशौचदयान्वितम् ॥ २३ ॥
कुलीनं धार्मिकं स्निग्धं सुसत्त्वं सन्मते स्थितम् ।
अलुब्धमशठं भक्तं कृतज्ञं प्रियदर्शनम् ॥ २४ ॥
मेधाविनमविभ्रान्तमनुरक्तं हितैषिणम् ॥ २५ ॥
पटुं प्रगल्भं निपुणं दक्षमालस्यवर्जितम् ।
सर्ववैद्यगुणैर्युक्तं नित्यसंनिहितागदम् ॥ २६ ॥
महानसे प्रयुञ्जीत वैद्यं सद्वैद्यपूजितम् ।
वैद्यः पुरोहितो मन्त्री दैवज्ञश्च चतुर्थकः ॥ २७ ॥
द्रष्टव्याः प्रातरेवैते नित्यं श्रेयोऽभिवृद्धये ।

अत्रैव विदेहः—

दैवज्ञो मन्त्रविद्वैद्यः पुरोधाश्च चतुर्थकः ॥ २८ ॥
एते राज्ञा सदा पोष्याः कृच्छ्रेणापि यथाऽर्भकाः ।
वैद्यविद्वज्जनामात्या यस्य राज्ञः प्रियंवदाः ॥ २९ ॥
आरोग्यधर्मकोशाश्च प्रहीयन्तेऽस्य न कचित् ।
गतश्रीर्गणकान्द्वेष्टि गतायुश्च चिकित्सकान् ॥ ३० ॥
गतश्रीश्च गतायुश्च ब्राह्मणान्द्वेष्टि भारत ।
[ * क्वचिद्धर्मः क्वचिन्मैत्री क्वचिदर्थः क्वचिद्यशः ।
कर्माभ्यासः क्वचिच्चेति चिकित्सा नास्ति निष्फला ॥ १ ॥

* चतुरस्रान्तर्गतो ग्रन्थो ग. पुस्तकस्थः ।

१ ग. 'यालस्यवि' ।

चिकित्सितेश्वरं यो वै न निष्क्रीणाति दुर्मतिः ।
स यत्करोति सुकृतं तत्सर्वं भिषगश्नुते ॥ २ ॥ ]
संचयं च प्रकोपं च प्रसरं स्थानमेव च ॥ ३१ ॥
दोषाणामिह यो वेद स भवेद्भिषगुत्तमः ।

कुवैद्यः

कुवैद्यः कर्कशो दीनः स्वाधीनः स्वयमागतः ॥ ३२ ॥
पञ्च वैद्या न पूज्यन्ते धन्वन्तरिसमा अपि ।
न स्वप्याद्रोगिसदने न भुञ्जीयात्कदाचन ॥ ३३ ॥
विनाऽऽह्वानं न गच्छेच्च न ब्रूयान्मरणं भिषक् ।
निघण्टुना विना वैद्यो विद्वान्व्याकरणं विना ॥ ३४ ॥
आयुधेन विना योद्धा त्रयो हास्यविभागिनः ।
ज्योतिषं व्यवहारं च प्रायश्चित्तं चिकित्सितम् ॥ ३५ ॥
विना शास्त्रेण यो ब्रूयात्तमाहुर्ब्रह्मघातकम् ।
सुश्रुतं न श्रुतं येन हारीतं न तु हारितम् ॥ ३६ ॥
नाऽऽलोकि चरकं शास्त्रं स वैद्यो वैद्यनिन्दितः ।
सुश्रुतं सुश्रुतं येन किमन्यैर्बहुभिः श्रुतैः ॥ ३७ ॥
सुश्रुतं न श्रुतं येन किमन्यैर्बहुभिः श्रुतैः ।

इति योगतरङ्गिण्यां राजार्हरसवत्यादिगुणकथनं नाम
त्रयोदशस्तरङ्गः ॥ १३ ॥

---

अथ चतुर्दशस्तरङ्गः ।

---

## अथ सूपकारप्रशंसा—

पितृपैतामहो दक्षः शास्त्रीयो मिष्टपाचकः ॥ १ ॥
शौचवानतिभक्तश्च सूपकारः स उच्यते ।

उक्तं च—

भवेयुर्धार्मिकाः स्निग्धाः सूपकाराः क्रमागताः ॥ २ ॥
धृतोष्णीषाश्च शुचयस्तथा वैद्यवशे स्थिताः ।
नृपामित्रद्विषो दक्षा वलक्षकुलसंभवाः ॥ ३ ॥
सर्वपाकेषु निष्णाता दयावन्तो विचक्षणाः ।
अन्येऽपि तत्र ये केचिच्चरन्ति परिचारकाः ॥ ४ ॥

तेऽपि चैवंविधा योज्यास्तदध्यक्षोऽपि तादृशः ।
सूपकारपतिस्तत्र प्रायो वैद्यगुणान्वितः ॥ ५ ॥
क्षणं न विश्वसेत्तांस्तु तत्त्वज्ञस्तत्प्रशासनः ।
जीवनं जीविनामन्नमुक्तं विधिपाचितम् ॥ ६ ॥
तदेवाविधिना युक्तं परिणामे विषोपमम् ।
ऋतूनां लक्षणं ज्ञात्वा ततस्तद्विधिमाचरेत् ॥ ७ ॥
अत एवात्र वक्ष्यामि तच्चिह्नं तद्धिताहितम् ।

इति योगतरङ्गिण्यां सूपकारप्रशंसा नाम चतुर्दशस्तरङ्गः ॥ १४ ॥

---

अथ पञ्चदशस्तरङ्गः ।

---

## अथ ऋतुचर्याः—

शिशिरः पुष्पसमयो ग्रीष्मो वर्षाः शरद्धिमः ।
माघादिमासयुग्मैः स्युर्ऋतवः षट् क्रमादिमे ॥ १ ॥
ग्रीष्मो मेषवृषौ प्रोक्तः प्रावृण्मिथुनकर्कटौ ।
सिंहकन्ये स्मृता वर्षास्तुलावृश्चिकयोः शरत् ॥ २ ॥
धनुर्ग्राहौ च हेमन्तो वसन्तः कुम्भमीनयोः ।
गङ्गाया दक्षिणे देशे वृष्टेर्बहुलभावतः ॥ ३ ॥
उभौ मुनिभिराख्यातौ प्रावृड्वर्षाभिधावृतू ।
तस्या एवोत्तरे देशे हिमप्रचुरभावतः ॥
एतावुभौ समाख्यातौ हेमन्तशिशिरावृतू ॥ ४ ॥

## अथ प्रत्यहि ऋतवः—

अह्नोऽंशः प्रथमो वसन्तसमयो मध्यो निदाघस्तथा
यः शेषः खलु तस्य सोऽत्र समयो हेमन्तसंज्ञो मतः ॥
यामिन्याः प्रथमस्तु यः स शिशिरो मध्यश्च तस्याः शर-
त्सञ्छेषस्तु मुनीश्वरैरभिहितः कालो हि वर्षाभिधः ॥ ५ ॥

## अथायनविचारः—

शिशिराद्यैस्त्रिभिस्तैस्तु विद्यादयनमुत्तरम् ।
वर्षादिभिस्त्रिभिस्तैस्तु विज्ञेयं दक्षिणायनम् ॥ ६ ॥

उत्तरायणमादानं यदादत्ते नृणां बलम् ।
मार्गस्वभावात्तीक्ष्णोष्णरूक्षा अत्रार्कमारुताः ॥ ७ ॥
क्षपयन्ति भुवः सौम्यान्गुणानाग्नेयमित्यदः ।
दक्षिणायनमाख्यातं विसर्गोऽत्र बली शशी ॥ ८ ॥
सौम्यत्वाद्बलमाधत्ते विसर्गः प्राणिनामतः ।
हेमन्ते शिशिरे चाग्र्यं विसर्गादानयोर्बलम् ॥ ९ ॥
शरद्वसन्तयोर्मध्यं हीनं वर्षानिदाघयोः ॥ १० ॥

इत्ययनविचारः ।

अथ ऋतुलक्षणानि तत्राऽऽदौ हेमन्तः—

तुषारजालैः पिहितानि यत्र सर्वाण्यनीराणि मुखानि भानुः ।
प्रातः प्रसन्नानि करैः करोति दिशां वधूनामिव खण्डितानाम्॥११॥
प्रियङ्गुपुंनागकलोध्ररेणुव्रजैर्नभो वाति हिमाद्रिवायुः ।
आच्छादयन्धूमवितानलीढं विद्यादृतुं तं हिमनामधेयम् ॥ १२ ॥
नीहारानिलसंस्पर्शाद्बलवान्मारुतो यतः ।
अतो हेमन्तसमये सेव्या शुण्ठी हरीतकी ॥ १३ ॥
तिलतैलेन शिरसो गात्रस्याभ्यङ्गमाचरेत् ।
सेवेताऽऽदित्यकिरणान्निर्धूमं च हुताशनम् ॥ १४ ॥
माञ्जिष्ठं चापि कौशेयं लोमजं चित्रमम्बरम् ।
नव्यं सेव्यं च धनिभिः सद्म जोङ्गकधूपितम् ॥ १५ ॥
हेमन्ते कटुतिक्तोष्णमम्लक्षारं घृतं दधि ।
गोधूमतिलमाषेक्षुविकारान्भक्षयेद्बहून् ॥ १६ ॥
औदकानूपमांसानि शूलपक्वानि वाऽन्यथा ।
हेमन्ते सेवयेन्नित्यमाशु शीतार्तिशान्तये ॥ १७ ॥
कस्तूरिकागुरुविमिश्रितकुङ्कुमार्द्र-
देहो निषेव्य रमणी रतिखेदखिन्नः ।
शीते कृती हिमविशालनिशासु धन्य-
स्तारुण्यपीनकुचयोगनिरस्तशीतः ॥ १८ ॥
निर्वातं गृहमासवाश्च विमलाः स्निग्धानि मांसानि च
क्षीरं सान्द्रतरं दधीनि ससराण्याज्यानि भूयांसि च ।

---

१ ग. समयत°।

तूल्यां पीनपयोधरा च हुतभुक्तैलं सुखोष्णं जलं
द्वित्रिर्भोजनमौषधामयमहो हेमन्तकाले हितम् ॥ १९ ॥

इति हेमन्तः ।

अथ शिशिरः—

यत्रामृतद्युतिकरव्रजसंनिकाशै-
र्व्याप्ता दिशश्च¹ पिहिताश्च तुषारजालैः ।
रुद्धं नभश्च समुदीक्ष्य ततो भियेव
वह्नेर्दिशं स भजते शिशिरे विवस्वान् ॥ २० ॥
हिमोक्तचर्या शिशिरेऽपि कार्या
पथ्याऽत्र पथ्याऽसह पिप्पलीभिः ।
पिष्टान्नकैः सूरणशृङ्गवेर-
मिश्रैस्तु भोज्यं मनुजैर्नियोज्यम् ॥ २१ ॥

इति शिशिरः ।

अथ वसन्तः ।

यत्रागस्त्यहरित्प्रवृत्तपवनव्याधूतचूतप्रजा-
रामोद्दामपरागपुञ्जपिहितं व्योमानिशं राजते ।
छन्नं रेणुचयैरिव स्मरविभोर्यात्रोद्धृतैरिच्छतो
जेतुं सर्वजगद्धि स स्मरसखो ज्ञेयो वसन्तोदयः ॥ २२ ॥
तत्र श्लेष्मा बलोपेतो रुणद्धि जठरानलम् ।
रोगान्करोति बहुशस्तेन पूर्वं कफं जयेत् ॥ २३ ॥
वान्ती रेको मृदुश्च प्रहिजलमन(नि)लः पद्धतिः क्षौद्रपथ्ये
जीर्णं गोधूममुद्गाढकिचणकयवाद्यन्नमस्निग्धमेतत् ।
तिक्तस्तीक्ष्णः कषायः कटुरपि च रसो जाङ्गलं मांसमह्नि
स्वापस्त्यागस्तृतीयेऽहनि तु निधुवनं पथ्यमेतद्वसन्ते ॥ २४ ॥
दधि दुग्धं गुरुस्निग्धमम्लं च मधुरं रसम् ।
अक्षौद्रं द्राक्षमह्नि स्वापं च सुरतं त्यजेत् ॥ २५ ॥

इति वसन्तः ।

अथ ग्रीष्मः—

---

¹ ग. °श्च विदिशश्च ।

यत्र प्रचण्डतरचण्डकरप्रताप-
संशोषितद्रुमलतातृणवारिपूरः ।
उज्जृम्भते पवनवेगविकीर्णरेणु-
च्छन्ना भवन्ति च दिशः स निदाघकालः* ॥ २६ ॥

तीक्ष्णांशुरतितीक्ष्णांशुर्ग्रीष्मे संक्षिपतीव यत् ।
प्रत्यहं क्षीयते श्लेष्मा तेन वायुर्विवर्धते ॥ २७ ॥
स्निग्धच्छायं गृहं सेव्यं सेव्या पथ्या गुडान्विता ।
शशीणमुद्गगोधूमशालितण्डुलशर्करम् ॥ २८ ॥
तण्डुलीयककूष्माण्डद्राक्षामलकसेरुकम् ।
कराम्बुजककालिङ्गखर्जूरकपरूपकम् ॥ २९ ॥
पथ्यमन्नं तथा चान्यद्वातपित्तहरं भजेत् ।
सुधौतानि च वस्त्राणि सेव्यान्यातपशान्तये ॥ ३० ॥
भोज्यं शीतं च मधुरं फलं तृष्णाहरं मृदु ।
स्निग्धं द्रवं रसालादि पानकं शीतलं पिबेत् ॥ ३१ ॥
सक्तूनालोडिताञ्शीतवारिणा साज्यशर्करान् ।
भक्षयेच्छीतलं वारि पिबेदेलेन्दुवासितम् ॥ ३२ ॥

निषेधः—

त्यजेत्कटुकतीक्ष्णोष्णलवणाम्लविदाहकृत् ।
व्यायामं सीधुपानं च ग्रीष्मे चार्कांशुसेवनम् ॥ ३३ ॥

अथ सेव्यम् ।

आरामभूरुहनिरस्तरविप्रतापा
वाप्यः प्रसन्नकमलाः कमलाकराश्च ।
नद्यश्च चन्दनरसो घनसारमिश्रः
सेव्याः स्रजो विधुरुचश्च निदाघकाले ॥ ३४ ॥

उक्तं च—

आरामाः शीतमन्नं शिशिरमपि जलं सेन्दु सैलं च निद्रा
श्वेतं सूक्ष्मं च वस्त्रं स्रगपि सुकुसुमा चन्द्रपाटीरलेपः ।

* ग. पुस्तके निदाघकाल इत्यस्याग्रे—निदाघे भास्करः प्राणितेजः क्षिपति भानुभिः, इतीदमर्धं दृश्यते ।

सायं तोयावगाहैः सरसि सरिति वा फुल्लपङ्केरुहायां
सश्वेता साज्यसक्तुर्व्यजनमरुदपि ग्रीष्मकाले हिताय ॥ ३५ ॥

पक्काम्लिकाहारहूरामन्थः शर्करयाऽन्वितः ।
मरिचैलेन्दुयुक्पीतो दाहतृष्णोष्णतापहः ॥ ३६ ॥
दिवा स्वापं प्रकुर्वीत शीतले भवनोदरे ।
पित्तं शाम्यति तेनात्र ग्रीष्मे वायुर्न चीयते ॥ ३७ ॥

इति ग्रीष्मः ।

## अथ वर्षाः ।

यत्र व्योम चितं चयैर्जलमुचां भूमिर्नवैः शाद्वलैः
क्वापि क्वापि तु नूतनाम्बुपटलच्छन्नोन्नतनिम्नस्थली ।
भेकैः पक्वपलाण्डुपाण्डुरुचिभिस्तोयाशया सेविता
नीपैः सर्वदिशश्च सोऽस्तु जगतो हर्षाय वर्षागमः ॥ ३८ ॥

पेयं कूपजलं ससैन्धवयुता भक्ष्याऽभया प्रावृषि
स्थेयं सौधतले सुखोष्णसलिले स्नानं मुहुर्मर्दनम् ।
स्नेहैर्नाति विधीयते निधुवनं भोज्यं च योज्यं जनै-
राज्यं सामिषमीनभक्ष्यमुचितं साम्लं सदध्यादिकम् ॥३९॥

इति वर्षाः ।

## अथ शरत्

यत्रोज्ज्वला जलमुचो लसदिंदुबिम्ब-
तारं नभो विकचनीरजकैरवाणि ।
नीराणि मानसनिमानि सतां विभान्ति
स्वच्छानि काशकुसुमानि च सा शरत्स्यात् ॥ ४० ॥

चितं प्रावृषि यत्पित्तं शरद्येतत्प्रकुप्यति ।
तेन शर्करया सार्धं सेवनीया हरीतकी ॥ ४१ ॥
ऐक्षवं शालयो मुद्गाः सरोम्भः क्वथितं पयः ।
शरद्येतानि पथ्यानि प्रदोषे चेन्दुरश्मयः ॥ ४२ ॥
रसालां पानकं मिष्टं क्षैरेयं स्वादुतक्रकम् ।
कषायं मधुरं तिक्तं शीतलं जाङ्गलं पलम् ॥ ४३ ॥
धात्रीं पटोलं सर्पिश्च कारवेल्लं भजेदिह ।
तीक्ष्णमम्लं च लवणं दधि तैलातपम् ॥ ४४ ॥

यत्र प्रचण्डतरचण्डकरप्रताप-
संशोषितद्रुमलतातृणवारिपूरः ।
उज्जृम्भते पवनवेगविकीर्णरेणु-
च्छन्ना भवन्ति च दिशः स निदाघकालः*॥ २६ ॥

तीक्ष्णांशुरतितीक्ष्णांशुर्ग्रीष्मे संक्षिपतीव यत् ।
प्रत्यहं क्षीयते श्लेष्मा तेन वायुर्विवर्धते ॥ २७ ॥
स्निग्धच्छायं गृहं सेव्यं सेव्या पथ्या गुडान्विता ।
शालीनमुद्गगोधूमशालितण्डुलशर्करम् ॥ २८ ॥
तण्डुलीयककूष्माण्डद्राक्षामलकसेरुकम् ।
फराम्बुजककालिङ्गखर्जूरकपरूषकम् ॥ २९ ॥
पथ्यमन्नं तथा चान्यद्वातपित्तहरं भजेत् ।
सुधौतानि च वस्त्राणि सेव्यान्यातपशान्तये ॥ ३० ॥
भोज्यं शीतं च मधुरं फलं तृष्णाहरं मृदु ।
स्निग्धं द्रवं रसालादि पानकं शीतलं पिबेत् ॥ ३१ ॥
सक्तूनालोडिताञ्शीतवारिणा साज्यशर्करान् ।
भक्षयेच्छीतलं वारि पिबेदैलेन्दुवासितम् ॥ ३२ ॥

निषेधः—

त्यजेत्कटुकतीक्ष्णोष्णलवणाम्लविदाहकृत् ।
व्यायामं सीधुपानं च ग्रीष्मे चार्कांशुसेवनम् ॥ ३३ ॥

अथ सेव्यम् ।

आरामभूरुहनिरस्तरविप्रतापा
वाप्यः प्रसन्नकमलाः कमलाकराश्च ।
नद्यश्च चन्दनरसो घनसारमिश्रः
सेव्याः स्रजो विधुरुचश्च निदाघकाले ॥ ३४ ॥

उक्तं च—

आरामाः शीतमन्नं शिशिरमपि जलं सेन्दु सैलं च निद्रा
श्वेतं सूक्ष्मं च वस्त्रं स्रगपि सुकुसुमा चन्द्रपाटीरलेपः ।

———
* ग. पुस्तके निदाघकाल इत्यस्याग्रे—निदाघे भास्करः प्रगितेजः क्षिपति भानुभिः, इतीदमधिकं दृश्यते ।

घटिकानन्तरं द्रव्योंपरिमागं विनिर्हरेत् ।
भक्तं विभक्तमेतत्तु राजयोग्यं मनोहरम् ॥ ९ ॥
सद्यः शालेयमन्नं शशिकरनिकरप्रोज्ज्वलं सिद्धसारं
भ्राम्यद्बाष्पच्छलेन त्रिदशपुरसुधाधेयमाधुर्यधुर्यम् ।
अन्योन्यं नैव लग्नं परिमलभरितागारवेदीविभागं
स प्राप्नोति प्रसन्नः प्रमथपरिवृढो यस्य पुंसः सदा स्यात् ॥ १० ॥

तत्र भक्तगुणाः—

भक्तं वह्निकरं पथ्यं तर्पणं मूत्रलं लघु ।
रसे पाके च मधुरं वातपित्तहरं परम् ॥ ११ ॥
वृष्यं कृशहितं नापि श्लेष्मलं बलकारकम् ।
सुधौतं प्रस्रुतं कोष्णं विशदं गुणवन्मतम् ॥ १२ ॥
अधौतमस्रुतं शीतं गुरुवृष्यं कफप्रदम् ।

अथ भृष्टतण्डुलभक्तम्—

भृष्टतण्डुलजं भक्तं रुचिकृत्कफजिल्लघु ॥ १३ ॥
वातपित्तहरं ग्राहि ज्वरयक्ष्मातिसारनुत् ।

अथ नानाधान्यभक्तगुणाः—

यस्य धान्यस्य यद्भक्तं तस्य तद्गुणमुद्दिशेत् ॥ १४ ॥

अथ पीतभक्तम्—

सर्पिषि पड्भिभृष्टानां तण्डुलानां सितत्विषाम् ।
षड्गुणेऽम्भसि सिद्धानां तथा तत्र घटीः क्षिपेत् ॥ १५ ॥
घृतभृष्टा अष्टमांशा लवणं चोचितं ततः ।
काश्मीरं पयसा किंचित्पिष्ट्वा सूक्ष्मं समावपेत् ॥ १६ ॥
मरीचैलालवङ्गेन्दून्यदि दद्यान्न रामठम् ।
किंचिदाज्यं पुनर्दत्त्वा पिधाय स्थापयेद्बुधः ॥ १७ ॥
एवं मांसादिभिरपि पीतभक्तं प्रकुर्वते ।
पीतभक्तं गुरुस्निग्धं वृष्यं बल्यं कफप्रदम् ॥ १८ ॥
पित्तवातहरं स्वादु रुच्यमोजःप्रभाकरम् ।

अथेक्षुरससाधितं भक्तम्—

इक्ष्वम्बुसाधितं भक्तं वातपित्तज्वरापहम् ॥ १९ ॥

---

१ ग. °शाश्वतुर्भागा ।

दिवास्वप्नं पुरोवातं शरत्काले विवर्जयेत् ।

इति शरत् ।

पूर्वर्तुमाससप्ताहाद्दर्शाविनो विधिमाचरेत् ॥ ४५ ॥
ऋतोर्लक्षणसंयोगादृतुसंधिर्यतो भवेत् ।

इति योगतरङ्गिण्यामृतुषट्कवर्णनं नाम पञ्चदशस्तरङ्गः ॥ १५ ॥

---

अथ षोडशस्तरङ्गः ।

---

## अथ सिद्धान्नादिपाकगुणकथनम् ।

तत्र भक्तम्—

तण्डुलानम्भसा धौतान्द्विस्त्रिर्वा मौक्तिकाकृतीन् ।
पूर्यो शरावे स्थाल्यास्पस्थिते सविवरे दृढे ॥ १ ॥
परितो वस्त्रखण्डेन विसंधिपरिवेष्टिते ।
निक्षिप्य पिण्डवत्कृत्वा वर्तुलान्स्थापयेत्क्षणम् ॥ २ ॥
यावद्बाष्पोद्गमस्तस्मात्ततस्तांस्तु शलाकया ।
तेन च्छिद्रेण निक्षिप्य पचेत्तत्राथ कोमले ॥ ३ ॥
निर्मण्डं स्रावयेत्पश्चात्सर्पिस्तत्राल्पमर्पयेत् ।
क्षणमाच्छाद्य गृह्णीयाद्भक्तं राजार्हमुत्तमम् ॥ ४ ॥

नलपाकस्तु—

नीरे चतुर्दशगुणे तण्डुलानां च पोटलीम् ।
सूक्ष्माम्बरेण संबध्य दोलायन्त्रक्रमेण तु ॥ ५ ॥
पचेदुपरि यावत्स्याद्बुद्बुदानां समुद्भवः ।
मण्डवच्च जलं पश्चात्पोटलीमुद्धरेत्ततः ॥ ६ ॥
घटिकार्धं तथाऽऽस्थाप्य ततो भक्तं समाहरेत् ।

अन्ये तु—

यथोचिते जले धौतांस्तण्डुलान्विपचेत्सुधीः ॥ ७ ॥
मण्डं संस्राव्य सर्पिस्तु तत्र किंचिद्विनिक्षिपेत् ।
ज्वलन्तमेकमङ्गारं तदुपर्यर्पयेदथ ॥ ८ ॥

---

१ ग. °तू । अहो ऊछु° ।

घटिकानन्तरं दर्व्योपरिभागं विनिर्हरेत् ।
भक्तं विभक्तमेतत्तु राजयोग्यं मनोहरम् ॥ ९ ॥
सद्यः शालेयमन्नं शशिकरनिकरप्रोज्ज्वलं सिद्धसारं
भ्राम्यद्वाष्पच्छलेन त्रिदशपुरसुधाधेयमाधुर्यधुर्यम् ।
अन्योन्यं नैव लग्नं परिमलभरितागारवेदीविभागं
स प्राप्नोति प्रसन्नः प्रमथपरिवृढो यस्य पुंसः सदा स्यात् ॥ १० ॥
तत्र भक्तगुणाः—
भक्तं वह्निकरं पथ्यं तर्पणं मूत्रलं लघु ।
रसे पाके च मधुरं वातपित्तहरं परम् ॥ ११ ॥
वृष्यं कृशहितं नापि श्लेष्मलं बलकारकम् ।
सुधौतं प्रस्रुतं कोष्णं विशदं गुणवन्मतम् ॥ १२ ॥
अधौतमस्रुतं शीतं गुरुवृष्यं कफप्रदम् ।

अथ भृष्टतण्डुलभक्तम्—

भृष्टतण्डुलजं भक्तं रुचिकृत्कफजिल्लघु ॥ १३ ॥
वातपित्तहरं ग्राहि ज्वरयक्ष्मातिसारनुत् ।

अथ नानाधान्यभक्तगुणाः—

यस्य धान्यस्य यद्भक्तं तस्य तद्गुणमुद्दिशेत् ॥ १४ ॥

अथ पीतभक्तम्—

सर्पिषि पक्वभृष्टानां तण्डुलानां सितत्विषाम् ।
षड्गुणेऽम्भसि सिद्धानां तथा तत्र वटीः क्षिपेत् ॥ १५ ॥
घृतभृष्टा अष्टमांशा लवणं चोचितं ततः ।
काश्मीरं पयसा किंचित्पिष्ट्वा सूक्ष्मं समावपेत् ॥ १६ ॥
मरीचैलालवङ्गेन्दून्यदि दद्यान्न रामठम् ।
किंचिदाज्यं पुनर्दत्त्वा पिधाय स्थापयेद्बुधः ॥ १७ ॥
एवं मांसादिभिरपि पीतभक्तं प्रकुर्वते ।
पीतभक्तं गुरुस्निग्धं वृष्यं बल्यं कफप्रदम् ॥ १८ ॥
पित्तवातहरं स्वादु रुच्यमोजःप्रभाकरम् ।

अथेक्षुरससाधितं भक्तम्—

इक्ष्वम्बुसाधितं भक्तं वातपित्तज्वरापहम् ॥ १९ ॥

---

१ ग. °शश्वत्तुषांशा ।

वृष्यं बल्यं गुरु स्वादु रसे पाके कफप्रदम् ।

अथ तक्रसिद्धं शाकम्—

तक्रसिद्धं तु पन्थक्तं ग्रहण्यर्शःश्रमापहम् ॥ २० ॥
वातघ्नं बल्यं श्लेष्मपित्तरक्तविवर्धनम् ।

अथ यवागूः

यवागूः षड्गुणे तोये संसिद्धा विरलद्रवा ॥ २१ ॥
यवागूर्ग्राहिणी तृष्णाज्वरघ्नी बस्तिशोधिनी ।

अथ विलेपी—

चतुर्गुणाम्बुसंसिद्धा विलेपी घनसिक्थिका ॥ २२ ॥
विलेपी दीपनी बल्या हृद्या संग्राहिणी लघुः ।
व्रणाक्षिरोगिणां पथ्या तर्पणी तृड्ज्वरापहा ॥ २३ ॥

अथ पेया—

पेया सिक्थान्विता तोये चतुर्दशगुण कृता ।
पेया कुक्षिगदक्लान्तिज्वरस्तम्भातिसारजित् ॥ २४ ॥
रुच्याग्निकृल्लघुर्दोषमलस्वेदानुलोमिनी ।

अथ मण्डः—

मण्डश्चतुर्दशगुणे सिद्धस्तोये त्वसिक्थकः ॥ २५ ॥
मण्डो ग्राही लघुः शीतो दीपनो धातुसाम्यकृत् ।
स्रोतोमार्दवकृत्पित्तज्वरश्लेष्मश्रमापहः ॥ २६ ॥
वाट्यमण्डो यवैर्भृष्टैर्लाजमण्डस्तु शालिभिः ।
वाट्यमण्डो लघुर्ग्राही शूलानाहत्रिदोषनुत् ॥ २७ ॥
नवज्वरेऽपि पथ्योऽयं पटोलमगधान्वितः ।
लाजमण्डो लघुर्ग्राही हृद्यः पाचनदीपनः ॥
अतीसारग्रहण्यर्शोरोचकारुक्त्रिदोषजित् ॥ २८ ॥
संसिद्धा विरलद्रवा रसगुणे तोये यवागूर्मता
पेया सिक्थसमन्विता अनुगुणे तोये कृता कीर्तिता ॥
पानीये घनसिक्थकाम्बुधिगुणे सिद्धा विलेपी भवेत्
मण्डः शक्रगुणे जले विरचितः सिक्थेन शून्यः स्मृतः ॥ २९ ॥
तृष्णाविड्ग्रहपाप्मरेकगुरुताहन्त्री यवागूर्मता
पेया दोषमलक्रमज्वरवपुस्तम्भातिसारे हिता ॥

आबाल्यग्रहणीज्वरव्रणतृगातङ्के विलेपी वरा ।
मण्डस्तृड्ज्वरेकवान्त्यरुचिहा स्याद्धातुसाम्यप्रदः ॥३०॥

अथाष्टगुणमण्डः—

तण्डुलैरर्धमुद्गांशैः किंचिद्भृष्टैः सुपाचितैः ।
हिङ्गुसिन्धूत्थधनिकातैलत्रिकटुसाधितः ॥ ३१ ॥
ज्ञेयः सोऽष्टगुणो मण्डो ज्वरदोषत्रयापहः ।
रक्तक्षुद्वर्धनः प्राणप्रदो वस्तिविशोधनः ॥ ३२ ॥

अथ यूपाः—

तत्र वैदलयूपः

यूपः कृतो वैदलानामष्टादशगुणेऽम्बुनि ।
यूपो बल्यो लघुः पाके रुच्यः कण्ठ्यः कफापहः ॥ ३३ ॥

तत्र मुद्गयूपः—

मुद्गानामुत्तमो यूपो दीपनः शीतलो लघुः ।
व्रणोर्ध्वजत्रुरुग्दाहकफपित्तज्वरास्रजित् ॥ ३४ ॥

इति शुद्धमुद्गयूपः ॥

अथ दाडिमामलकयूपः—

दाडिमामलकाभ्यां तु मुद्गयूपः सुसाधितः ।
पित्तवातहरः पथ्यो लघुरग्निप्रदः सरः ॥ ३५ ॥

इति दाडिमामलकयूपः ।

अथ मुद्गामलकयूपः

मुद्गामलकयूपस्तु भेदनः कफपित्तजित् ।
तृड्दाहशमनः शीतो मूर्छाभ्रमदापहः ॥ ३६ ॥

इति मुद्गामलकयूपः ।

अथ कुलित्थयूपः—

कुलित्थयूपो गुल्मार्शःकफवाताश्मशर्कराः ॥ ३७ ॥
तूणीप्रतूणीमेदांसि मेहं हन्त्यग्निकृत्सरः ॥

इति कुलित्थयूपः ।

---

१ ग. °वातत्र त्रि°।

अथ सूपमूलकयूषः—

सूपमूलकयोर्यूषो गलग्रहकफज्वरान् ।
हन्ति श्वासकफश्यायकासमेदोरुचिक्रिमीन् ॥ ३८ ॥

इति सूपमूलकयूषः ।

अथ चणकयूषः—

चणकैर्विदलैर्यूषोऽनुष्णस्तुवरको लघुः ।
रक्तपित्तप्रतिश्यायकासपित्तकफापहः ॥ ३९ ॥

इति चणकयूषः ।

अथ मकुष्ठयूषः—

मकुष्ठयूषः संग्राही पित्तश्लेष्मज्वरापहः ।
लघुः संतर्पणः पथ्यो हृद्यः पीनसकासजित् ॥ ४० ॥

इति मकुष्ठयूषः ।

अथ कृताकृतयूषौ—

यूषः कृताख्यो लवणस्नेहकट्वादिसाधितः ।
अकृतस्तैर्विना सिद्धः क्रमाद्गुरुलघू च तौ ॥ ४१ ॥

इति कृताकृतयूषौ ।

यूषा गोरसधान्याम्लपट्वम्लादिभिरान्विताः ।
यथोत्तरं गुरुतरा वातघ्ना रुचिकारिणः ॥ ४२ ॥
यैरन्नैरौषधैर्यैश्च कृता मण्डादयो बुधैः ।
विचार्य तद्गुणानेतांस्तद्गुणानेव निर्दिशेत् ॥ ४३ ॥

इति यूषाः ।

अथ सूपाः—

खण्डितैर्वैदलैः किंचिदाज्यपीताद्दधिप्लुतैः ।
सिद्धैश्चतुर्गुणे तोये यथोचितपटुश्रितैः ॥ ४४ ॥
नातिद्रवघनैराज्ये छकृते रामठान्वितैः ।
सूपः स्यात्साधनोऽन्नस्य रोचनः पाचनोऽग्निकृत् ॥ ४५ ॥
पथ्यः स्निग्धो बलकरो वातश्लेष्मगदे हितः ॥ ४६ ॥

इति सामान्यसूपरन्धनप्रकारगुणः ।

अथ कुल्माषः—

अर्धं विकसितं यावत्तावत्स्विन्नाः ससैन्धवाः ।
सरामठाः स्युः कुल्माषा मुद्गजा माषजा अपि ॥ ४७ ॥
मुद्गसूपो लघुर्ग्राही कफपित्तहरो हिमः ।
स्वादुर्नेत्र्योऽनिलहरः कुल्माषः शुक्रवर्धनः ॥ ४८ ॥

इति मुद्गसूपः ।

अथ माषसूपः—

माषसूपश्च कुल्माषः स्निग्धो वृष्योऽनिलापहः ।
उष्णः संतर्पणो बल्यः सुस्वादु रुचिकारकः ॥ ४९ ॥

अथाऽऽढकीसूपः—

आढकीसूप उद्दिष्टः श्लेष्मपित्तहरो हिमः ।
किंचित्कषायो रुचिकृत्साज्यो दोषत्रयप्रणुत् ॥ ५० ॥

अथ चाणकसूपः—

चाणकः सूप आख्यातो रोचनः पाचनः परः ।
बलासपित्तनुद्बल्यो रक्तजिन्नातिवातलः ॥ ५१ ॥

अथ कलायसूपः—

कलायसूपः सुस्वादुर्वातलो रक्तपित्तजित् ।
शूलाध्मानकरो मेध्यश्छर्द्यरोचकनाशनः ॥ ५२ ॥

अथ मकुष्ठसूपः—

मकुष्ठसूपोऽल्पबलः पाचनो दीपनो लघुः ।
चक्षुष्यो बृंहणो वृष्यः पित्तश्लेष्मास्ररोगनुत् ॥ ५३ ॥

अथ मसूरसूपः—

मसूरसूपः संग्राही शीतलो मधुरो लघुः ।
कफपित्तास्रजिद्वर्ण्यो विषमज्वरनाशनः ॥ ५४ ॥

इति मसूरसूपः ।

अथ राजमाषसूपः—

राजमाषभवः सूपः स्वादु रूक्षः कषायकः ।
ग्राही गुरुर्वातकरः स्तन्यकृद्रुचिकारकः ॥ ५५ ॥

इति राजमाषसूपः ॥

अथ निष्पावसूपः—

निष्पावसूपः पित्तास्रमूत्रस्तन्यानिलप्रदः ।
विदाह्युष्णो गुरुः शोफकफकृच्छुक्रलः सरः ॥ ५६ ॥
इति निष्पावसूपः ॥

[ *अथ वर्तुलसूपः—

सूपो वर्तुलजः शीतो ग्राही रूक्षो लघुः शुचिः ।
कफपित्तास्रजित्स्वादुविपाको रोचकापहः ॥ १ ॥ ]

अथ कुलित्थसूपः—

कुलित्थसूपो वातघ्नः कटुपाकः कषायकः ।
कफावरोधी पित्तास्रकरोऽश्मश्वासकासजित् ॥ ५७ ॥

अथ शिम्बीदलसूपगुणाः—

शिम्बीदलजः सूपो गुरुः कफबलप्रदः ।
वातहा मधुरः पाके शुक्रलो रोचकापहः ॥ ५८ ॥

अथ नानान्नसूपगुणाः—

अन्नस्य यस्य यः सूपस्तस्य तद्गुणमुद्दिशेत् ।

अथ सतुषवितुषसूपगुणागुणौ—

सतुषो गुरुराध्मानकरः सूप उदाहृतः ॥ ५९ ॥
वितुषस्तु लघुः पथ्यो ज्वरे कासे क्षयेऽरुचौ ।
इति सूपाः ॥

अथ पर्पटाः—

हिङ्गुजीरकमार्द्रीकसर्जिकामरिचान्विताः ॥ ६० ॥
अरोचकजिगीषूणां पर्पटाः पुरतो मताः ।
माषजाः पर्पटा बल्या रोचनाः पाचनाः सराः ।
गुरवो रक्तपित्ताग्निकफघ्ना बहुवर्चसः ।

* धनुःकोष्ठान्तर्गतो ग्रन्थो ख. पुस्तकस्थः ।

अथ मुद्गजाः—

मुद्गजाः पर्पटाः पथ्या ज्वराक्षिश्रवणामये ॥ ६२ ॥
अरोचकच्छिदः स्निग्धा लघवो दोषनाशनाः ।

अथ तण्डुलपर्पटाः—

ताण्डुलाः पर्पटा मिष्टा रसे पाकेऽपि कोमलाः ॥ ६३ ॥
बल्या वृष्या बृंहणाश्च रोचकाः पाचकाः सराः ।

अथ कृशरा—

तण्डुलैर्मौक्तिकाकारैः कण्डितैर्न च खण्डितैः ॥ ६४ ॥
चतुर्थभागैर्माषस्य वैदलैः परिमिश्रितैः ।
यथोचिताम्बुसंसिद्धैः सहिङ्गुलवणार्द्रकैः ॥ ६५ ॥
सस्नेहा कामिनी चेयं कृशरा शिशिरे हिता ।
कृशरा दुर्जरा बल्या गुर्वी वातविनाशिनी ॥ ६६ ॥
बलपुष्टिमलश्लेष्मपित्तरेतःप्रदा सरा ॥
इति माषतण्डुलकृशरा ॥

अथ मुद्गतण्डुलकृशरा—

मुद्गतण्डुलजा ज्ञेया कृशराऽल्पबला लघुः ॥ ६७ ॥
मुक्तो दुर्जरा बल्या पुष्टिकृत्तर्पणी हिमा ॥
इति मुद्गतण्डुलजा कृशरा ।

अथ पायसम्—

अर्धावशिष्टे क्वथनाद्दुग्धेऽष्टांशान्सुतण्डुलान् ॥ ६८ ॥
पचेन्नातिद्रवघनं परमान्नमिदं स्मृतम् ।
पायसं दुर्जरं बल्यं धातुपुष्टिप्रदं गुरु ॥ ६९ ॥
विष्टम्भि पित्तरक्ताग्निमारुतान्निर्हरेत्क्रमात् ।

अथ पोलिका—

गोधूमपोलिका बल्या कफला वाततुद्गुरुः ॥ ७० ॥
शुक्रला मधुरा पाके पित्तघ्नी बृंहणी सरा ।

अथाङ्गारकर्करी—

गोधूमचूर्णं यस्वेशचणकक्षोदमिश्रितम् ॥ ७१ ॥

---

१ क. 'तैः यथो' ।

यवानीहिङ्गुलवणैः किंचिदाज्यैश्च मोदितम् ।
संमर्द्य चक्रिकास्तस्य कार्या निम्नास्तु मध्यतः ॥ ७२ ॥
निर्धूमाङ्गारसंभृष्टा अदग्धास्ताम्ररोचिषः ।
अङ्गारकर्करी बल्या बृंहणी शुक्रला लघुः ॥ ७३ ॥
दीपनी कफहृद्रोगपीनसश्वासवातनुत् ।

अथ मण्डकाः—

कुकूलखर्परभ्राष्ट्रे खराङ्गारैर्विपाचितः ॥ ७४ ॥
मण्डको लघुरुष्णस्तु पथ्यो दोषत्रयापहः ।
रेतःपुष्टिप्रमाहृष्टिप्रदः स्निग्धश्च बृंहणः ॥ ७५ ॥
स शीतस्तु कफस्थौल्यबलशुक्रगुरुत्वकृत् ।
सदुग्धखण्डोऽतिगुरुर्वृष्यबृंहणतर्पणः ॥ ७६ ॥
मण्डकोऽङ्गारमृष्टस्तु लघुर्दोषत्रयापहः ।

॥ इति मण्डकाः ॥

अथ मण्डपूरिका—

श्वेतमण्डकमास्तीर्य सितामुपरि निक्षिपेत् ॥ ७७ ॥
चतुष्पत्रं तु तं कृत्वा बहिर्नैति यथा सिता ।
सूत्रेण बद्ध्वा प्रतलेद्यावत्कुरकुरायते ॥ ७८ ॥
घृते विसूत्रांस्तान्कृत्वा स्थापयेद्भाजने शुभे ।
खण्डमण्डो गुरुर्वृष्यो बृंहणो बलवर्णयोः ॥ ७९ ॥
कफशुक्राग्निमान्द्यानां जनकः पित्तवातनुत् ।
स्यात्खण्डपूरितो मण्डो मण्डपूरीति सा लघुः ॥ ८० ॥
रसे पाके च मधुरा बलौजोवर्णशुक्रकृत् ।

इति मण्डपूरिका ।

अथ यमला रोटिका—

यमला रोटिका गुर्वी मधुरा रसपाकयोः ॥ ८१ ॥
वातपित्तास्ररोगघ्नी सरा शुक्रबलप्रदा ।

इति यमला रोटिका ।

अथ पूरिका—

पैदलैश्चाणकैः स्विन्नैः सगुडैः सूक्ष्मपेषितैः ॥ ८२ ॥

किं वा सलवणाजाजीहिङ्गुभिः पूरणीकृतैः ।
एतैर्भृताश्च तलिता घृते गोधूमपूरिकाः ॥ ८३ ॥
पूरिका मधुरा बल्या श्रमवातामयापहा ।
शुक्रला बृंहणी श्वासपथ्या हृद्रोगनाशिनी ॥ ८४ ॥
इयं सलवणा लघ्वी श्लेष्मवातविनाशिनी ।

अथ वेष्टनी—

माषजां मुद्गजां वाऽपि पिष्टीमावेष्ट्य युक्तितः ॥ ८५ ॥
लवणार्द्रकहिङ्ग्वाढ्यां क्षोदैर्गोधूमजैरथ ।
तितऊपरि संसिद्धां वेष्टनीमिति तां जगुः ॥ ८६ ॥
वेष्टनी शुक्रला बल्या गुर्वी पित्तकफप्रदा ।
वातघ्नी मधुरा पाके हिता श्रमवतां सदा ॥ ८७ ॥

इति वेष्टनी ।

अथ कचवल्ली—

इयमाज्ये तु तलिता कचवल्लीति भण्यते ।
कचवल्ली सरा वृष्या बृंहणी तर्पणी गुरुः ॥
बलौजःपुष्टिकृद्वर्ण्या वातघ्नी कफपित्तला ॥ ८८ ॥

इति कचवल्ली ॥

अथ वटकः—

लवणमरिचहिङ्गुशृङ्गवेरैः समुपचितो वरमाषजः सुपक्वः ।
अतिसुरभिघृतेऽथ वा सुतैले विशति मुखे वटकः सुपुण्यभाजः॥८९॥
पवनारुचिदैन्यजये भटकः क्षपितार्दितकम्पमरुत्कटकः ।
रसनातलरङ्गधरो नटकः कफपित्तविकारकरो वटकः ॥ ९० ॥
(*दधितुल्यस्तु वटको बल्यो वृष्यश्च बृंहणः
रक्तपित्तकफातङ्ककर्ता हर्ता मरुद्रुजाम् ॥ ९१ ॥ )

इति वटकः ।

अथ काञ्जीकवटकः—

बाह्लीकधूपजुषि निर्मलवारिपूर्णे
कुण्डे यथोचितपटूत्तमराजिकाद्यैः ।

* धनुश्चिह्नान्तर्गतोऽयं श्लोकः क. पुस्तकस्थः ।

साधूपिताः कतिचिदेव दिनानि रुच्या
वाताघ्न काञ्जिकवटाः कफपित्तलाः स्युः ॥ ९२ ॥

इति काञ्जिकवटकः ।

अथ *घ्वांसीवटी—

माषस्य क्षालिता दाली शुष्कयन्त्रेण पेषिता ।
तस्याः स्थूला वटी तैले घृते वा पाचिता चिरम् ॥ ९३ ॥
हिङ्गुना धूपिते तक्रे नव्यपात्रे तु संस्थिता ।
तत्र ता वटिकाः क्षिप्ताः क्लिन्नास्तक्रं निपीय च ॥ ९४ ॥
नाम्ना घ्वांसीवटीति स्यात्केश्चित्पुष्पवटीरिता ॥ ९५ ॥
बाह्लीकार्द्रकजीरकोषणगणैः प्रत्येकशः संस्कृते-
र्गच्छन्ती शतपत्रपुष्पलघुतां घ्वांसीवटी पूरिता ।
तक्रे हिङ्गुकधूपधूमकलुषे सम्यक्प्लुता पाण्डुरा
मुक्तानामपि सौरभेण जनयेज्जिह्वालतालोलताम् ॥ ९६ ॥
रुच्या घ्वांसीवटी वृष्या सृष्टी शुक्रबलप्रदा ।
वातघ्नी पुष्टिदा लघ्वी कफपित्तास्रवाविनी ॥ ९७ ॥

इति पुष्पवटी ।

अथ मुद्गवटी—

घ्वांसीवटीवद्रचिता मुद्गैर्मुद्गवटी भवेत् ।
मुद्गवट्यो(टी) गुरू रुच्या वातपित्तास्रदा मता ॥ ९७ ॥
श्लेष्मला पुष्टिबलकृच्छुक्रला मृदुलाऽल्पतृट् ॥ ९८ ॥

अथ पक्ववट्यः—

तोयेन चणकचूर्णं सलवणहिङ्गु प्रनिर्मथ्य ।
स्नेहे तप्ते पक्वा अक्षमिताः पक्ववटिकाः स्युः ॥ ९९ ॥
सवेसवारलवणे क्षिप्तास्तक्रे सवेसने(?)
क्वथिताः कोमला वट्यः पक्ववट्यः प्रकीर्तिताः ।
पक्ववट्योऽतिरुचिरा वातपित्तकफापहाः ॥ १०० ॥

* ग. पुस्तके क्वचित्क्वचिद्ध्वाङ्क्षीत्यपि पाठो दृश्यते ।

१ क. °टीव द्रविता । २ ग. °ल्ला म° ।

बलशुक्ररुचिस्थौल्यकान्तिदा लघवः स्मृताः ।

इति पक्कवट्यः ।

## अथ खण्डिता—

चणकं चूर्णमालोड्य वारिणा क्राथयेन्मृदु ॥ १ ॥
सपद्येतद्घनं ज्ञात्वा तद्गुत्तार्य समं क्षिपेत् ।
पीठे हस्ततलाघातैः समीकृत्याथ शीतलम् ॥ २ ॥
छुरिकाग्रेण तत्खण्डान्युक्तितो रचयेद्बुधः ।
तप्तस्नेहे च तलितान्मरिचाम्लादिभिर्युतान् ॥ ३ ॥
यस्य तुष्टो जगन्नाथः सोऽश्नात्येतान्नरो भुवि ।
खण्डिता शुक्रला बल्या पित्तरक्तमरुत्प्रणुत् ॥ ४ ॥
श्लेष्मला रुचिकृत्कान्तिपुष्टिविड्बन्धदा गुरुः ।

इति खण्डिता ।

## अथ पत्रवट्यः—

नागवल्ल्यादिपत्राणि पिष्टैः सपटुहिङ्गुभिः ॥ ५ ॥
आप्लुत्याऽऽप्लुत्य संवेष्ट्य सुस्विन्नान्खण्डितान्पुनः ।
तप्ते स्नेहे च तलितान्मरिचाद्यैः प्रलेपितान् ॥ ६ ॥
सोऽश्नात्येतान्महेशोऽस्ति यस्य तुष्टो मनीषिणः ।
पत्रवट्योऽतिरुचिरा वातपित्तकफापहाः ॥ ७ ॥
बलशुक्ररुचिस्थौल्यवह्निकान्तिमतिप्रदाः ।

इति पत्रवट्यः ।

## अथ माषमुद्गजेण्डर्यौ—

माषपिष्टस्य या मुद्गपिष्टी सपटुरामठा ॥ ८ ॥
जीरकार्द्रकसंयुक्ता पिण्डिता मुष्टिमात्रदा ।
तृणाम्बुगर्भिते पात्रे सुस्विन्ना तलिता ततः ॥ ९ ॥
खाद्येयमुण्ड(मिण्ड)री शुष्का किंवाऽऽम्लाद्यैः प्रलेपिता ।
माषेण्डर्युदिता बल्या रोचिकाऽनिलजिद्गुरुः ॥ १० ॥
शुक्रला बृंहणी चाऽथ मुद्गजा माषजा लघुः ।

इति माषमुद्गजेण्डर्यौ ।

## अथ शुष्कवटी–

मापादिवटिकाः शुष्का रन्धिता लवणादिभिः ॥ ११ ॥
तत्तदन्नगुणा ज्ञेया विशेषाच्छुक्रपुष्टिदाः ।

इति शुष्कवटी ।

## अथ पानकम्–

द्राक्षाम्लिकापरूषादिजलं शर्करयाऽन्वितम् ॥ १२ ॥
मरिचार्द्रककर्पूरचातुर्जातादिसंस्कृतम् ।
पानकं द्विविधं तत्स्यादम्लानम्लविभेदतः ॥ १३ ॥
द्राक्षाखर्जूरकाश्मर्यैः समधूकपरूषकैः ।
पञ्चसाराभिधं पानं चन्द्रचूर्णावचूर्णितम् ॥ १४ ॥
द्राक्षादिपानकं हृद्यं मूत्रलं तृट्श्रमापहम् ।
पित्तवातक्लमच्छर्दिदाहमोहमदप्रणुत् ॥ १५ ॥
पञ्चसाराभिधं पित्ततृष्णादाहश्रमापहम् ।
माधवं श्रमदाहास्रतृष्णापित्तक्लमापहम् ॥ १६ ॥
परूषकाणां कोलानां हृद्यं विष्टम्भि पानकम् ।

पक्काम्लीकां सखण्डां पयसि समुचिते साधु निर्मथ्य पूतं
तत्तोयं पानकं स्यात्त्रुटिशशिमरिचैश्चूर्णितैः पूर्णगर्भम् ।
अम्लीकापानकं हन्त्यरुचिमदमरुत्पित्ततृट्छर्दिदाहं
भ्रान्तिं श्रान्तिं च वान्तिमचलमलमलं तालुकण्ठास्यशोषम् ॥१७॥

इति पानकम् ।

## अथ च्छिन्नपानकम्–

सितामतिसितां वारिण्यालोड्य च चतुर्गुणे ।
मृत्पात्रे स्थापयेत्तत्तु त्रुटीन्दूषणभूषितम् ॥ १८ ॥
मालतीपाटलापद्ममाल्याद्यामोदितं हिमम् ।
आमिक्षां तु चतुर्थांशां मृत्पात्रे निर्मलाम्बुना ॥ १९ ॥
छित्त्वा तण्डुलवत्तत्र निक्षिपेत्तद्दशांशतः ।
बद्ध्वाऽम्बरेण तद्वक्त्रं स्थापयेच्छीतले स्थले ॥ २१ ॥
जायते धरणीपालयोग्यं तच्छिन्नपानकम् ।
दाहमूर्छाभ्रमच्छर्दिश्रमतृट्क्लमजिल्लघु ॥ २० ॥
रक्तपित्तारुचिघ्नं च प्रीणनं छिन्नपानकम् ॥ २२ ॥

इति च्छिन्नपानकम् ।

### अथ रागखाडवः—

आममाम्रं त्वचा हीनं द्विस्त्रिर्वा खण्डितं ततः ।
मृद्भाज्ये मनागस्तं खण्डपाकेऽथ युक्तितः ॥ २३ ॥
सुपक्वं च समुत्तार्य मरिचैलेन्दुवासितम् ।
स्थापितं स्निग्धमृद्भाण्डे *रागखाडवसंज्ञितम् ॥ २४ ॥
पुष्टिदो बलदः पित्तवातास्रारुचिनाशनः ।
स्निग्धो गुरुस्तर्पणश्च सुस्वादू रागखाडवः ॥ २५ ॥

इति रागखाडवः ।

### अथ शिखरिणी—

खाडवा मधुराम्लादिरससंयोगसंभवाः ।
दीपना बृंहणा रुच्यास्तीक्ष्णा हृद्याः श्रमापहाः ॥ २६ ॥
दधि बल्यं तुल्यसितं त्वर्धपयोगालितं शनकैः ।
मरिचैलाशशिसहितं भवति रसालाभिधं लोके ॥ २७ ॥
रसाला शुक्रला बल्या रोचना वातपित्तजित् ।
स्निग्धा गुरुः प्रतिश्यायं विशेषेण विनाशयेत् ॥ २८ ॥

इति शिखरिणी ।

### अथ वासवती—

रसालैवातितप्ते च मृद्भाण्डे स्थापिताऽल्पके ।
अतिशीतस्थले यावच्छीतं तद्भाजनं भवेत् ॥ २९ ॥
एषा वासवती नाम्ना तद्गुणा जायते लघुः ।
वासवत्या कृता यस्मात्तस्माद्वासवती मता ॥ ३० ॥

इति वासवती ।

### अथ संधानम्—

राजिका जीरलवणानिशा द्वे कटुतैलके ।
फलं मूलं च पुष्पं च घर्मे स्थाप्यं दिनत्रयम् ॥ ३१ ॥
ततश्चाल्पतरं याति श्लथसंधानकं स्मृतम् ।

* ग. पुस्तके क्वचित्खाण्डव इत्यपि पाठो दृश्यते ।

१ क. 'रगहरा'

निम्बाम्रबिम्बीवार्ताकमार्द्रकं त्रपुसीफलम् ॥ ३२ ॥
कूष्माण्डशिम्बीमरिचपिप्पलीबिम्बटिण्डुकम् ।
सूरणः कदलीकन्दो मूलकं वैणवाङ्कुरः ॥ ३३ ॥
एतदन्यच्च संधेयमृतुदेशोद्भवं नृभिः ।
तेषु वार्ताकमुत्स्वेद्य संधेयं चान्यदामकम् ॥ ३४ ॥
एवं निम्बादिकं सर्वं कटुतैले विनिक्षिपेत् ।
स्थापयेद्वर्षमात्रं तु तत ऊर्ध्वं प्रयुज्यते ॥ ३५ ॥
संधानं पित्तकृत्सर्वं रुचि वह्निप्रदं सरम् ।
अत्र वस्तु विशेषत्वात्प्रविचार्यौ गुणागुणौ ॥ ३६ ॥

इति निम्बादिसंधानगुणाः ।

## अथ मांससंधानम्—

लावका अन्यखण्डा वा संस्वेद्या इक्षुजे रसे ।
ततः फाणितमध्यस्थाः किं वा सार्षपतैलगाः ॥ ३७ ॥
तिष्ठन्ति तादृशा एव न भजन्ते तु विक्रियाम् ।

## अथ तित्तिरिसंधानम्—

स्वेद्यं निर्गलिते दध्नि तैले पक्त्वा तु तित्तिरिम् ॥ ३८ ॥
तं पुनस्तैलसंयुक्तं निम्बुतोये विनिक्षिपेत् ।

इति तित्तिरिसंधानम् ।

## अथ वराहमांससंधानम्—

वराहाजिनमुद्धृत्य निशाराजी पटूत्तमैः ॥ ३९ ॥
संमर्द्य घर्मे संशोष्य क्षालितं हिङ्गुसंयुतम् ।
सनिम्बुकरसं शुष्कं क्षिपेत्तैले सहिङ्गुके ॥ ४० ॥

## अथ मत्स्यसंधानम्—

कटुतैले सुसंपक्वा मत्स्यखण्डाः ससैन्धवाः ।
स्थापिताः सार्षपे तैले सदा तिष्ठन्ति तादृशाः ॥ ४१ ॥
मांसमत्स्यकृसंधानं पित्तश्लेष्महरं सरम् ।
रुचिकृत्पाचनं हृद्यं लघुवातनिबर्हणम् ॥ ४२ ॥

## अथ फेणिकादिघृतपक्वमन्नम्—

घृतेन मोदयित्वा तु शमितां मर्दयेद्दृढम् ।

ततो दधि समादाय किंचित्संमर्दयेच्छनैः ।
किंचित्किंचिज्जले क्षिप्त्वा श्लथयेत्तां विधानवित् ॥४३ ॥
ततस्तल्लोम्बिकाः कुर्यान्नातिस्थूलकृशाः शनैः ।
स्थाप्यास्ता आर्द्रवस्त्रान्तर्गृहीत्वैकां ततो बुधः ॥ ४४ ॥
स्नेहदिग्धे दीर्घपट्टे वेलुयेद्वेलनेन ताम् ।
सतण्डुलरजःसर्पिःपङ्कलिप्तां तु वेष्टयेत् ॥ ४५ ॥
छित्त्वा छित्त्वा विरचयेल्लोम्बिकां वेल्लयेच्च ताम् ।
अच्छित्त्वा वा विधातव्या लोम्बिकैकैव वेलिता ॥ ४६ ॥
घृतमध्ये च तलिता फेनिका पुटिनी भवेत् ।
बहिः खण्डमलिप्ता वा न लिप्ता वाऽतिकोमला ॥ ४७ ॥
पूर्णिमाचन्द्रसदृशी मृदुला नवनीतवत् ।
वातपित्तहरा बल्या किंचित्कफकरी सरा ॥ ४८ ॥
सुस्निग्धा मधुरा शीता वृष्या गुर्वी च फेणिका ।
इति गोधूमफेणिका ।

अथ माषफेणिका—

माषशृङ्गाटशालूकक्षीररम्भासमुद्भवाम् ॥ ४९ ॥
फेणिकां रचयन्त्येके न तथैवोत्तमा मता ।

अथ नवनीतफेणिका—

दुग्धे स्वेद्यं धौतमुद्गद्विदलं समतण्डुलम् ॥ ५० ॥
नवनीतेन दध्ना वा पिष्टीकृत्य वटांश्चरेत् ।
घृते पचेद्बहिः खण्डचूर्णेनोद्धूलयेदिमान् ॥ ५१ ॥
फेणिका नवनीतस्य वातपित्तहरा सरा ।
गुर्वी वृष्या बृंहणी च सुस्निग्धा मधुरा हिमा ॥ ५२ ॥

अथ माषफेणी—

निस्तुषां माषडालीकां द्विस्त्रिः सूक्ष्मां तु पेषयेत् ।
शिलायां पिष्टिकामेतां नवनीतेन संयुताम् ॥ ५३ ॥
गाढवस्त्रमयः पोतश्छिद्रितः पूरितस्तथा ।
भ्रामयेच्च घृते तप्ते तं निष्पीड्य तु वर्तुलाम् ॥ ५४ ॥
सिद्धां निष्कास्य [illegible] ...सां तां मर्दयेत्करैः ।
अतिबल्या [illegible] स्निग्धाऽतिशुक्ला ॥ ५५ ॥

किंचिदुष्णाऽनिलहरा कफपित्तकरी सरा ।

## अथ लड्डुकाः—

अथ दधिलड्डुकः ।

पक्वदध्ना समं चूर्णं ताण्डुलं स्वल्पसैन्धवम् ॥ ५६ ॥
संमर्द्य गोलकीकृत्य घृते पक्त्वा शनैः शनैः ।
पाके सितायां आलिप्तो जायते दधिमोदकः ॥ ५७ ॥
बल्यो वातहरो हृद्यः पिपासादाहनाशनः ।
वृष्यश्च बृंहणो रुच्यः पित्तघ्नो दधिमोदकः ॥ ५८ ॥

### अथ शमितालड्डुकाः ।

शमितामष्टमांशेन सर्पिषा मोदितां पुनः ।
मर्दितामम्भसा पश्चाद्वर्तितां काष्ठपट्टके ॥ ५९ ॥
नातिस्थूलकृशान्सेवांस्तलितान्पाकितान्पुनः ।
खण्डपाकेन तान्पश्चाद्गर्भीयात्पिण्डवद्बुधः ॥ ६० ॥

### अथान्यप्रकारः—

घृतेन शमिता मिश्रा मर्दिता पाणिना मृदा ।
अम्बु दत्त्वा ततश्चक्रीं कृत्वा सर्पिषि पाचयेत् ॥ ६१ ॥
पक्वां निष्कास्य तां पिष्ट्वा सूक्ष्मं दत्त्वा घृतं पुनः ।
सितामेरण्डमरिचद्राक्षाखर्जूरखण्डकान् ॥ ६२ ॥
नारिकेलान्त्रखण्डांश्च गर्भीयात्तस्य मोदकान् ।
अन्येऽपि विविधाः ख्याता गोधूमस्य च लड्डुकाः॥ ६३ ॥
गोधूमलड्डुकाः स्निग्धा गुरवः शीतलाः सराः ।
वातपित्तहराः श्लेष्मशुक्रमन्दाग्निकारकाः ॥ ६४ ॥

### अथ माषमुद्गलड्डुकाः—

माषस्य पिष्टिका किंवा मुद्गस्य धवलद्युतिः ।
गलिता निर्गलच्छिद्रात्तलिता तप्तसर्पिषि ॥ ६५ ॥
पाकीकृता विबद्धा च मोदको जायते वरः ।
माषस्य तु गुरुः स्निग्धो मोदको वातनाशनः ॥ ६६ ॥
उष्णः संतर्पणो वृष्यो मुद्गजस्तु हिमो लघुः ।

### अथ मत्स्यलड्डुकाः—

गतत्वङ्मत्स्यखण्डानि तक्रेणोत्सादयेन्मनाक् ॥ ६८ ॥

१ मं. सितां पक्व° ।

ततो निष्कण्टकीकृत्य तक्रेणातिविमर्दयेत्।
अथ वस्त्रेण निर्गाल्य स्विन्नशालूकमिश्रितम्॥
तं कल्कं पेषयेत्पट्टे तत्पिण्डीं च समाचरेत्॥ ६९॥
तस्या निर्वर्तयेत्सेवान्घृते तते पचेद्भृशम्।
कर्पूरैलायुते पाके पाके खण्डस्य पाचयेत्॥ ७०
मत्स्यजा लड्डुका बल्या गुरवः कफकारकाः।
वृष्यानिलहराः प्रोक्ताः किंचित्पित्तप्रकोपिनः॥ ७१॥

अथ मांसलड्डुकाः—

एवमेव विधातव्याः स्विन्नमांसस्य लड्डुकाः।
गुणा मांसानुसारेण ज्ञातव्या लड्डुकेष्वपि॥ ७२॥

अथ शालूकलड्डुकाः—

शालूक वितुषं स्विन्नं श्लक्ष्णपिष्टीकृतं पुनः।
सेवान्निर्वर्त्य विपचेद्घृते खण्डेन पाचयेत्॥ ७३॥
शालूकलड्डुको रूक्षो दुर्जरः कफपित्तहृः।
किंचित्कषायो विष्टम्भी शूलाध्मानकरो हिमः॥ ७४॥
एवं सूरणशृङ्गाटकसेरुकमलाक्षजाः।
कूष्माण्डार्द्रकरम्भादिलड्डुका अपि तद्गुणाः॥ ७५॥

इति सूरणादिमोदकाः।

अथ बिन्दुमोदकाः—

चाणकं चूर्णमालोड्य वारिणा तत्र योजिते।
किंचिच्च तण्डुलं चूर्णं नातिसान्द्रद्रवं तु तत्॥ ७६॥
पाचयेन्निर्गलच्छिद्रसमूहात्तप्तसर्पिषि।
यावनालनिभांस्तांस्तु बिन्दूनादाय शार्करैः॥ ७७॥
पक्वैरालिप्य बध्नीयान्मोदकान्बिल्वमानतः।
कर्पूरैलासुरभितानथ वा मण्डकीकृतान्॥ ॥ ७८॥
चतुरस्रीकृतान्वाऽथ किं वा मुक्तान्समाचरेत्।
लघुर्वृष्यो बृंहणश्च पित्तश्लेष्मानिलापहः॥ ७९॥
तर्पणः शीतलो रूक्षो मधुरो बिन्दुमोदकः।

अथ कूष्माण्डादिबीजमोदकाः—

सर्पिषीषद्विमृष्टानां बीजानां गतचर्मणाम्॥ ८०॥

---

— [1]निष्कां षट्टीं कृत्वा सं०।

खण्डेन पाकितानां च मोदकाः स्युर्मनोरमाः ।
गुरुर्वृष्यो बलस्थौल्यवर्णशुक्रकफप्रदः ॥ ८१ ॥
पित्तानिलास्रजिच्छीतो मधुरो बीजमोदकः ।

अथ दुग्धप्रकाराः—

दुग्धं विनष्टं निस्तोयं शनैर्भृष्टं तु खर्परे ॥ ८२ ॥
ससितं गालितं वस्त्रे निःस्नेहो दधिसक्तुकः ।

अथ स्नेहदुग्धसक्तुकः—

पाकपिण्डीकृतं दुग्धं नवमृन्मयभाजने ॥ ८३ ॥
मर्दितं गालितं वस्त्रे जायते दुग्धसक्तुकः ।

अथ क्षीरवटी—

गर्भिता मरिचैर्नष्टक्षीरजा वटका वटी ॥ ८४ ॥
पक्त्वा घृते क्षिपेत्क्षीरे खण्डपाकेऽथवा वरे ।

अथ क्षीरमोदकः—

नष्टं दुग्धं शिलापिष्टं माषतण्डुलपिष्टयुक् ॥ ८५ ॥
घृते पक्त्वाऽथ संचूर्ण्य खण्डपाकविमिश्रितम् ।
मोदकादिप्रकाराणां हेतुतामुपगच्छति ॥ ८६ ॥

अथ स्वादुलड्डुकाः—

घनीभूतं शृतं दुग्धं शमितशाविमिश्रितम् ।
निर्गलच्छिद्रया तप्तसर्पिषि प्रपचेद्द्रुतम् ॥ ८७ ॥
पाकितं खण्डपाकेन सदेलोपणचूर्णिना ।
जायते राजयोग्योऽयं सुस्वादुर्दुग्धमोदकः ॥ ८८ ॥

अथ दुग्धमण्डकाः—

कार्पासास्थ्यम्बुसंपूर्णा विस्तीर्णा स्याच्च हण्डिका ।
चुल्ल्यां स्थाप्य ततस्तस्या अधो ज्वाल्यो हुताशनः ॥ ८९ ॥
रीतिस्थालकमेकं तु तन्मुखेऽधोमुखं न्यसेत् ।
तप्तं घनदुग्धाक्तपोतेन शनकैर्दिहेत् (?)॥ ९० ॥
मुहुर्मुहुर्भवेद्यावत्स्थूलं मण्डकमात्रया ।
ततो युक्त्या विनिष्कास्य मण्डकं छुरिकादिभिः ॥ ९१ ॥
मीनाण्डकैलाकर्पूरैश्चूर्णितैरवधूलयेत् ।

## अथ दुग्धकरञ्जिका—

पूर्ववल्लोम्बिकां कृत्वा स्थालके तां प्रपूरयेत् ॥ ९२ ॥
शर्करामरिचैलाभिः सेन्दुभिश्चन्द्रखण्डवत् ।
कृत्वा स्थाप्या शुभे पात्रे पयःसंस्था करञ्जिका ॥ ९३ ॥
एवं पयःशृङ्गाटका अपि ।

## अथ क्षीरशाकम्—

विनष्टदुग्धं खण्डं च तलयेत्तप्तसर्पिषि ।
तन्निर्द्रवं खण्डसमं क्षीरशाकमुदीर्यते ॥ ९४ ॥
सर्वं क्षीरभवं भक्ष्यं तृप्तिशुक्रप्रदं हिमम् ।
गुरु श्लेष्मकरं स्निग्धं बृंहणं वातपित्तजित् ॥ ९५ ॥

## अथ लपसी—

घृते तप्ते विनिक्षिप्य शमितां भर्जयेच्छनैः ।
ततोऽल्पमल्पं निक्षिप्य क्षीरं सर्वसमं पचेत् ॥ ९६ ॥
ततः खण्डांशकं दत्त्वा पचेद्वा घृतदर्शनम् ।
लवङ्गैलोपणवती लपसीका प्रजायते ॥ ९७ ॥
लपसीका गुरुस्निग्धा वृष्या बल्याऽतिबृंहणी ।
श्लेष्मला वातपित्तघ्नी मधुरा रसपाकयोः ॥ ९८ ॥

## अथ भैमी—

श्रेष्ठं गोधूमचूर्णं प्रचुरघृतयुतं सत्रिनेत्रत्वगेला-
द्राक्षाखर्जूरशुण्ठीमरिचशशिसितापूर्णगर्भं पचेत्तत् ।
मन्दं मन्दं कटाहे पटु पटुनि घृते ताम्रवर्णा च भैमी
स्यादेषा शीतकाले स्वजनपरिवृतैर्भुज्यते भाग्यभाग्भिः ॥९९॥

## अथ चन्द्रहासा—

स्थूलं गोधूमचूर्णं हिमकरकिरणप्रोज्ज्वलं भृष्टमाज्ये
क्षिप्तं दुग्धे सखण्डे मृदुपटगलिते पाचितं मन्दमन्दम् ।
कर्पूरैलोपणाढ्यं भवति लपसिका चन्द्रहासाभिधाना
वृष्या पित्तानिलघ्नी गुरुरपि कफला बृंहणी चातिबल्या ॥ १०० ॥

---

१ क. भोज्यभा° ।

अथ शुद्धघेवरः—

क्षीरेण मर्दितं चूर्णं गोधूमानां हि गालितम् ।
विस्तार्य सर्पिषा पाच्यं कटाहेऽथ सितान्वितम् ॥ १ ॥
घृतपूरोऽयमुद्दिष्टः कर्पूरमरिचान्वितः ।

अथ नारिकेरजो घृतपूरः—

शमितां मर्दितां क्षीरैः सितात्रिनयनान्विताम् ॥ २ ॥
आज्ये पचेन्मन्दमन्दं घृतपूरोऽपरो मतः ।

अथ दुग्धघेवरः—

पाकपिण्डीकृतं क्षीरं शर्कराचूर्णमिश्रितम् ॥ ३ ॥
घृतपूरविनिर्माणं खादेत्स्वल्पसुसर्पिषि ।

अथ शालिपिष्टजो घेवरः—

सुशालिपिष्टं घनदुग्धमिश्रं सशर्करं वस्त्रपुनीतमेतत् ॥ ४ ॥
घृते सुपक्वं पृथुलीकृतं बुधैर्निगद्यते शालिजघेवरोऽयम् ।

अथ कसेरुघेवरः—

कसेरुचूर्णं निक्षिप्य पाकपिण्डीकृतं पयः ॥ ५ ॥
कसेरुघेवरं कुर्यात्पूर्ववत्खण्डमण्डितम् ।

अथाऽऽम्ररसघेवरः—

पक्वाम्रस्य घृते तप्ते रसस्तलनपिण्डितः ॥ ६ ॥
शुद्धशर्करया युक्तो घृतपूरोऽतिसुन्दरः ।
एवं शृङ्गाटकादीनां घृतपूरो भवेदपि ॥ ७ ॥
घृतपूरो गुरुर्वृष्यो हृद्यः पित्तानिलापहः ।
सद्यः प्राणप्रदो बल्यः सुरुच्योऽग्निप्रदीपनः ॥ ८ ॥
विचार्य वस्तुसंयोगं घृतपूरस्य बुद्धिमान् ।
गुणांस्तथा वदेद्वैद्यः प्रधानं तु गुणे स्मृतम् ॥ ९ ॥

अथ गोरसपावक इति केचिद्गुह्यक इति संस्कृते—

शमितां सर्पिषा भृष्टां सितैलादिसमन्विताम् ।
क्षिप्त्वाऽन्यशमिता(तां) लम्बपुटे संग्रथितानने ॥ २१० ॥

---

१ ग. गोझा संपारेति ।

घृते पचेत्ततः खण्डे रसीभूते तु पाकयेत् ॥
गुह्यको बृंहणो वृष्यो हृद्यः पित्तानिलापहः ॥ ११ ॥
मधुरोऽतिगुरुः पाके किंचित्संधानकृत्सरः ॥

## अथापूपकम्

शमितां गुडतोयेन समेन परिमर्दिताम् ॥ १२ ॥
घृते विस्तार्य विपचेत्सुवृत्तः स्यादपूपकः ॥
अपूपः पुष्टिदो बल्यो हृद्यो गुरुतरः स्मृतः ॥ १३ ॥
पित्तानिलहरो वृष्यः सुपक्वो रुचिकारकः ।

## अथ दधिवटिका

शालिपिष्टं युतं दध्ना मर्दयित्वा घृते पचेत् ॥ १४ ॥
वटिकावद्विधायैतत्खण्डपाके विपाचयेत् ।
पित्तानिलहरी वृष्या दधिवटयमृतोपमा ॥ १५ ॥
बृंहणी रुचिकृद्वह्निमान्द्यश्लेष्मबलप्रदा ।

## अथ जिलेबी कुण्डलीति संस्कृते—

द्विप्रस्था शुद्धशमिता चतुर्गोधूमगालिता ॥ १६ ॥
विमर्द्य पयसा स्थाप्यं यावदम्लत्वमाप्नुयात् ।
सच्छिद्रे नारिकेलस्य पात्रे तत्पङ्कमाहरेत् ॥ १७ ॥
परिभ्राम्य घृते तप्ते पचेत्तन्मन्दवह्निना ।
सुपक्वां कङ्कणाकारां सितालेहे विनिक्षिपेत् ॥ १८ ॥
सा तु कुण्डलिका नाम्ना क्वचिच्च जलवल्लिका ।
जलवल्ली सरा वृष्या बृंहणी तुष्टिपुष्टिदा ॥ १९ ॥
धातुस्तम्भकरी हृद्या विशेषाद्बलतुष्टिदा ।

## अथ मण्ठः—

शमितां तुर्यसर्पिष्कां गाढं संमर्द्य वारिणा ॥ २० ॥
चक्राकारां तु तां कृत्वाऽनेकच्छिद्रपरम्पराम् ।
तलयेत्सर्पिषि प्राज्ये यावद्व्रजति शोणताम् ॥ २१ ॥
खण्डपाकेन संपाक्य स्थापयेन्मण्ठमुत्तमम् ।
मण्ठो गुरुर्वातपित्तक्षेण्यारुचिहरः परः ॥ २२ ॥

श्लेष्मलस्तर्पणो वृष्यो बृंहणो बलकारकः ।

अथेन्दुरसा—

तृतीयभागखण्डेन मिश्रितं पष्टिपिष्टकम् ॥ २३ ॥
शुभमीषद्दधियुतं मर्दयेद्दृढपाणिना ।
एवं सुमर्दितं कृत्वा स्थापयेत्सकलां निशाम् ॥ २४ ॥
ततोऽन्यस्मिन्दिने तत्तु चित्रितं निस्तुषैस्तिलैः ।
विधायापूपकं तस्य तापिकायां घृते पचेत् ॥ २५ ॥
ततोऽमृतरसप्रख्या वातघ्ना बलवर्धना ।
अरोचकहरा हृद्या सुशीता कफहारिणी ॥ २६ ॥

अथ कंसारः—

घृते तप्ते विनिक्षिप्य शमितां भर्जयेच्छनैः ।
समं खण्डं तत्र दद्यादेलयोपस्करान्वितम् ॥ २७ ॥
स्निग्धे पात्रे विनिक्षिप्य चतुरस्रीकृतं तु तत् ।
कंसारः स्यान्नातिपित्तश्लेष्मलः पवनापहः ॥ २८ ॥
विष्टम्भारोचकहरो नातिस्निग्धो गुरुस्त्वयम् ।

अथ सक्तुः—

सक्तवः शीतला रूक्षाः सराः पित्तकफच्छिदः ॥ २९ ॥
[1]श्रमक्लमभ्रमान्दाहं निघ्नन्ति बलशुक्रदाः ।

अथ यवसक्तुः—

सक्तवो यवजाः शीता दीपना लघवः सराः ॥ ३० ॥
कफपित्तहरा रूक्षा लेहनाः पानतस्तु ते ।
सद्यो बलप्रदाः पथ्या घर्मादिक्रान्तदेहिनाम् ॥ ३१ ॥
इति केवलयवसक्तुः ।

अथ यवचणकसक्तवः—

निस्तुषैर्भर्जितैः पिष्टैः सयवैश्चणकैः कृताः ।
सक्तवः शर्करासर्पिर्युक्ता ग्रीष्मेऽतिपूजिताः ॥ ३२ ॥
पीताः शुक्रबलस्थैर्यशैत्यतृप्तिरुचिप्रदाः ।
पिण्डी प्रोक्ता गुरुस्तेषां द्रवत्वाल्लेहिका लघुः ॥ ३३ ॥

---

१ क. °च्या घर्मो° ।

इति यवचणकसक्तवः ।

अथ चणकसक्तवः—

शीताः संग्राहिणो रूक्षास्तर्पणा वातकारकाः ।
पित्तश्लेष्मच्छिदोऽसृग्दाः सक्तवो हरिमन्थजाः ॥ ३४ ॥

इति चणकसक्तवः ।

अथ लाजसक्तुः—

लाजसक्तुर्लघुर्ग्राही रक्तपित्तवमिप्रणुत् ।
वातश्लेष्मगदे पथ्यस्तर्पणः प्राणवर्धनः ॥ ३५ ॥

अथ सक्तुनिषेधः—

न भुक्त्वा न रदैश्छित्त्वा न निशायां न वा बहून् ।
न जलान्तरितान्नद्भिः सक्तूनद्यान्न केवलान् ॥ ३६ ॥

अथ कुल्माषाः—

कुल्माषा गुरवो रूक्षा वातला भिन्नवर्चसः ।
कफमेदःशुक्रपुष्टिबलमन्दानलस्त्रवाः ॥ ३७ ॥

अथ लाजाः—

लाजा लघुतराः शीता बल्याः पित्तकफच्छिदः ।
वम्यतीसारदाहास्रमेहमेदस्तृषापहाः ॥ ३८ ॥

अथ धानागुणाः—

भृष्टा यवादिजा धाना कण्डितापि च निस्तुषा ।
धाना विष्टम्भिनी रूक्षा कफमेदोहरा गुरुः ॥ ३९ ॥
ईषद्वातकरी पित्ता बलघ्नी दुर्जरा अपि ।

अथ पृथुकगुणाः—

पृथुका गुरवो बल्याः श्लेष्मला वातनाशनाः ॥ ४० ॥
दुर्जराः शुक्ररुचिदा आमविष्टम्भकारिणः ।

अथ होलकः—

शिम्बीधान्यैरर्धपक्वैः सुभृष्टैर्होलको मतः ॥ ४१ ॥
होलकोऽल्पानिलो मेदःकफदः स्वस्वभावतः ।

---

१ ग. °च्छिदस्तद्वदः ।

[*अथ चंचिका (रुचिका)–

अपक्वमृष्टगोधूमे रुचिका वातपित्तहा ॥ ४२ ॥
कफमेदोबलस्थैर्यधातुपुष्टिप्रदा लघुः । ]

अथ पुष्करम्–

यावनालोऽर्धपक्वस्तु मृष्टोऽग्नौ पुष्कराभिधः ॥ ४३ ॥
+पुष्करं मधुरं रुच्यं बलकृल्लघु शीतलम् ।
त्रिदोषशमनं क्षीणहितं शुक्रकरं परम् ॥
तल्लाजा लघवो रूक्षास्ततो न्यूनगुणा मताः ॥ ४४ ॥

अथ चणकहोलकः–

लघुः क्षतजपित्तनुत्कफहरो महाकोपनो
हिमो रुचिविवर्धनस्तुवरकश्च रूक्षस्तथा ।
विबन्धकृदपि श्रमाबलकरोऽल्पपुंस्त्वः स्मृतो
नृणां चणकहोलकः सपदि तुष्टिपुष्टिप्रदः× ॥ ४५ ॥

अथ मांसरन्धनप्रकारगुणागुणाः–

भूचरखेचरजलचरजन्तुपलं द्विकपलं यदिह ।
भवति तथा स्नेहपलं देयं लवणार्धपलमच्छम् ॥ ४६ ॥
शाणं शुद्धधूलनकं मरिचाद्यं शाणयुगलं स्यात् ।
मत्स्यपलेषु सपादं द्रव्यं देयं तु मांसस्य ॥ ४७ ॥
तत्सुक्ष्मांसपदे(?)शलकेष्वल्पं ततः किंचित् ।
न्यूनाधिकं च देयं लोको यस्माच्च भिन्नरुचिः ॥ ४८ ॥
हिङ्गु स्नेहं च लवणं पानीयं व्यञ्जनेऽखिले ।
अनुक्तमपि दातव्यं पारम्पर्याच्च योगतः ॥ ४९ ॥
भृष्टं स्विन्नं च तलितं शुष्कं चापि प्रलेहितम् ।
भरितं वाऽपि शूल्यं च तान्दूरं वटकीकृतम् ।
इत्यादिर्बहुधा पाको मांसस्य मुनिभिः स्मृतः ॥ २५० ॥

* धनुश्चिह्नान्तर्गतो ग्रन्थो ग. पुस्तकस्थः । + क. त्रिभ्रमनं तु पुष्करम् । × पुष्टिप्रद इत्यस्याग्रे वक्ष्यमाणो ग्रन्थो ग. पुस्तके—अथ द्रा( धा ) रितचरादिमद्रव्यो( र्यं ) यारि मद्यस्य जीरकट्टगटुलवणक्षौद्रादिहिङ्गुप्रमोदि ! प्रविवति मुहुरन्ते भोजनस्य प्रकामे स तु पुनरपि भोक्तुं कान्तते यावदेव ॥ १ ॥

अथ भृष्टादिलक्षणम्—

सुस्विन्नं पललं सम्यग्लवणादियुतं पुनः ।
कटाहे सघृते भृष्टं तद्भृष्टं समुदीर्यते ॥ ५१ ॥
स्विन्नं सोपस्करं चैतत्स्विन्नमित्यभिधीयते ।
संस्वेद्य तलितं स्नेहे प्राज्ये तत्तलितं पलम् ॥ ५२ ॥
सोपस्करं तु यन्मांसं सिद्धं शोषितमायसे ।
पात्रे तु शुष्कतां यातं तच्छुष्कं पललं स्मृतम् ॥ ५३ ॥
विधिवत्पाचितं पश्चात्स्नेहाम्लेन परिप्लुतम् ।
मरिचाढ्येन तन्मांसं प्रलेहितमिति स्मृतम् ॥ ५४ ॥
अग्निभृष्टं मरीतं स्याल्लवणाद्येन संयुतम् ।
अङ्गारपूर्णगर्तस्य मलसं पार्श्वतः क्वचित् ॥ ५५ ॥
विलम्बिपक्कं विधिवत्तान्दूरपललं स्मृतम् ।

अथ वा—

कोष्टिकोयां वियत्येव बहिर्वह्नौ पलं पचेत् ॥ ५६ ॥
तत्तान्दूरं विपक्कं स्यात्पलस्नेहादिसंस्कृतम् ।
संविध्य पलखण्डानि शूलेनाऽऽयसजेन हि ॥ ५७ ॥
निर्धूमाग्नौ सलवणाज्यानि तानि शनैः पचेत् ।
शूलपक्कमिदं मांसं नवनीतोपमं मृदु ॥ ५८ ॥
संस्वेद्य पिष्टं च पुनर्वटकीकृतमल्पशः ।
सोपस्करं पलं ज्ञेयं वटकीकृतमुत्तमम् ॥ ५९ ॥

अथ सर्वमांसप्रक्षालनप्रकारः—

धौतं केवलतोयेन हिङ्गुतक्राम्बुना ततः ।
खण्डीकृतं पलं धौतं निजगन्धं जहाति हि ॥ २६० ॥

अथ मांसरन्धनवेसवारः—

हरिद्राव्योपसिन्धूत्थहिङ्गुधान्याकदाडिमैः ।
साजाजिभिर्वेसवारः सो(स)रसोऽयमुदाहृतः ॥ २६१ ॥

इति वेसवारः ।

इति श्रीयोगतरङ्गिण्यां सिद्धान्नादिपाकगुणकथनं नाम षोडशस्तरङ्गः ॥ १६ ॥

१ क. °कार्येवि° । २ क. °हिर्वह्नुपलं । ३ क. तन्नादूरं । ४ क. °पलं स्वेदादि° । ५ ग. °रः सौरणीयमु° ।

अथ शारदातत्रः ।

---

## अथ दिनचर्या—

प्रातःकाले समुत्तिष्ठेत्स्वस्थो रक्षार्थमायुषः ।
दध्यादर्शकसिद्धार्थबिल्वगोरोचनस्रजाम् ॥ १ ॥
वाजिवारणगोविप्रहरिद्राशतपर्वणाम् ।
दर्शनं स्पर्शनं कार्यं प्रयुक्तेन शुभावहम् ॥ २ ॥
प्रतिबिम्बं घृते पश्येत् चिरंजीवितकाङ्क्षया ।
वैद्यः पुरोहितो मन्त्री दैवज्ञश्च तुरीयकः ॥ ३ ॥
द्रष्टव्याः प्रातरेवैते नित्यं श्रेयोभिवृद्धये ।
द्विपुरीषं चतुर्मूत्रं विधिवद्द्विश्च भोजनम् ॥ ४ ॥
दिवा जागरणं कुर्याद्रात्रौ निद्रां च मैथुनम् ।
आयुषे भोजने जीर्णे वेगानामविधारणम् ॥ ५ ॥
ब्रह्मचर्यमहिंसा च साहसानां च वर्जनम् ।
न वेगितोऽन्यकार्यं स्यान्न वेगानीरयेद्बलात् ॥ ६ ॥
लोभशोकभयक्रोधान्मनोवेगान्विधारयेत् ।
वातविण्मूत्रजृम्भाश्रुक्षवोद्गारवमीन्द्रियैः ॥ ७ ॥
क्षुत्तृष्णोच्छ्वासनिन्द्राणां धृत्योदावर्तसंभवः ।
गुदादिमलमार्गाणां शौचं कान्तिबलप्रदम् ॥ ८ ॥
मेध्यं पवित्रं चाऽऽयुष्यं पापालक्ष्मीविनाशनम् ।
पादप्रक्षालनं पादमूलरोगश्रमापहम् ॥ ९ ॥
दृष्टिप्रसाधनं वृष्यं रक्षोघ्नं प्रीतिवर्धनम् ।
भक्षयेद्दन्तपवनं दन्तमांसान्यबाधयन् ॥ १० ॥
जिह्वानिर्लेखनेनापि जिह्वानिर्लेखनं चरेत् ।
मुखं प्रक्षालयेद्धीमान्पश्चाद्गण्डूषकं चरेत् ॥ ११ ॥
वैगन्ध्यारुचिदन्तास्यजिह्वारोगमलाकृताः ।
दन्तधावनतो न स्युः स्युः प्रमार्धीविशुद्धताः ॥ १२ ॥
अर्के वीर्यं वटे दीप्तिः करञ्जे विजयो भवेत् ।
प्लक्षे चैवार्थसंपत्तिर्बदर्यां मधुरो ध्वनिः ॥ १३ ॥

---

१ ग. °न्यधावन° । २ क. °लीढ्या॥

खदिरे मुखसौगन्ध्यं बिल्वे तु बहुलं धनम् ।
उदुम्बरे वयोवृद्धिराम्रे त्वारोग्यमेव च ॥ १४ ॥
कदम्बे तु धृतिर्मेधा जाम्बवे तु दृढा श्रुतिः ।
शिरीषे कीर्तिसौभाग्ये आयुरारोग्यमेव च ॥ १५ ॥
अपामार्गे धृतिर्मेधा [3]प्रज्ञाशक्तिस्तथा ध्वनिः ।
दाडिम्यां सुन्दराकारः ककुभे कुटजे तथा ॥ १६ ॥
जातीतगरमन्दारैर्दुःस्वप्नं च विनश्यति ।
न खादेन्मुखशोषार्तिकासहिक्कावमीषु च ॥ १७ ॥
दुर्बलो जीर्णयुक्तश्च मूर्छार्तो मदपीडितः ।
शिरोरुजार्तस्तृषितः श्रान्तः पानक्लमान्वितः ॥ १८ ॥
अर्दिती कर्णशूली च दन्तरोगी नवज्वरी ।
ओष्ठरोगी तथा तालुजिह्वारोगसमन्वितः ॥ १९ ॥
जिह्वानिर्लेखनं रौप्यं सौवर्णं ताम्रजं तथा ।
तन्मलापहरं शस्तं मृदु श्लक्ष्णं दशाङ्गुलम् ॥ २० ॥
मुखवैरस्यदौर्गन्ध्यशोषजाड्यहरं सुखम् ।
असंचार्यो मुखे पूर्णो गण्डूषः कवलोऽन्यथा ॥ २१ ॥
खदिरक्षीरवृक्षादिभेदाम्लकवलग्रहः ।
अरोचकास्यवैरस्यमलपूतिप्रसेकजित् ॥ २२ ॥
गण्डूषमथ कुर्वीत शीतेन पयसा मुहुः ।
कफकण्डूमलहरं मुखान्तःशुद्धिकारकम् ॥ २३ ॥
सुखोष्णोदकगण्डूषः कफारुचिमलापहः ।
दन्तजाड्यहरश्चापि मुखलाघवकारकः ॥ २४ ॥

## निषेधः—

विषमूर्छामदार्तानां शोषिणां रक्तपित्तिनाम् ।
कुपिताक्षिमलक्षीणरूक्षाणां स न शस्यते ॥ २५ ॥
मुखप्रक्षालनं शीतपयसा रक्तपित्तजित् ।
मुखस्य पिण्डिकाशोषनीलिकाव्यङ्गनाशनम् ॥ २६ ॥
कुर्याद्वाऽपि कदुष्णेन पयसाऽपि विशोधनम् ।
कफवातहरं स्निग्धं मुखदोषविनाशनम् ॥ २७ ॥

---

१ ग. घ । अपामार्गे धृ° । २ ग. च कदम्बे तु धृ° । ३ ग. प्रज्ञा धृ° ।

अथ नस्यम्-

कटुतैलादि नस्यार्थं नित्याभ्यासेन योजयेत् ।
प्रातः श्लेष्मणि मध्याह्ने पित्ते सायं समीरणे ॥ २८ ॥
सुगन्धिवदनाः स्निग्धनिःस्वना विमलेन्द्रियाः ।
निर्वलीपलितव्यङ्गा भवेयुर्नस्यशीलिनः ॥ २९ ॥

अथाञ्जनम्-

सौवीरमञ्जनं नित्यं हितमक्ष्णोः प्रकीर्तितम् ।
लोचने भवतस्तेन मनोज्ञे सूक्ष्मदर्शने ॥ ३० ॥

अथाञ्जने निषेधः-

रात्रौ जागरितः श्रान्तश्छर्दितो भुक्तवांस्तथा ।
ज्वरातुरः शिरःस्नातो नाक्ष्णोरञ्जनमाचरेत् ॥ ३१ ॥
पञ्चरात्रान्नखश्मश्रुकेशलोमानि कृन्तयेत् ।
केशश्मश्रुनखादीनां कर्तनं संप्रसाधनम् ॥ ३२ ॥
पौष्टिकं धन्यमायुष्यं शौचं कान्तिकरं परम् ।
उत्पाटयेत्तु लोमानि नासाया न कदाचन ॥ ३३ ॥
तदुत्पाटनतो दृष्टेर्दौर्बल्यं त्वरया भवेत् ।

अथ केशप्रसाधनकरणम्-

केशपाशस्य कुर्वीत प्रसाधन्या प्रसाधनम् ॥ ३४ ॥
केशप्रसाधनं केश्यं रजोजन्तुमलापहम् ।

अथाऽऽदर्शगुणाः-

आदर्शालोकनं प्रोक्तं मङ्गल्यं कान्तिकारकम् ॥ ३५ ॥
पुष्टिदं बल्यमायुष्यं पापालक्ष्मीविनाशनम् ।

व्यायामगुणाः-

लाघवं कर्मसामर्थ्यं दीप्तोऽग्निर्मेदसः क्षयः ॥ ३६ ॥
विभक्तघनगात्रत्वं व्यायामादुपजायते ।
व्यायामदृढगात्रस्य व्याधिर्नैवोपजायते ॥ ३७ ॥
विरुद्धं वा विदग्धं वा भुक्तं शीघ्रं विपच्यते ।
शीघ्रं भवन्ति नैतस्य वलीशिथिलतादयः ॥ ३८ ॥

---

१ क. °म् । अलदीदर्शने ।

न चैनं सहसाऽऽक्रम्य जरा समधिरोहति ।
सामान्यो न जनः कश्चिदेनमाक्रष्टुमीहते ॥ ३९ ॥
शङ्कन्तेऽस्माच्च बलिनः पराभवमरातयः ।
स सदा गुणमाधत्ते बलिनां स्निग्धभोजिनाम् ॥ ४० ॥
वसन्ते शीतसमये सुतरां स हितो मतः ।
अन्यदाऽपि च कर्तव्यो बलार्धेन यथाबलम् ॥ ४१ ॥

अर्धबललक्षणम्—

हृदयस्थो यदा वायुर्वक्त्रं शीघ्रं प्रपद्यते ।
मुखशोषं च लभते तद्बलार्धस्य लक्षणम् ॥ ४२ ॥
किंवा ललाटे नासायां गात्रसंधिषु कक्षयोः ।
यदा संजायते स्वेदो बलार्धं तु तदा दिशेत् ॥ ४३ ॥

निषेधः—

भुक्तवान्कृतसंभोगः कासी श्वासी कृशः क्षयी ।
रक्तपित्ती क्षती शोथी न तं कुर्यात्कदाचन ॥ ४४ ॥
अतिव्यायामतः कासो ज्वरश्छर्दिः श्रमः क्लमः ।
तृष्णा क्षयः प्रतमको रक्तपित्तं च जायते ॥ ४५ ॥

अभ्यङ्गः—

अभ्यङ्गमाचरेन्नित्यं सर्वेष्वङ्गेषु यत्नतः ।
शिरःश्रवणपादेषु तं विशेषेण शीलयेत् ॥ ४६ ॥

तैलमाह—

सार्षपं गन्धतैलं च यत्तैलं पुष्पवासितम् ।
अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन ॥ ४७ ॥
अभ्यङ्गो वातकफहृच्छ्रमशान्तिं बलं स्मृतिम् ।
निद्रां वर्णं मृदुत्वं च कुरुते दृष्टिपुष्टिकृत् ॥ ४८ ॥
स केश्यः शीलितो मूर्ध्नि कपालेन्द्रियतर्पणः ।
चक्षुष्पुष्टिप्रदः प्रोक्तः केशभूमिगदापहः ॥ ४९ ॥
न कर्णरोगो न मलो न च मन्या हनुग्रहः ।
नोच्चैः श्रुतिर्न बाधिर्यं स्यान्नित्यं कर्णपूरणात् ॥ ५० ॥

कर्णरसपूरणम्—

रसाद्यैः पूरणं कर्णे भोजनात्प्राक्प्रशस्यते ।
तैलाद्यैः पूरणं कर्णे भास्करेऽस्तमुपागते ॥ ५१ ॥
पादाभ्यङ्गस्तु तत्स्थैर्यनिद्रादृष्टिप्रसादकृत् ।
पादसुप्तिश्रमस्तम्भसंकोचस्फुटनप्रणुत् ॥ ५२ ॥
व्यायामक्षुण्णवपुषं पद्भ्यां संमर्दितं नरम् ।
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः ॥ ५३ ॥

स्नेहावगाहनगुणाः—

स्नेहावगाहने वातशमनं धातुपुष्टिदम् ।
अद्भिः संसिक्तमूलानां तरूणामिव पल्लवाः ॥ ५४ ॥
वर्धन्ते हि तथा नृणां स्नेहसिक्तास्तु धातवः ।

निषेधः—

नवज्वरी ह्यजीर्णी च नाभ्यक्तव्यः कथंचन ॥ ५५ ॥
तथा विरिक्तो वान्तश्च निरूढो यश्च मानवः ।
पूर्वयोः कृच्छ्रता व्याधेरसाध्यत्वमथापि वा ॥ ५६ ॥
शेषाणामामयानां च वह्नेः सादादयो गदाः ।
उद्वर्तनं कफहरं मेदोघ्नं शुक्रवर्धनम् ॥ ५७ ॥
बल्यं शोणितदं कान्तिस्त्वक्प्रसादमृदुत्वकृत् ।
मुखलेपाद्दृढं वक्त्रं नेत्रं कान्तं सरोजवत् ॥ ५८ ॥
पिडकाव्यङ्गरहितं सुगन्धद्युति जायते ।

स्नानगुणाः—

दीपनं वृष्यमायुष्यं स्नानमोजोबलप्रदम् ॥ ५९ ॥
कण्डूमलश्रमस्वेदतन्द्रातृड्दाहपाप्मनुत् ।
बाह्यैः सेकैस्तु शीताद्यं रूष्माऽन्तर्याति पीडितः ॥ ६० ॥
नरस्य स्नानमात्रस्य दीप्यते तेन पावकः ।
शीतेन पयसा स्नानं रक्तपित्तप्रशान्तिकृत् ॥ ६१ ॥
तदेवोष्णेन तोयेन बल्यं वातकफप्रणुत् ।
शिरःस्नानमचक्षुष्यमत्युष्णेनाम्बुना सदा ॥ ६२ ॥
कफवातप्रकोपे तु हितं तच्च प्रकीर्तितम् ।
अशीतेनाम्भसा स्नानं पयःपानं युवास्त्रियः ॥ ६३ ॥

---

१ ग. पिण्डका° । २ ग. °गण्डयु° ।

एतद्गो मानवाः पथ्यं स्निग्धमल्पं च भोजनम् ।
यः सदाऽऽमलकैः स्नानं करोति स विनिश्चितम् ॥ ६४ ॥
वलीपलितनिर्मुक्तो जीवेद्वर्षशतं नरः ।

स्नाननिषेधः—

स्नानं ज्वरेऽतिसारे च नेत्रकर्णानिलार्तिषु ॥ ६५ ॥
आध्मानपीनसाजीर्णभुक्तवत्सु विगर्हितम् ।
स्नानस्यानन्तरं सम्यग्वस्त्रेण तनुमार्जनम् ॥ ६६ ॥
कान्तिप्रदं शरीरस्य कण्डूत्वग्दोषनाशनम् ।
कौशेयं चित्रवस्त्रं वा रक्तवस्त्रं तथैव च ॥ ६७ ॥
वातश्लेष्महरं तत्तु शीतकाले विधारयेत् ।
मेध्यं सुशीतं पित्तघ्नं काषायं वस्त्रमुच्यते ॥ ६८ ॥
तद्धारयेदुष्णकाले तच्चापि लघु शस्यते ।
शुक्लं तु शुभदं वस्त्रं शीतातपनिवारणम् ॥ ६९ ॥
न चोष्णं न च शीतं वा तत्तु वर्षासु धार्यते ।
यशस्यं धार्यमायुष्यं श्रीदमानन्दवर्धनम् ॥ ७० ॥
स्वच्छं वशीकरं हृद्यं नवं निर्मलमम्बरम् ।
कदाऽपि न जनैः सद्भिर्धार्यं मलिनमम्बरम् ॥ ७१ ॥
तत्तु कण्डूक्रिमिकरं ग्लान्यलक्ष्मीकरं परम् ।
पट्टवस्त्रं त्रिदोषघ्नं स्वच्छमानन्दवर्धनम् ॥ ७२ ॥
वशीकरं पवित्रं च शुक्रपुष्टिबलप्रदम् ।
कुङ्कुमं चन्दनं चापि कृष्णागुरुविमिश्रितम् ॥ ७३ ॥
उष्णं कफानिलहरं शीतकाले तदिष्यते ।
चन्दनं घनसारेण वालुकेन च मिश्रितम् ॥ ७४ ॥
सुगन्धि परमं शीतमुष्णकाले प्रशस्यते ।
चन्दनं घुसृणोपेतं मृगनाभिविमिश्रितम् ॥ ७५ ॥
न चोष्णं न च शीतं च वर्षाकाले प्रशस्यते ।
अनुलेपस्तृषामूर्छादौर्गन्ध्यश्रमदाहजित् ॥ ७६ ॥
सौभाग्यतेजस्त्वग्वर्णप्रीत्योजोबलवर्धनः ।
स्नानानर्हमनुष्याणामनुलेपोऽपि नो हितः ॥ ७७ ॥

भूषणगुणाः—

१ क. र्णार्तिषोर्तिषु । २ क. पुस्तके 'न कुङ्कुमोपेतमिति पाठान्तरम् ।

सुगन्धिपुष्पपत्राणां धारणं कान्तिकारकम् ।
पापरक्षोग्रहहरं कामौजःश्रीविवर्धनम् ॥ ७८ ॥
भूषणैर्भूषयेदङ्गं यथायोग्यं विधानतः ।
शुचि सौभाग्यसंतोषदायकं काञ्चनं स्मृतम् ॥ ७९ ॥
ग्रहदृष्टिहरं पुष्टिकरं दुःस्वप्ननाशनम् ।
पापदौर्भाग्यशमनं रत्नाभरणधारणम् ॥ ८० ॥
माणिक्यं तरणेः सुजातममलं मुक्ताफलं शीतगो-
र्माहेयस्य च विद्रुमं मरकतं सौम्यस्य गारुत्मतम् ।
देवेज्यस्य च पुष्परागमसुराचार्यस्य वज्रं शने-
र्नीलं निर्मलमन्ययोश्च गदिते गोमेदवैदूर्यके ॥ ८१ ॥
वासःस्रक्स्वर्णरत्नानां धारणं प्रीतिवर्धनम् ।
रक्षोघ्नं सुष्ठु चौजस्यं सौभाग्यकरमुत्तमम् ॥ ८२ ॥
सततं सिद्धियन्त्रस्य महौषध्यास्तथैव च ।
रोचनासर्षपादीनां मङ्गल्यानां च धारणम् ॥ ८३ ॥
आयुर्लक्ष्मीकरं रक्षोहरं मङ्गलदं शुचि ।
हिंसादिभयविध्वंसि वशीकरणमुत्तमम् ॥ ८४ ॥
देवगोविप्रवृद्धानां गुरूणां चैव पूजनम् ।
आयुष्यं वृद्धिदं पुण्यमलक्ष्मीकलिखण्डनम् ॥ ८५ ॥
ततो भोजनवेलायां कुर्यान्मङ्गलदर्शनम् ।
तस्य प्रदक्षिणं नित्यमायुर्लक्ष्मीविवर्धनम् ॥ ८६ ॥
लोकेऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः ।
हिरण्यं सर्पिरादित्य आपो राजा तथाऽष्टमः ॥ ८७ ॥
पादुकारोहणं कुर्यात्पूर्वं भोजनतः परम् ।
पादरोगहरं वृष्यं चक्षुष्यं चाऽऽयुषे हितम् ॥ ८८ ॥
शरीरे जायते नृणां वाञ्छा नित्यं चतुर्विधा ।
बुभुक्षाऽथ पिपासा च सुषुप्तिः सुरतस्पृहा ॥ ८९ ॥
भोजनेच्छाविघातात्स्यादङ्गमर्दोऽरुचिः श्रमः ।
तन्द्रा लोचनदौर्बल्यं धातुदाहो बलक्षयः ॥ ९० ॥
विघातेन पिपासायाः शोषः कण्ठास्ययोर्भवेत् ।
श्रवणस्यावरोधश्च रक्तशोषो हृदि व्यथा ॥ ९१ ॥
निद्राविघाततो जृम्भा शिरोलोचनगौरवम् ।
अङ्गमर्दश्च तन्द्रा च स्यादन्नापाक एव च ॥ ९२ ॥

भवेन्मूत्राशयेऽपाने मुष्कयोः श्वयथुर्व्यथा ।
मूत्ररोधः प्रमेहश्च वातकुण्डलिकादयः ॥ ९३ ॥
हृष्टेराच्छिन्नता शुक्राश्मरी शुक्रस्य धारणात् ।
बुभुक्षितो न योऽश्नाति तस्याऽऽधारेन्धनक्षयात् ॥ ९४ ॥
क्षामो भवति कायाग्निर्यथा चाग्निर्निरिन्धनः ।

आहारव्यवस्था—

आहारं पचति शिखी दोषानाहारवर्जितः पचति ।
दोषक्षये च धातून् धातुक्षेण्ये तथा प्राणान् ॥ ९५ ॥
आहारः प्रीणनः सद्यो बलकृद्देहधारणः ।
स्मृत्यायुःशक्तिवर्णौजःसत्त्वशोभाविवर्धनः ॥ ९६ ॥
याममध्ये न भोक्तव्यं यामयुग्मं न लङ्घयेत् ।
याममध्ये रसोत्पत्तिर्यामयुग्मे बलक्षयः ॥ ९७ ॥
उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः ।
लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम् ॥ ९८ ॥
ज्वरितं ज्वरमुक्तं वा दिनान्ते भोजयेल्लघु ।
श्लेष्मक्षये प्रवृद्धोष्मा बलवाननलस्तदा ॥ ९९ ॥

अथाऽऽह चरकः—

सज्वरं विज्वरं वाऽपि मात्रया लघु भोजयेत् ।
दिनापायेऽन्यथा तद्धि ज्वरवेगाभिवर्धनम् ॥ १०० ॥
आहारं तु रहः कुर्यान्निर्हारमपि सर्वदा ॥ १०१ ॥

निर्हारो मलमूत्रोत्सर्गः ।

उक्तं च—

आहारनिर्हारविहारयोगाः सदैव सद्भिर्विजने विधेयाः । इति ॥
रुचिः पाको बलं पुष्टिर्जायते चाऽऽमयक्षयः ।

अथ हेमपात्रम्—

* दोषहृद्दृष्टिदं पथ्यं बलौजःशुक्रकान्तिदम् ॥ २ ॥
पशस्यं निर्विकारं च हैमं भोजनभाजनम् ।

* ग. पुस्तकस्थमिदमर्धम् ।

१ ग. मिताहारं च सर्वथा ।

अथ रौप्यम्—

रौप्यं भवति चक्षुष्यं पित्तहृत्कफवातकृत् ॥ ३ ॥

कांस्यपात्रम्—

कांस्यं बुद्धिप्रदं रुच्यं रक्तपित्तप्रसादनम् ।

अथ पैत्तलम्—

पैत्तलं वातकृद्रूक्षमुष्णं कृमिकफप्रणुत् ॥ ४ ॥

अथ लोहपात्रम्—

आयसे कान्तपात्रे च भोजनं सिद्धिकारकम् ।
शोथपाण्डुहरं बल्यं कामलापहमुत्तमम् ॥ ५ ॥

ताम्रपात्रम्—

ताम्रपात्रं निषिद्धं स्याद्वामयप्रशमजित् ।

मृन्मयपात्रम्—

शैलजे मृन्मये वाऽपि भोजनं श्रीनिकेतनम् ॥ ६ ॥

काष्ठपात्रम्—

दारुजं विशेषेण रुचिदं श्लेष्मकारकम् ।

[* दलपात्रम्—

दाल्यं तु रोचनं वृष्यं दूषणं विषपानजित् ।]

जलपात्रम्—

जलपात्रं तु ताम्रस्य तदभावे मृदः शुभम् ॥ ७ ॥
हेमादीनामम्बुभाजां पात्राणां पूर्ववद्गुणाः ।
काचस्फटिकवैदूर्यपात्रं शीतलमुत्तमम् ॥ ८ ॥
अन्नं ब्रह्मा रसो विष्णुर्भोक्ता देवो महेश्वरः ।
इति संचिन्त्य भुञ्जानं दृष्टिदोषो न बाधते ॥ ९ ॥
या दृष्टिः सर्वभूतानां या च दृष्टिः स्वदोषजा ।
तद्दुष्टदृष्टिनाशाय नारदं संस्मरेत्सुमान् ॥ ११० ॥
अञ्जनागर्भसंभूतं कुमारं ब्रह्मचारिणम् ।
दृष्टिदोषनिवृत्त्यर्थं हनुमन्तं स्मराम्यहम् ॥ ११ ॥

---

* चतुश्चिह्नान्तर्गतो ग्रन्थो ग. पुस्तकस्थः ।

हीनदीनक्षुधार्तानां ग्रामाद्यागतरोगिणाम् ।
कुक्कुटादिशुनां दृष्टिर्भोजने नैव शोभना ॥ १२ ॥
पितृमातृसुहृद्वैद्यपाककृद्धंसबर्हिणाम् ।
सारसस्य चकोरस्य भोजने दृष्टिरुत्तमा ॥ १३ ॥
आदौ रसान्समश्नीयात्कटुतिक्तकषायकान् ।
मध्ये मधुरमन्ते तु स्वाद्वम्ललवणान्भजेत् ॥ १४ ॥
प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये तु कठिनं घनम् ।
अन्ते पुनर्द्रवाशी तु बलारोग्ये न मुञ्चति ॥ १५ ॥
आदौ द्रवं समश्नीयात्तत्राम्बु न पिबेद्बहु ।
मध्ये तु कठिने भक्ष्ये यथेष्टं शस्यते जलम् ॥ १६ ॥
अतिद्रुताशिताहारो गुणान्दोषान्न विन्दति ।
भोज्यं शीतमहृद्यं च स्याद्विलम्बितमश्नतः ॥ १७ ॥
अत्युष्णान्नं बलं हन्ति शीतं शुष्कं च दुर्जरम् ।
अतिक्लिन्नं ग्लानिकरं युक्तियुक्तं च भोजनम् ॥ १८ ॥
मन्दस्तीक्ष्णो विषमः समश्च वह्निश्चतुर्विधः पुंसाम् ।
लघु मन्दे गुरु तीक्ष्णे स्निग्धं विषमे समे समं भोज्यम्॥१९॥

आदौ सूपाज्यभक्तं सकथिकमुदितं पायसं वाऽथ रम्यं
पक्वान्नं मध्यदेशे बहुविधफललं व्यञ्जनान्यत्र भोज्ये ।
अन्ते दुग्धं सिताढ्यं शृतमतुलरसं सान्नमत्यन्तमिष्टं
दध्यन्नं वा यथेच्छापरिकलितमिदं देशरीत्या विदध्यात् ॥१२०॥

एकं व्यञ्जनमास्वाद्य ततः प्रक्षालयेत्करम् ।
पुनरन्यत्प्रभुञ्जीत यथेच्छं नृपतिः सुखम् ॥ २१ ॥
एवमन्नं हि भुञ्जानः स्वादुत्वं लभते भृशम् ।
प्राप्नोति महतीं पुष्टिं क्रमशो धरणीपतिः ॥ २२ ॥
कथां रसालां शृणुयात्समये भोजनस्य हि ।
तया हृष्टहृदो भक्ष्यं भवत्येव गुणाधिकम् ॥ २३ ॥
भुञ्जानो न बहु ब्रूयान्न निन्देदपि किंचन ।
जुगुप्सितकथां नैव शृणुयादपि नो वदेत् ॥ २४ ॥
यथोक्तं भुङ्क्ष्व मा भैषीः तक्रं सलवणं पिब ।
तस्योपरि जलं [illegible] न किंचन ॥ २५ ॥

फलान्याद्रौ समश्नीयाद्दाडिमादीनि बुद्धिमान् ।
विना मोचाफलं तद्वद्वर्जनीया च कर्कटी ॥ २६ ॥
बदरीबीजशालूककन्देक्षुप्रभृतीनि च ।
पूर्वं भोज्यानि भिषजा न तु भुक्ते कदाचन ॥ २७ ॥
गुरु पिष्टमयं द्रव्यं तण्डुलान्पृथुकादिकान् ।
न जातु भुक्तवान्खादेन्मात्रां खादेद्बुभुक्षितः ॥ २८ ॥
कुक्षेर्भागद्वयं भोज्यैरद्भिरेकं प्रपूरयेत् ।
वायोः संचरणार्थाय चतुर्थमवशेषयेत् ॥ २९ ॥

ध्वाङ्क्षः स्वरान्विकुरुतेऽत्र विकारमजश्च
बभ्रुः शिखण्डितनयश्च मवोद्विहृष्टः ।
क्रौञ्चः प्रदुष्यति विरौति च ताम्रचूडः
छर्दिः शुकः प्रकुरुते विलपन्ति कीराः ॥ १३० ॥
हंसाः स्खलन्ति गतिषु प्रसभं चकोरो
धत्ते विरक्तिमचिरेण विलोक्य दृष्ट्या ।
अन्नाद्विषेण कलितादत एव तेभ्यो
दत्त्वाऽल्पमन्नमथ पात्रगतात्ततोऽद्यात् ॥ १३१ ॥

[ * अथ विषयुक्तम्—
भक्तं पर्युषितोपमं विषयुतं सूपो हरित्फेनिलो
मांसं नीरसनीलराजिरुगिति ह्याशुष्यति व्यञ्जनम् ।
क्षीराद्यं तु पिशङ्गपीत+त्पुष्पं विगन्धं वरं
श्यामं मण्डलि चान्यदेवमुदितं वैरस्यवैवर्ण्ययुक् ॥

एवं विषयुक्तम् । ]

अन्यच्छुण्कान्नादिफलजलताम्बूलादि—
रसेनान्नस्य रसना प्रथमेनोपतर्पिता ।
न तथा स्वादमाप्नोति सेव्यमम्भस्ततो मुहुः ॥ ३२ ॥

अत्यम्बुपानान्न विपच्यतेऽन्नं निरम्बुपानाच्च स एव दोषः ।
तस्मान्नरो वह्निविवर्धनाय मुहुर्मुहुर्वारि पिबेदभूरि॥ ३४ ॥

* धनुश्चिह्नान्तर्गतो ग्रन्थो ग. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतो ग्रन्थो ग. पुस्तकस्थः

१ क. °द्विसृष्टः । २ क. °त्क्लप°।

मुक्तस्याऽऽदौ जलं पीतं कार्श्यमन्दाग्निदोषकृत् ।
मध्येऽग्निदीपनं श्रेष्ठमन्ते स्थौल्यकफप्रदम् ॥ ३५ ॥
तृषितस्तु न चाश्नीयात्क्षुधितो न पिबेज्जलम् ।
तृषितस्तु भवेद्गुल्मी क्षुधितश्च जलोदरी ॥ ३६ ॥
आचम्य जलयुक्ताभ्यां पाणिभ्यां चक्षुषी स्पृशेत् ।
भुक्त्वा पाणितलं घृष्ट्वा चक्षुषोर्यदि दीयते ॥ ३७ ॥
अचिरेणैव तद्वारि तिमिराणि व्यपोहति ।
शर्यातिं च सुकन्यां च च्यवनं शक्रमश्विनौ ॥ ३८ ॥
भोजनान्ते स्मरन्नक्ष्णोरङ्गुलाग्राम्बु निक्षिपेत् ।
ततस्तु संस्मरेन्नित्यमगस्त्यादीन्मुनीन्स्पृशन् ॥
जठरं तेन तस्याऽऽशु भुक्तं पचति देहिनः ॥ ३९ ॥
अगस्तिं कुम्भकर्णं च शनिं च वडवानलम् ।
आहारपरिपाकार्थं स्मरामि च वृकोदरम् ॥ ४० ॥
भुक्त्वानुपसेवेत तेनान्नं साधु तिष्ठति ।
अङ्गारकमगस्तिं च पावकं सूर्यमश्विनौ ॥ ४१ ॥
यश्चैतान्संस्मरेन्नित्यं भुक्तं तस्याऽऽशु जीर्यति ।
ततः संशीलयेन्मर्त्यस्ताम्बूलममृतोपमम् ॥ ४२ ॥
ताम्बूलपत्रं तीक्ष्णोष्णं रोचनं तुवरं सरम् ।
तिक्तं च पाचनं कामरक्तपित्तकरं लघु ॥ ४३ ॥
वश्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम् ।
पूगं स्यात्कफपित्तघ्नं तत्तु स्विन्नं त्रिदोषनुत् ॥ ४४ ॥
सरसं गुर्वभिष्यन्दि तच्चूर्णं वह्निनाशनम् ।
खदिरः कफपित्तघ्नश्चूर्णं वातबलासनुत् ॥ ४५ ॥
संयोगतो दोषहरं सौमनस्यं करोति च ।
मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम् ॥ ४६ ॥
प्रभाते पूगमधिकं मध्याह्ने खदिरं तथा ।
निशायां तु तथा चूर्णं ताम्बूलं भक्षयेत्सदा ॥ ४७ ॥
नात्युच्चैर्नातिनीचैश्च पर्णानां दशकं वरम् ।
अर्धपूगं सखदिररक्तिकं योग्यचूर्णयुक् ॥ ४८ ॥
एतत्ताम्बूलमुचितं कामकृत्पाचनं सरम् ।
पर्णाधिक्यात्पित्तकरं पूगाधिक्यात्कफप्रदम् ॥ ४८ ॥

शुक्लस्य शिराधिक्यात्तस्मात्तदुचितं परम् ।
आयुरग्रे यशो मूले लक्ष्मीर्मध्ये व्यवस्थिता ॥ ४९ ॥
तस्मादग्रं तथा मूलं मध्यं चास्य विवर्जयेत् ।
पर्णमूले भवेद्व्याधिः पर्णाग्रे चाऽऽयुषः क्षयः ॥
चूर्णपर्णं हरेल्लक्ष्मीः शिरा बुद्धिविनाशिनी ॥ ५० ॥

ताम्बूलगुणाः—

ताम्बूलं कटु तिक्तमुष्णमधुरं क्षारं कषायान्वितं
वातघ्नं कृमिनाशनं कफहरं दुर्गन्धिनिर्नाशनम् ।
वक्त्रस्याऽऽभरणं विशुद्धिकरणं कामाग्निसंदीपनं
ताम्बूलस्य सखे त्रयोदश गुणाः स्वर्गेऽपि ते दुर्लभाः ॥ ५१ ॥

निषेधः—

न नेत्रकोपे न च रक्तपित्ते क्षते न पाते न विषे न शोषे ।
मदात्यये नापि न मोहमूर्छाश्वासेषु ताम्बूलमुशन्ति वैद्याः ॥ ५२ ॥

आदौ विषोपमं पीतं द्वितीयं भेदि दुर्जरम् ।
तृतीयादि तु पातव्यं सुधातुल्यं रसायनम् ॥ ५३ ॥
शयनं चाऽऽसनं चाति न भजेन्न द्रवादिकम् ।
नाग्न्यातपौ न प्लवनं न यानं नापि वाहनम् ॥ ५४ ॥
व्यायामं च व्यवायं च धावनं भारमेव च ।
युद्धं गीतं च पाठं च मुहूर्तं भुक्तवांस्त्यजेत् ॥ ५५ ॥
भुक्त्वा शतपदं गच्छेच्छतपद्या तु जायते ।
अन्नसंघातशैथिल्यं ग्रीवाजानुकटीसुखम् ॥ ५६ ॥
भुक्त्वोपविशतस्तुन्दं शयानस्य बलं भवेत् ।
आयुश्चङ्क्रममाणस्य मृत्युर्धावति धावतः ॥ ५७ ॥
वामदिशायामनलो नाभ्यूर्ध्वस्थित इतो बलवान् ।
तस्मात्तु वामपार्श्वे शयीत भुक्तप्रपाकार्थम् ॥ ५८ ॥

मतान्तरम्—

मनागुत्तानशायी स्याद्भुक्त्वा दक्षिणशाय्यपि ॥ ५९ ॥
वामशायी ततोऽन्नस्य शैथिल्यं स्थैर्यपङ्क्तिने* ।(?)

* "श्वासानष्टौ समुत्तानस्तान् द्विः पार्श्वे तु दक्षिणे । ततस्तद्द्विगुणान्वामे पश्चात्स्वप्याद्यथासुखम् । भोजनकुतूहलात् । इतीयं टिप्पनी स्थैर्यपङ्क्तिन इत्यत्र क. पुस्तके ।

१ ग. °र्थं पर्णस्य व° ।

खट्वातूल्यादिगुणाः—

त्रिदोषशमनी खट्वा तूली वातकफापहा ॥ १६० ॥
भूशय्या बृंहणी वृष्या काष्ठशय्या तु वातला ।
भूशय्याशयनं हृद्यं पुष्टिनिद्राधृतिप्रदम् ॥ ६१ ॥
श्रमानिलहरं वृष्यं कफवातश्रमापहम् ।
प्रवातं रौक्ष्यवैवर्ण्यसुखकृद्दाहपित्तनुत् ॥ ६२ ॥
स्वेदमूर्छापिपासाघ्नमप्रवातमतोऽन्यथा ।
सुखं प्रवातं सेवेत ग्रीष्मे शरदि वा तथा ॥ ६३ ॥
निर्वातमायुषे सेव्यमारोग्याय सुखाय च ।

पूर्वादिवातगुणाः—

पूर्वानिलो गुरुश्चोष्णः स्निग्धः पित्तास्रदूषकः ॥ ६४ ॥
विदाही वातलः श्रान्तकफशोषवतां हितः ।
स्वादुः पटुरभिष्यन्दी त्वग्दोषार्तो विषक्रिमीन् ॥ ६५ ॥
संनिपातं ज्वरं श्वासमामवातं च कोपयेत् ।
दक्षिणः पवनः स्वादुः पित्तरक्तहरो लघुः ॥ ६६ ॥
वीर्येण शीतलो बल्यश्चक्षुष्यो न तु वातलः ।
पश्चिमः पवनस्तीक्ष्णः शोषणो बलहृल्लघुः ॥ ६७ ॥
मेदःपित्तकफध्वंसी प्रभञ्जनविवर्धनः ।
उत्तरो मारुतः शीतः स्निग्धो दोषप्रकोपकृत् ॥ ६८ ॥
क्लेदनः प्रकृतिस्थानां बलदो मधुरो मृदुः ।
ऐशानः कटुराग्नेयो रूक्षो दाहकरो मतः ॥ ६९ ॥
नैर्ऋतोऽतिप्रदाही स्यात्तिक्तो वायव्य उच्यते ।

व्यजनगुणाः—

व्यजनस्यानिलस्तृष्णास्वेदमूर्छाश्रमापहः ॥ ७० ॥
तालवृन्तभवो वातत्रिदोषशमनो मतः ।
वंशजव्यजनश्चोष्णो रक्तपित्तप्रकोपनः ॥ ७१ ॥
चामरो वस्त्रजातश्च मायूरो वेत्रजस्तथा ।
एते दोषजितो वाताः स्निग्धा हृद्याः सुपूजिताः ॥ ७२ ॥
दिवा स्वापं न कुर्वीत यतोऽसौ स्यात्कफावहः ।
ग्रीष्मवर्ज्येषु कालेषु दिवा स्वप्नो निषिध्यते ॥ ७३ ॥

१ °स्यानिय°।

उचितो हि दिवास्वप्नो नित्यं येषां शरीरिणाम् ।
वातादयः प्रकुप्यन्ति तेषामस्वपतां दिवा ॥ ७४ ॥
व्यायामप्रमदाध्ववाहनरतान्क्लान्तानतीसारिणः
शूलश्वासवतस्तृषापरिगतान्हिक्काप्रमरुत्पीडितान् ॥
क्षीणान्क्षीणकफाञ्शिशून्मदहतान्वृद्धान्वसाजीर्णिनो
रात्रौ जागरितान्नराञ्निरशनान्कामं दिवा स्वापयेत् ॥७५॥
दिवा वा यदि वा रात्रौ निद्रा सात्मीकृता न यैः ।
तेषां स्वपवतां दोषो जाग्रतां वोपजायते ॥ ७६ ॥
भोजनानन्तरं निद्रा वातघ्नी कफपुष्टिकृत् ।
शयनं पित्तनाशाय वातनाशाय मर्दनम् ॥ ७७ ॥
वमनं कफनाशाय ज्वरनाशाय लङ्घनम् ।
आयुःक्षयभयाद्विद्वान्नाह्नि सेवेत कामिनीम् ॥ ७८ ॥
अवशो यदि सेवेत तदा ग्रीष्मवसन्तयोः ।
आस्या स्थौल्यरुचिश्लेष्मसौकुमार्यसुखप्रदा ॥ ७९ ॥
अध्वा वर्णश्लेष्ममेदःसौकुमार्यविनाशनः ।
यस्य चङ्क्रमणं नास्ति तस्य स्यादङ्गपीडनम् ॥ ८० ॥
तदायुर्बलमेधाग्निप्रदमिन्द्रियबोधनम् ।
उष्णीषं कान्तिकृत्केश्यं रजोवातकफापहम् ॥ ८१ ॥
लघु तच्छस्यते यस्माद्गुरु पित्ताक्षिरोगकृत् ।
उपानद्धारणं नेत्र्यमायुष्यं पादरोगजित् ॥ ८२ ॥
सुखप्रचारमोजस्यं सदा वृष्यमुदीरितम् ।
पादाभ्यामनुपानभ्यां सदा चङ्क्रमणं नृणाम् ॥ ८३ ॥
अनारोग्यमनायुष्यमिन्द्रियघ्नमहष्टिदम् ।
छत्रसंधारणं वर्षातपवातरजोहरम् ॥ ८४ ॥
श्रमघ्नं हितमक्ष्णोश्च मङ्गल्यमपि कीर्तितम् ।
सत्त्वोत्साहबलस्थैर्यशौर्यधैर्यविवर्धनम् ॥ ८५ ॥
अवष्टम्भकरं चापि भयघ्नं दण्डधारणम् ।
ऊर्ध्वाच्छादनसंयुक्ता शिबिका सर्ववल्लभा ॥ ८६ ॥
आस्या गुणकरी ज्ञेया दोषघ्नी च यशस्करी ।
वातश्लेष्मगदार्तानामहिता श्रमकृत्तरिः ॥ ८७ ॥
पित्तानिलकरो हस्ती लक्ष्म्यायुःपुष्टिवर्धनः ।
घोटकारोहणं वातपित्ताग्निश्रमकृन्मतम् ॥ ८८ ॥

कफमेदोवर्णहरं हितं तद्बलिनां परम्।
आतपः स्वेदमूर्छाभ्रूकपित्ततृष्णाक्लमभ्रमान् ॥ ८९ ॥
दाहं विवर्णतां कुर्यादेतान्छाया व्यपोहति।
वृष्टिर्वृष्या हिमा बल्या निद्रालस्यविधायिनी ॥ ९० ॥
भयावहा मोहसम्पक्कफवातरुजाकरी।
अग्निर्वातकफस्तम्भशीतवेपथुनाशनः ॥ ९१ ॥
आमाभिष्यन्दशमनो रक्तपित्तप्रकोपनः।
धूमः पित्तानिलौ कुर्यात्सद्यः श्लेष्मकरश्च सः ॥ ९२ ॥
सतताध्ययनं वादः परतश्चावलोकनम्।
सद्विद्याऽऽचारसेवा च बुद्धिमेध्यकरी शुभा ॥ १९३ ॥

इति योगतरङ्गिण्यां दिनचर्याकथनं नाम सप्तदशस्तरङ्गः ॥ १७ ॥

---

अथाष्टादशस्तरङ्गः।

---

## अथ रात्रिचर्या—

चत्वारीमानि कर्माणि संध्यायां वर्जयेद्बुधः।
आहारं मैथुनं निद्रां पठनं च तुरीयकम् ॥ १ ॥
आहाराज्जायते व्याधिर्गर्भो रौद्रश्च मैथुनात्।
निद्राया जायतेऽलक्ष्मीः पठनादायुषः क्षयः ॥ २ ॥
ज्योत्स्ना शीता स्मरानन्दप्रदा तृट्पित्तदाहजित्।
ततो हीनगुणः कुर्यादवश्यायः कफानिलौ ॥ ३ ॥
तमो भयावहं मोहकफपित्तक्लमप्रदम्।
बलिनो मनसो रोधात्क्रोधाद्वा ब्रह्मचर्यतः ॥ ४ ॥
नारीणां रतजत्वात्तु क्षीणं शुक्रं भवेन्नृणाम्।
दौर्बल्यं मुखशोषश्च पाण्डुत्वं सदनं भ्रमः ॥ ५ ॥
क्लैब्यं शुक्रविसर्गश्च क्षीणशुक्रस्य लक्षणम्।
अव्यवायान्मेहमेदोवृद्धिः शिथिलता तनोः ॥ ६ ॥
सेवनं योषितां कुर्याद्बुधो बुद्ध्वा रतिक्रमम्।
बाला योग्याऽधिरूढा च अनुरागाभिभावनात् ॥ ७ ॥

---

१ क. °भ्रमभा°। २ ग. °यापहा मोहितस्य कफ°। ३ ग. °नामेधे°। ४ ग. °मेधाक°।

बालेति गीयते नारी यावद्वर्षाणि षोडश ।
द्वात्रिंशद्वर्षपर्यन्तं तरुणी तदनन्तरम् ॥ ८ ॥
पञ्चाशद्वर्षपर्यन्तमधिरूढा ततः परम् ।
वृद्धा तत्परतो ज्ञेया सुरतोत्सववर्जिता ॥ ९ ॥
निदाघशरदोर्बाला हिता विषयिणे भवेत् ।
हेमन्ते शिशिरे योग्या प्रौढा वर्षावसन्तयोः ॥ १० ॥
नित्यं वा सेव्यमाना हि बाला वर्धयते बलम् ।
क्षयं नयति योग्या स्त्री प्रौढा जनयते जराम् ॥ ११ ॥
सद्यो मांसं नवं चान्नं बाला स्त्री क्षीरभोजनम् ।
घृतमुष्णोदकस्नानं सद्यः प्राणकराणि षट् ॥ १२ ॥
पूतिमांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि ।
प्रभाते मैथुनं निद्रा सद्यः प्राण*हराणि षट् ॥ १३ ॥
वृद्धोऽपि तरुणीं गत्वा तरुणत्वमवाप्नुयात् ।
वयोधिकां स्त्रियं गत्वा तरुणः स्थविरायते ॥ १४ ॥

देशविशेषजातस्त्रीस्वभावः—

रूक्षाङ्गी बहुभोजनी चलमतिर्गीतप्रिया वातला
शैलाम्भोनिधिपार्श्वदेशवनिता प्रायो भवेदीदृशी ।
वर्षायां कुसुमागमे च बहुशः सेव्या परं प्रीतिदा
गुर्वी हारसुगन्धिमाल्यवसना स्निग्धाऽङ्गरागादितः ॥ १५ ॥
व्यक्तग्रन्थिरहर्निशं च सकले गात्रे वहन्त्युष्णता-
मम्भोजप्रसवारुणोत्तमकला शीताऽनिलप्रेयसी ।
सौराष्ट्रवङ्गकलिङ्गसिन्धुयुवतिः कामं भवेत्पित्तला
हेमन्ते शिशिरे नरैरनुदिनं सेव्या यथा काङ्क्षया ॥ १६ ॥
ज्ञेया कोकिलकाकली मृदुरवा नन्द्वेषिणी शीतला
निद्रालुश्च शिरीषकोमलतनुः स्निग्धाननां श्लेष्मला ।
वङ्गस्त्री हठकामरूपतरुणी सुस्निग्धकेशी भवे-
द्गन्तव्या शरदि प्रदिष्टमदना ग्रीष्मेऽपि पुंभिर्वरैः ॥ १७ ॥
सेवेत कामतः कामं तृप्तो वाजीकृतां हिमे ।
प्रकामं तु निषेवेत मैथुनं शिशिरागमे ॥ १८ ॥

* 'प्राणशब्दः शक्तिबलवाचको न तु जीववाचकः' इयं टिप्पणी क पुस्तकस्था ।

१ क. °कुमालिनी बलयती गीत°। २ ग. गुर्वीहा°। ३ क °वेच्छीतला । ४ क. °ना कोमला । ५ क. प्रदुष्टमना । ६ ग. कामिनी कामं वत्स वाजीकृतो हि° ।

दिनमर्यादामाह—

त्र्यहाद्वसन्तशरदोः पक्षाद्वृष्टिनिदाघयोः ।
शीते रात्रौ दिवा ग्रीष्मे वसन्ते तु दिवा निशि ॥ १९ ॥
वर्षासु जलदध्वाने शरत्सु सरसः स्मरः ।
रजस्वला व्याधिमती विशेषाद्योनिरोगिणी ॥ २० ॥
वयोधिका च निष्कामा मलिना गर्भिणी तथा ।
एतासां संगमात्माहुर्वैगुण्यानि बहूनि च ॥ २१ ॥
गर्भिणी सप्तमान्मासादुपरिष्टान्निषिध्यते ।
संप्राप्ते त्वष्टमे मासि मैथुनं परिवर्जयेत् ॥ २२ ॥
[ * यदि गच्छति दुर्मेधाः काममोहाच्च यो जनः ।
अन्धो मूकोऽथ बधिरो जायते कुब्ज एव च ॥ २३ ॥ ]

निषेधः—

अत्याशितोऽधृतिः क्षुद्वान्व्यथिताङ्गः पिपासितः ।
बालो वृद्धोऽन्यवेगार्तस्त्यजेद्रोगी च मैथुनम् ॥ २३ ॥
शूलकासज्वरश्वासकार्श्यपाण्ड्वामयक्षयाः ।
अतिव्यवायाज्जायन्ते रोगाश्चाऽऽक्षेपकादयः ॥ २४ ॥
आयुष्मन्तो मन्दजरावपुर्वर्णबलान्विताः ।
स्थिरोपचितमांसाश्च भवन्ति स्त्रीषु संयुताः ॥ २५ ॥
स्नानं सशर्करं क्षीरं रसा भक्ष्याश्च गौडिकाः ।
व्यजनं स्वप्नसेवा च व्यवायान्ते हिताः सदा ॥ २६ ॥
रात्रौ जागरणं रूक्षं कफदोषविषार्तिजित् ।
निद्राऽनुसेविता काले धातुसाम्यमतन्द्रताम् ॥ २७ ॥
पुष्टिवर्णबलोत्साहदीप्तवह्नीन्करोति च ॥ २८ ॥
सवितुरुदयकाले प्रसृतीः सलिलस्य पिबेदष्टौ ।
रोगजरापरिमुक्तो जीवेद्वर्षशतं साग्रम् ॥ २९ ॥

अस्य जलपानस्योपक्रमकालो रात्रेश्चतुर्थप्रहरप्रवेशः ।

तथा च भोजः—

पिबति पर्युषितं जलमन्वहं तिमिरवांश्चरमप्रहरे निशः ।
यदि तदा लभते स तु गारुडीं दृशमपास्तसमस्तगदो नरः ॥३०॥

* धनुश्चिह्नान्तर्गतोऽयं श्लोको ग. पुस्तकस्थः ।

एतज्जलपानकालमर्यादा सूर्योदयातिसंनिहितः प्राक्कालः ।

तथा च ग्रन्थान्तरे—

अम्भसः प्रसृतीरष्टौ रवावनुदिते पिबेत् ।
नयनागमलं प्राप्य जीवेद्वर्षशतं नरः ॥ ३१ ॥

सलिलस्यात्र पर्युषितस्य ग्रहणं भोजवचनानुसारतः ।

विगतघननिशीथे प्रातरुत्थाय नित्यं
पिबति खलु नरो यो घ्राणरन्ध्रेण वारि ।
स भवति मतिपूर्णश्चक्षुषा तार्क्ष्यतुल्यो
वलिपलितविहीनः सर्वरोगैर्विमुक्तः ॥ ३२ ॥

निशीथोऽत्र निशान्धकारः । मात्राप्रसृतित्रयम् ।

उक्तं च भोजेन—

'प्रसृतित्रयमम्भसः पिबेन्मनुजो नासिकया समाहितः' ॥ इति ।

स्नेहे पीते क्षतेऽशुद्धावाध्माते स्तिमितोदरे ।
हिक्कायां कफवातोत्थे व्याधौ तद्वारि वारयेत् ॥ ३३ ॥

इति रात्रिचर्यागुणाः ।

इति योगतरङ्गिण्यां रात्रिचर्या नामाष्टादशस्तरङ्गः ॥ १८ ॥

---

अथैकोनविंशस्तरङ्गः ।

---

अथ द्रव्यरसविपाकादिवर्णनम्—

द्रव्यमेव रसादीनां श्रेष्ठं ते हि तदाश्रयाः ।
पञ्चभूतात्मकं तत्तु क्ष्मामधिष्ठाय जायते ॥ १ ॥
अम्भोयोन्यग्निपवननभसां समवायतः ।
तन्निर्वृत्तिर्विशेषश्च व्यपदेशस्तु भूयसा ॥ २ ॥
तस्मान्नैकरसं द्रव्यं भूतसंघातसंभवात् ।
द्रव्ये रसो गुणो वीर्यं विपाकः शक्तिरेव च ॥ ३ ॥
संबन्धेन क्रमादेताः पञ्चावस्थाः प्रकीर्तिताः ।
क्वचिद्रसा गुणाः क्वापि वीर्यं पाकः क्वचित्क्वचित् ॥ ४ ॥

---

१ क. क्षयेऽशु° ।

क्वचित्प्रभावः स्वं कर्म द्रव्यस्थो विदधाति हि ।
रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः ॥ ५ ॥
षड्द्रव्यमाश्रितास्ते तु यथापूर्वं गुणावहाः ।

मधुरगुणाः—

रसो हि मधुरः शीतो धातुस्तन्यबलप्रदः ॥ ६ ॥
चक्षुष्यो वातपित्तघ्नः कुर्यात्स्थौल्यमलक्रिमीन् ।
बालवृद्धक्षतक्षीणवर्णकेशेन्द्रियौजसाम् ॥ ७ ॥
प्रशस्तो बृंहणः कण्ठ्यो गुरुः संघातकृन्मतः ।
सोऽतियुक्तो ज्वरश्वासगलगण्डार्बुदक्रिमीन् ॥ ८ ॥
स्थौल्याग्निसान्द्यमेहांश्च कुर्यान्मेदः कफामयान् ।

अथाम्लरसः—

रसोऽम्लः पाचनो रुच्यः पित्तश्लेष्मप्रदो लघुः ॥ ९ ॥
लेखनोष्णो बहिः शीतः क्लेदनः पवनापहः ।
स्निग्धस्तीक्ष्णरसः शुक्रविबन्धानाहहृद्दिहा ॥ १० ॥
हर्षणो रोमदन्तानामक्षिभ्रुवनिकोचनः ।
सोऽतियुक्तो भ्रमं कुर्यात्तृड्दाहतिमिरज्वरान् ॥ ११ ॥
कण्डूपाण्डुत्ववीसर्पस्फोटविस्फोटकुष्ठकृत् ।

लवणरसः—

लवणः शोधनो रुच्यः पाचनः कफपित्तदः ॥ १२ ॥
पुंस्त्ववातहरः कायशैथिल्यमृदुताकरः ।
बलघ्न आस्यजलदः कपोलगलदाहकृत् ॥ १३ ॥
सोऽतियुक्तोऽक्षिपाकास्रपित्तकोपक्षतादिकृत् ।
वलीपलितखालित्यकुष्ठवीसर्पतृट्प्रदः ॥ १४ ॥

अथ तिक्तः—

तिक्तः शीतस्तृषामूर्छाज्वरपित्तकफाञ्जयेत् ।
कृमिकुष्ठविषक्लेददाहरक्तकफापहः ॥ १५ ॥
रुच्यः स्वयमरोचिष्णुः कण्ठस्तन्यास्यशोधनः ।
वातलोऽग्निकरो नासाशोषणो रुचको लघुः ॥ १६ ॥
सोऽतियुक्तः शिरःशूलमन्यास्तम्भश्रमार्तिकृत् ।
कम्पमूर्छातृषाकारी बलशुक्रक्षयप्रदः ॥ १७ ॥

कटुरसः—

कटुकः पित्तलः श्लेष्मकृमिकण्डूविषापहः ।
आग्नेयो वातलः स्तम्भमेदस्थौल्यहरो लघुः ॥ १८ ॥
अश्रुदो नासिकास्रस्य जिह्वाग्रे द्विजकोपतः ।
दीपनः पाचनो रुच्यो नासिकाशोषणः परः ॥ १९ ॥
क्लेदमेदोवसामज्जशकृन्मूत्रोपशोषणः ।
स्रोतःप्रकाशको रुच्यो मेध्यो वर्णविशुद्धिकृत् ॥ २० ॥
सोऽतियुक्तो भ्रमास्योष्ठतालुशोषातिदाहदः ।
कण्ठादिपीडामूर्छातृट्कम्पदो बलशुक्रहृत् ॥ २१ ॥

कषायः—

कषायो रोपणो ग्राही शोषणो वातकोपनः ।
कफशोणितपित्तघ्नो रूक्षः शीतो गुरुर्मतः ॥ २२ ॥
त्वक्प्रसादन आमस्य स्तम्भनः परमो मतः ।
जिह्वाजाड्यकरः कण्ठस्रोतसां च विबन्धकृत् ॥ २३ ॥
सोऽतियुक्तो ग्रहाध्मानहृत्पीडाक्षेपणादिकृत् ।

अथ गुणाः—

लघुर्गुरुस्तथा स्निग्धो रूक्षस्तीक्ष्ण इति क्रमात् ॥ २४ ॥
नभोभूवारिघातानां वह्नेश्चैते गुणा मताः ।

अथ गुणागुणाः—

लघु पथ्यं परं प्रोक्तं कफघ्नं शीघ्रपाकि च ॥ २५ ॥
गुरु वातहरं पुष्टिश्लेष्मकृच्चिरपाकि च ।
स्निग्धं कफकरं वातहरं वृष्यं बलावहम् ॥ २६ ॥
रूक्षं परं कफहरं समीरणकरं परम् ।
तीक्ष्णं पित्तकरं प्रायो लेखनं कफवातहृत् ॥ २७ ॥

अथ वीर्यम्—

वीर्यमुष्णं तथा शीतं प्रायशो द्रव्यसंयुतम् ।
यत्सर्वमग्नीषोमीयं दृश्यते भुवनत्रयम् ॥ २८ ॥

---

१ ग. स्तम्भमे° । २ ग. °को रूक्षो मे° । ३ ग. °सांद्रिस° ।

अथैतद्गुणाः—

उष्णं वातकफध्वंसि पित्तं तु तनुतेतराम् ।
शीतं वातकफातङ्कान्कुरुते पित्तहृत्परम् ॥ २९ ॥

अथ विपाकः—

मिष्टः पटुश्च मधुरमम्लोऽम्लं पच्यते रसः ।
कटुतिक्तकषायाणां पाकः स्यात्मायशः कटुः ॥ ३० ॥

अथ विपाकगुणाः—

श्लेष्मकृन्मधुरः पाको वातपित्तहरो मतः ।
अम्लस्तु कुरुते पित्तं वातश्लेष्मगदापहः ॥ ३१ ॥
कटुः करोति पवनं कफपित्तं च नाशयेत् ।

अथ प्रभावः—

प्रभावस्तु यथा धात्री लकुचस्य रसादिभिः ॥ ३२ ॥
समाऽपि कुरुते दोषत्रितयस्य विनाशनम् ।
क्वचित्तु केवलं द्रव्यं कर्म कुर्यात्प्रभावतः ॥ ३३ ॥
ज्वरं हन्ति शिखाबद्धा सहदेवीजटा यथा ।

अथ विशेषमाह—

मधुरं श्लेष्मलं सर्वमृते शालेः पुरातनात् ॥ ३४ ॥
मुद्गाद्गोधूमतः क्षौद्रात्सिताया जाङ्गलामिषात् ।
अम्लः पित्तकरः प्रायो विना धात्रीं च दाडिमीम्॥ ३५ ॥
लवणं प्रायशो द्वेपि नेत्रयोः सैन्धवं विना ।
प्रायः कटुस्तथा तिक्तमवृष्यं वातकोपनम् ॥ ३६ ॥
शुण्ठीकृष्णारसोनानि पटोलममृतां विना ।
प्रायशस्तम्भनं प्रोक्तं कषायमभयां विना ॥ ३७ ॥
सामान्येनात्र निर्दिष्टा गुणाः षड्रससंभवाः ।
रसानां योगतोऽपि स्यादन्य एव गुणोदयः ॥ ३८ ॥

रसभेदा यथा—

संयोगाः सप्तपञ्चाशत्कल्पना तु त्रिषष्टिधा ।
रसानां यौगिकत्वेन यथास्थूलमुदाहृताः ॥ ३९ ॥
एकैकहीनास्तान्पञ्च दश यान्ति रसा द्विके ।
त्रिके स्वादुर्दशाम्लः षट् त्रीन्पटुस्तिक्त एककम् ॥ ४० ॥

चतुष्के तु दश स्युश्चतुरोऽम्लः पटुः सकृत् ।
पञ्चकेष्वेकमेवाम्लो मधुरः पञ्च रोचते ॥ ४१ ॥
द्रव्यमेकं षडास्वादमसंयुक्ताश्च षड्रसाः ॥ ४२ ॥
षट्पञ्चकाः षट् च पृथग्रसाः स्युश्चतुर्द्विकौ पञ्चदशप्रकारौ ।
भेदात्मिका विंशतिरेकमेव द्रव्यं षडास्वादमिति त्रिषष्टिः॥ ४३ ॥
ते रसानुरसतो रसभेदास्तारतम्यपरिकल्पनया च ।
संभवन्ति गणनां समतीता दोषभेषजवशादुपयोज्याः ॥ ४४ ॥

अथ रसोत्पत्तिहेतुभूतानि—

क्ष्माम्भोऽग्निक्ष्माम्बुतेजःखवाय्वग्न्यनिलगोऽनिलैः ।
द्वयोल्बणैः क्रमाद्भूतैर्मधुरादिरसोद्भवः ॥ ४५ ॥

इति योगतरङ्गिण्यां द्रव्यरसविपाकादिवर्णनं नामैकोनविंशस्तरङ्गः ॥ १९ ॥

---

अथ विंशस्तरङ्गः ।

---

अथ जलगुणागुणकथनम् ।

दिव्यं भौममिति प्रोक्तं पानीयं द्विविधं बुधैः ।
दिव्यं चतुर्धा गदितं धारं कारं तौषारं हिमजं तथा ॥ १ ॥
धाराजं करकाजातमिति धारं पुनर्द्विधा ।
गाङ्गं समुद्रजं चेति गाङ्गं श्रेष्ठतमं तयोः ॥ २ ॥
आकाशगङ्गासंभूतं जलमादाय दिग्गजाः ।
मेघैरन्तरिता वृष्टिं कुर्वन्तीति सतां वचः ॥ ३ ॥
युक्त्याऽन्तरिक्षे विधृतं न स्पृष्टं क्षितिमण्डलम् ।
स्थापयेन्मृन्मये पात्रे राजते हेमजेऽथ वा ॥ ४ ॥
शाल्यन्नं येन संसिक्तं विकृतिं नैव गच्छति ।
तद्गाङ्गं सर्वदोषघ्नं ज्ञेयं सामुद्रमन्यथा ॥ ५ ॥
आश्विने मासि सामुद्रं गुणैर्गाङ्गमिवाऽऽदिशेत् ।

अथ सामान्यवारिगुणाः—

पानीयं शीतलं हृद्यं हन्ति पित्तं विषं कृमीन् ॥ ६ ॥

---

१ क. °मं पयः । ग° । २ क. °भूतल न ।

दाहाजीर्णश्रमच्छर्दिमदमूर्छामदात्ययान् ।
तृण्मोहमेदोमेहांश्च मोहपाण्डुगलामयान् ।
तन्द्राक्लमभ्रमालस्यारुचीश्च बलकृत्परम् ॥ ७ ॥
पानीयं श्रमनाशनं क्लमहरं मूर्छापिपासापहं
तन्द्रास्वप्नविनाशनं बलकरं स्याज्जीवनं तर्पणम् ।
हृद्यं गुप्तरसं ह्यजीर्णशमनं चैकान्तपथ्यं परं
शीतं दिव्यमृतोपमं रसगणानां कारणं छर्दिहृत् ॥ ८ ॥

## अथ सामान्यदिव्यवारिगुणाः—

दिव्यं त्वनिर्देश्यरसं जीवनं तर्पणं लघु ।
रसायन तृषामूर्छातन्द्रादाहक्लमापहम् ॥ ९ ॥
सदा सौम्यगुणं बल्यं मदभिद्राग्निदोपहृत् ।
आश्वासं जननं ह्लादि श्रमभ्रमतिबुद्धिदम् ॥ १० ॥

## अथ तौषारम्—

अपि नद्याः समुद्रान्ते वह्नेरापः समुत्थिताः ।
धूमावपर्वनिर्मुक्तास्तुषाराख्यास्तु ताः स्मृताः ॥ ११ ॥
अपथ्याः प्राणिनां प्रायो भूरुहाणां तु ता हिताः ।
तौषारं वातलं शीतं रूक्षं पित्तकफापहम् ।
गलगण्डरुगाध्मानकण्डूकृत्तृप्तिकारकम् ॥ १२ ॥

## अथ हिमजलम्—

हिमवच्छिखरादिभ्यो द्रवीभूयामिवर्षति ।
हिमं यदम्भस्तद्धैमं प्रवदन्ति भिषग्वराः ॥ १४ ॥
हैमं गुरुतरं शीतं पित्तनुद्वातवर्धनम् ।
तर्पणं ह्लादि बलकृदपथ्यं वातरोगिणाम् ॥ १५ ॥

## अथ धाराजलम्—

धारं भूमावपतितं दिव्यं तत्सर्वदोपनुत् ।
पथ्यं विशेषात्कर्णाक्षिनासारोगवतां नृणाम् ॥ १६ ॥

---

१ ग. °ध्व मेह° । २ क. °भ्रमा° । ३ क. °श्वादेज° । ४ ग. °कृत्सुपथ्यं ।

अथ करकाजलम्—
करकाजं जलं रूक्षं शिशिरं गुरु वातलम् ।
विशदं कफकृद्बल्यं पित्तश्रमगदार्तिजित् ॥ १७ ॥
अथ भौमलक्षणगुणागुणाः—
दिव्यं तु भूमिपतितं भौममित्यभिधीयते ।
भौमं त्वनेकधा तोयं नादेयादिविभेदतः ॥ १८ ॥
दिव्याभावे तु तत्पेयं विचार्य च गुणागुणान् ।
अथ सामान्यनदीजलगुणागुणाः—
नादेयं दीपनं रूक्षं वातलं लघुलेखनम् ॥ १९ ॥
पित्तघ्नं नातिकफकृत्पुष्टिकृद्बलवर्धनम् ।
अथ विशेषः—
नद्यः शीघ्रवहा लघ्व्यः सर्वा याश्चामलोदकाः ॥ २० ॥
मन्दगाः कलुषा गुर्व्यो याश्च शैवलसेविताः ।
अथ हिमालयोद्भूतनदीवारिगुणागुणाः—
हिमवत्प्रभवाः पथ्या नद्यस्तद्भूतपाथसः ॥ २१ ॥
गङ्गाशतद्रुशरयूयमुनाद्या गुणोत्तमाः ।
ईषत्पित्तकराः स्वच्छाः पुण्या वातकफापहाः ॥ २२ ॥
यामुनं किंचिदलघु पाथः किमपि वातलम् ।
अथ मलयजनदीजले गुणागुणाः—
मलयाचलजा नद्यो लघ्व्यः शीघ्रवहा हिताः ॥ २३ ॥
कृतमालाताम्रपर्णीप्रमुखा विमलोदकाः ।
स्थिरास्तदुद्भवा एव कुर्वन्ति श्लीपदापचीः ॥ २४ ॥
शोफपादशिरःकण्ठगलरोगार्बुदक्रिमीन् ।
अथ सह्यजनदीगुणागुणाः—
सह्यशैलभवा नद्यो वेणीगोदावरीमुखाः ॥ २५ ॥
कुर्वन्ति प्रायशः कुष्ठमीषद्वातकफापहाः[1] ।
अथ विन्ध्यजनदीगुणागुणाः—
विन्ध्यजाः सरितः क्षिप्रा रेवाद्याः पाण्डुकुष्ठदाः ॥ २६ ॥

१ ग. °फापहाः ।

बलप्रदा रक्तपित्तजठरानाहशूलदाः।

अथ पारियात्रजनदीगुणागुणाः—

पारियात्रोद्भवा नद्यो देशकालविशेषतः॥ २६॥
सात्म्यासात्म्यविशेषाच्च कुर्वन्ति च गुणागुणान्।

अथ तडागोद्भूतनदीगुणागुणाः—

पथ्यास्तडागजा नद्यस्त्रिदोषघ्न्यो बलावहाः॥ २८॥
तुष्टिपुष्टिप्रभामेधाकर्त्र्यो नेत्रगदापहाः।

अथ कन्दरोद्भूतनदीगुणागुणाः—

दरीजाः कुष्ठजङ्घादिश्लीपदश्लेष्मरोगदाः।
गुर्व्यो बलवतां पथ्या बलदा गलगण्डदाः॥ २९॥

अथ मरूद्भूतनदीगुणागुणाः—

मरुजाः सरितो बल्या वह्निपौरुषकान्तिदाः।
ईषत्कफकरा लघ्व्यो मधुरा वातपित्तहाः॥ ३०॥

अथ पूर्वदक्षिणपश्चिमसमुद्रगाणां सरितां गुणागुणाः—

पूर्वसागरगा नद्यो मन्दगा गुरुपाथसः।
कफकण्डूप्रमेहार्शःप्रदाः पित्तास्रबुद्धिदाः॥ ३१॥
दक्षिणोदधिगा नद्यो वातश्लेष्मबलप्रदाः।
पित्तास्रमदमूर्छाघ्न्यो मधुरास्तुत्तिदाः पराः॥ ३२॥
पश्चिमोदधिगा नद्यो गोमतीनर्मदादयः।
पथ्या वातास्रपित्तघ्न्यो बल्याः कण्डूकफावहाः॥ ३३॥

अथ कूपवारिगुणागुणाः—

भूमौ खातोऽल्पविस्तारो गाम्भीर्येणाधिको भृशम्।
इष्टकादिनिबद्धश्च स कूप इति कीर्त्यते॥ ३४॥
कौपं श्लेष्महरं क्षारं पित्तलं दीपनं लघु।
पानीयं तु तदक्षारं बलकारि त्रिदोषनुत्॥ ३५॥

---

१ ग. °छकण्टाद्यश्लिश्ली°।

अथ सारसाम्बुगुणागुणाः—

नद्याः शैलवराद्वाऽपि स्रुतमेकत्र संस्थितम् ।
कुमुदाम्भोजसंछन्नं वारि सारसमुच्यते ॥ ३६ ॥
सारसं मधुरं बल्यं तृष्णाघ्नं तु वरं लघु ।
ईषत्कफप्रदं पित्तसमीरशमनं परम् ॥ ३७ ॥

अथ तडागजलगुणागुणाः—

प्रशस्तभूमिभागस्थं नैकसंवत्सरे स्थितम् ।
मुनिभिः कीलितं तोयं तडागमिति कीर्त्यते ॥ ३८ ॥
ताडागं वातलं स्वादु तुवरं कटुपाकि च ।
कफघ्नं वह्निजननं मतिकान्तिप्रदं परम् ॥ ३९ ॥

अथ वापीजलगुणागुणाः—

पाषाणैरिष्टिकाभिर्वा बद्धास्या खातकूपवत् ।
वापी सा खलु विज्ञेया कृतसोपानपद्धतिः ॥ ४० ॥
वाप्यं पित्तकरं क्षारं कटु वातकफापहम् ।

अथ निर्झरजलम्—

शैलसानुस्रवद्वारिप्रवाहो निर्झरो मतः ॥ ४१ ॥
स तु प्रस्रवणश्चापि तज्जलं नैर्झरं मतम् ।
नैर्झरं लेखनं हृद्यं कफघ्नं दीपनं लघु ॥ ४२ ॥

अथौद्भिदं जलम्—

विदार्य भूमिं निम्नां यन्महत्या धारया स्रवेत् ।
तत्तोयमौद्भिदं नाम प्राक्तना भिषजो जगुः ॥
औद्भिदं लघु पित्तघ्नमविदाह्यग्निवर्धनम् ॥ ४३ ॥

अथ चौण्ड्यजलम्—

अश्मादिभिरबद्धो यः सतीर्थो वापिकाकृतिः ।
खातश्चौण्डिरिति ख्यातस्तदम्भश्चौण्ड्यमीड्यते ॥ ४४ ॥
चौण्ड्यमग्निप्रदं रूक्षं स्वादु श्लेष्मकरं न च ।

---

१ ग. °रुशोपित° । २ क. °निनमति° । ३ ग. °तसुण्ड° ।

अथ केदारजलम्—

केदारं क्षेत्रमित्युक्तं कैदारं तज्जलं मतम् ॥ ४५ ॥
कैदारं स्वादुभिष्यन्दि विपाके गुरु दोषलम् ॥

अथ पल्वलजलम्—

अल्पं सरः पल्वलं स्यात्तज्जलं पल्लं मतम् ॥ ४६ ॥
पाल्वलं तद्बुद्धिष्टं विशेषात्सर्वदोषकृत् ।

अथ चन्द्रकान्तजलम्—

चन्द्रकान्तजलं रूक्षं लघु पित्तविषास्रजित् ॥ ४७ ॥
ग्लानिमूर्छावमिभ्रान्तिमेदोदाहहरं परम् ।

अथ हंसोदकम्—

नूतने स्थापिते कुम्भे दिव्यं वा भौममम्बु वा ॥ ४८ ॥
दिवा दिवाकरकरैर्निशाकरकरैर्निशि ।
जुष्टं हंसोदकं तच्च स्निग्धं दोषत्रयापहम् ॥ ४९ ॥
अनभिष्यन्दि निर्दोषमान्तरिक्षजलोपमम् ।
बल्यं रसायनं नेत्र्यं शीतं लघु सुधासमम् ॥ ५० ॥

अथ ऋतुविशेषे जलविशेषगुणाः—

वर्षासु दिव्यं पानीयमौद्भिदं वा प्रशस्यते ।
शरदि स्वच्छमखिलमगस्त्योदयतो हितम् ॥ ५१ ॥
सरस्तडागयोः पथ्यं हेमन्ते शिशिरेऽपि च ।
वसन्तग्रीष्मयोः कौपं वाप्यं नैर्झरमम्बु वा ॥ ५२ ॥

अथ वृद्धसुश्रुतमतम्—

पौषे वारि सरोजातं माघे मासि तडागजम् ।
फाल्गुने कूपसंभूतं चैत्रे चौण्ड्यं हितं मतम् ॥ ५३ ॥
वैशाखे नैर्झरं नीरं ज्येष्ठे शस्तं तदौद्भिदम् ।
आषाढे शस्यते कौपं श्रावणे दिव्यमेव च ॥ ५४ ॥
भाद्रे कौपं पयः शस्तमाश्विने चौण्ड्यमेव च ।
कार्तिके मार्गशीर्षे च तोयमात्रं प्रशस्यते ॥ ५५ ॥

अथाऽऽनूपजाङ्गलसाधारणजलगुणाः—

देशः प्रचुरपानीयो बहुवृक्षसमाकुलः ।
बहुवातकफव्याधिरनूप इति कीर्त्यते ॥ ५६ ॥
स्वल्पोदकः स्वल्पवृक्षो बहुपित्तासृगामयः ।
कथ्यते जाङ्गलो देशस्ताभ्यां साधारणः परः ॥ ५७ ॥
आनूपं दोषकृद्वारि प्रायोऽभिष्यन्दि निन्दितम् ।
जाङ्गलं हन्ति सकलान्दोषानग्निप्रदीपनम् ॥ ५८ ॥
साधारणं हिमं स्वादु तृष्णाघ्नं तोपकृल्लघु ॥ ५९ ॥

अथ निन्द्यजलम्—

कलुषं छन्नमम्भोजपर्णनीलीतृणावृतम् ।
लूतादितन्तुविण्मूत्रविषसंश्लेषदूषितम् ॥ ६० ॥
दुष्टगन्धमसंसृष्टं सूर्याचन्द्रमसोः करैः ।
व्यापन्नमिति जानीयात्सर्वदोषप्रकोपकृत् ॥
तोयं तद्वर्जयेत्सर्वं यच्चानृतुसमुद्भवम् ॥ ६१ ॥

अथ व्यापन्नजलसंस्काराः—

व्यापन्नमपि पानीयं क्वथितं चार्कतापितम् ।
तप्तायःपिण्डसिकताग्रावभिर्वा सुसाधितम् ॥ ६२ ॥
कर्पूरजातिपुन्नागपाटलादिसुवासितम् ।
स्वच्छं कतकमण्याद्यैः शीतं दोषापहं भवेत् ॥ ६३ ॥

अथ जलग्रहणविधिः—

भौमानामम्भसां प्रायो ग्रहणं प्रातरिष्यते ।
शीतत्वं निर्मलत्वं च यतस्तेषां परो गुणः ॥ ६४ ॥
अरुणांशुसमाश्लिष्टमुपर्याहृत्य शैवलम् ।
दूरीकृत्योपरितनं भागमन्तर्जलं हरेत् ॥ ६५ ॥
कर्पूरागरुकस्तूरीपाटलैलादिवासिते ।
नूतने मृन्मये कुम्भे तत्पूतं स्थापयेद्बुधः ॥ ६६ ॥
छायासु शीतले देशे कृमिकीटविवर्जिते ।
तदम्बु सर्वदोषघ्नं बलशुक्ररुचिप्रदम् ॥ ६७ ॥

अथ जलपानविधिः—

पानीयं न तु पानीयं पानीयेऽन्यप्रदेशजे ।
अजीर्णे क्वथितं चाऽऽमे पक्के जीर्णे तु नेतरत् ॥ ६८ ॥

शीते विधिरयं तप्ते त्वजीर्णे शिशिरं त्यजेत् ।
पानीयं प्राणिनां प्राणा विश्वमेतद्धि तन्मयम् ॥ ६९ ॥
अतोऽत्यन्ततया सूज्ञैर्न क्वचिद्वारि वार्यते ।
आस्यशोषाङ्गसादाद्या मृत्युर्वा तदलाभतः ॥ ७० ॥
न हि तोयाद्विना वृत्तिः स्वस्थस्य व्याधितस्य वा ।
केवलं सौषधं पक्वमाममुष्णं हितं च तत् ॥ ७१ ॥
समीक्ष्य मात्रया युक्तममृतं विषमन्यथा ।
अजीर्णे भेषजं वारि जीर्णे वारि बलप्रदम् ॥
भोजने चामृतं वारि रात्रौ वारि विषोपमम् ॥ ७२ ॥
अत्यम्बुपानान्न विपच्यतेऽन्नं निरम्बुपानाच्च स एव दोषः ॥
तस्मान्नरो वह्निविवर्धनार्थं मुहुर्मुहुर्वारि पिबेदभूरि ॥ ७३ ॥
ग्रीष्मे शरदि पातव्यं स्वेच्छया सलिलं नरैः ।
अन्यदा स्वल्पमेवैतद्वातश्लेष्मभयात्पिबेत् ॥ ७४ ॥
अतियोगेन सलिलं तृष्यतोऽपि प्रयोजितम् ।
प्रयाति श्लेष्मपित्तत्वं ज्वरितस्य विशेषतः ॥ ७५ ॥

अथ भोजने जलपानविधिः—

आदिमध्यावसानेषु भोजने पयसा युते ।
कार्श्यं साम्यं तथा स्थौल्यमिति स्युः क्रमशो गुणाः ॥ ७६ ॥
आदौ द्रवं समश्नीयात्तत्राम्बु न पिबेद्बहु ।
मध्ये तु कठिने भक्ष्ये यथेच्छं शस्यते जलम् ॥ ७७ ॥
तथा च भोजनस्यान्ते पीतमम्बु बलप्रदम् ।
द्रवप्रधानभुक्तान्ते किंतु तन्मात्रया पिबेत् ॥ ७८ ॥

अथ रात्रिशेषे पीतजलस्य गुणाः—

कासश्वासातिसारज्वरजघनकटीपृष्ठकोष्ठामया ये
मूत्राघातोदरार्शःश्वयथुगलशिरःकर्णनासामया ये ।
ये चान्ये वातपित्तक्षतजकफभवा व्याधयः सन्ति जन्तो-
स्तांस्तानभ्यासयोगादपनयति पयः पीतमन्ते निशायाः ॥ ७९ ॥

उष्णवारिलक्षणगुणाः—

यत्क्वाथ्यमानं निर्वेगं निष्फेनं निर्मलं भवेत् ।
अर्धावशिष्टं भवति तदुष्णोदकमुच्यते ॥ ८० ॥

---

१ क. °भुक्तस्य किं° । २ ग. °जठर°° । ३ क. °भयेषु । ये ।

कफमेदोनिलामघ्नं पाचनं बस्तिशोधनम् ।
कासश्वासज्वरहरं पथ्यमुष्णोदकं सदा ॥ ८१ ॥
तत्पादहीनं वातघ्नमर्धहीनं तु पित्तनुत् ।
त्रिपादहीनं श्लेष्मघ्नं पाचनं लघु दीपनम् ॥ ८२ ॥

अथ ऋतुविशेषे जलक्वाथनियमः—

शारदं चार्धपादोनं पादहीनं तु हैमनम् ।
शिशिरे च वसन्ते च ग्रीष्मे चार्धावशेषितम् ॥ ८३ ॥
विपरीत ऋतौ तद्वत्प्रावृष्ये चाष्टभागिकम् ।

अथ रात्रिपीतोष्णोदकगुणाः—

भिनत्ति श्लेष्मसंघातं मारुतं चापकर्षति ॥ ८४ ॥
अजीर्णं जरयत्याशु पीतमुष्णोदकं निशि ।

अथ शीतलकरणविधिः—

धारापातेन विष्टम्भि दुर्जरं पवनाहतम् ॥ ८५ ॥
शृतशीतं त्रिदोषघ्नं बाह्यान्तर्भावशीतलम् ।

अथ निषिद्धमुष्णोदकम्—

दिवा शृतं तु यत्तोयं रात्रौ तद्गुरुतां व्रजेत् ॥ ८६ ॥
रात्रौ शृतं दिवा तत्तु गुरुत्वमधिगच्छति ।
तच्च पर्युषितं निन्द्यमम्लीभूतं त्रिदोषकृत् ॥ ८७ ॥

अथोष्णोदकप्रयोगः—

शीतं तत्तिमिरे कोष्ठे गलरोगे[1] नवज्वरे ।
ग्रहणीपीनसाध्मानहिक्कागुल्मेषु विद्रधौ ८८ ॥
कासे मेहेऽरुचौ श्वासे पाण्डौ वातामयेषु च ।
पार्श्वशूले स्नेहपीते सद्यः शुद्धौ च शस्यते ॥ ८९ ॥

अथोष्णोदकनिषेधः—

मूर्छापित्तोष्मदाहेषु विषरोगे मदात्यये ।
भ्रमक्लमपरीतेषु मार्गक्लान्ते वमीषु च ॥ ९० ॥
ऊर्ध्वगे रक्तपित्ते च शीतमम्भः प्रशस्यते ।

अथोष्णवारिमन्दाचरणम्—

अरोचके प्रतिश्याये प्रसेके श्वयथौ क्षये ॥ ९१ ॥

१ क. गे ज्वरे गरे । २ ग. दौ न शी° । ३ क. तथा ।

मन्दाग्नावुदरे कुष्ठे ज्वरे नेत्रामये तथा ।
व्रणे च मधुमेहे च पानीयं मन्दमाचरेत् ॥ १२ ॥

अथ नालिकेरपानीयगुणाः—

स्निग्धं स्वादु हिमं हृद्यं दीपनं बस्तिशोधनम् ।
वृष्यं पित्तपिपासाघ्नं नालिकेरोदकं लघु ।
तदेव जीर्णं विष्टम्भि गुरु पित्तकरं मतम् ॥ १३ ॥

इति योगतरङ्गिण्यां जलगुणागुणककथनं नाम
विंशस्तरङ्गः ॥ २० ॥

---

अथैकविंशस्तरङ्गः ।

---

अथ दुग्धम्—

गव्यं माहिषमाजं च कारभं स्त्रैणमाविकम् ।
ऐभमैकशफं चेति दुग्धमष्टविधं मतम् ॥ १ ॥

तत्र सामान्यक्षीरगुणागुणाः—

दुग्धं बलकरं शीतं मधुरं वातपित्तजित् ।
स्निग्धं रसायनं मेध्यं जीवनं धातुवर्धनम् ॥ २ ॥
चेतोरक्तगदश्वासक्षयार्शोभ्रमनुद्गुरु ।
बालवृद्धकृशादीनां स्त्रीसक्तानां प्रशस्यते ॥ ३ ॥
प्रायः प्राणभृतां सात्म्यं विशेषाद्वजसे हितम् ।

अथ गोदुग्धगुणागुणाः—

गोक्षीरं मधुरं शीतं गुरु स्निग्धं रसायनम् ॥ ४ ॥
बृंहणं स्तन्यकृद्बल्यं जीवनं वातपित्तनुत् ।

अथ गोवर्णभेददुग्धगुणागुणाः—

कृष्णगव्यं वरं क्षीरं वातपित्तकफप्रणुत् ॥ ५ ॥
पीताया वातपित्तघ्नं रक्ताया वातहृत्परम् ।
चित्रायास्तद्वदाख्यातं श्वेतायाः श्लेष्मलं गुरु ॥ ६ ॥

---

१ क. °गव्याव° ।

अथ बालवत्साविवत्सानां दुग्धम् ।

आमासं बालवत्सा स्यात्तस्याः क्षीरं त्रिदोषकृत् ।
तद्वत्तन्मृतवत्साया: सुरभेः समुदीरितम् ॥ ७ ॥

अथ पिण्याकाद्यशनजदुग्धम् ।

पिण्याकाद्यशनाज्जातं क्षीरं गुरु कफप्रदम् ।
निद्रारेतोबलस्थौल्यवह्निमान्द्यकरं हिमम् ॥ ८ ॥

अथ माहिषम् ।

माहिषं मधुरं गव्यात्स्निग्धं गुरु बलप्रदम् ।
निद्राशुक्रकरं शीतमभिष्यन्द्यग्निमान्द्यकृत् ॥ ९ ॥

अथाजाजम् ।

आजं गव्यगुणं ग्राहि विशेषाद्दीपनं लघु ।
हन्ति क्षयार्शोतीसारत्रिदोषास्रभ्रमज्वरान् ॥ १० ॥
अजानामल्पकायत्वात्कटुतिक्तनिषेवणात् ।
अल्पाम्बुपानाद्व्यायामात्सर्वव्याधिहरं पयः ॥ ११ ॥

अथाऽऽविकम् ।

आविकं मधुरं स्निग्धं केशप्रमश्मरिनाशनम् ।
अहृद्यं प्रीणनं चोष्णं शुक्रपित्तकफप्रदम् ॥ १२ ॥
गुरु कासेऽनिलोद्भूते केवले चानिले वरम् ।

अथौष्ट्रम् ।

औष्ट्रं स्वादु पयो रूक्षं लवणं लघु दीपनम् ॥ १३ ॥
कृमिकुष्ठकफानाहशोफोदरहरं परम् ।

अथ हस्तिनीदुग्धम् ।

हस्तिन्या दुर्जरं दुग्धं वातश्लेष्मकरं गुरु ॥ १४ ॥
मधुरं पित्तकृद्बल्यं शीतं श्रमवतां हितम् ।

अथाऽऽश्वम् ।

आश्वमुष्णं पयो रूक्षं बल्यं श्वासानिलापहम् ॥ १५ ॥
अम्लं कटु लघु स्वादु सर्वमैकशफं तथा ।

१ ग. °ई सर°। २ ग. °म्लं पटु ।

अथ नार्याः—

नार्या लघु पयः शीतं दीपनं वातपित्तजित् ॥ १६ ॥
नेत्रशूलाभिघातघ्नं नस्याश्चोतनयोर्हितम् ।

अथ धारोष्णधाराशीतगुणाः—

धारोष्णं गोपयो बल्यं लघु शीतं सुधासमम् ॥ १७ ॥
त्रिदोषघ्नुद्दीपनं तद्धाराशीतं त्रिदोषकृत् ।
धारोष्णं शस्यते गव्यं धाराशीतं तु माहिषम् ॥ १८ ॥
शृतोष्णमाविकं पथ्यं शृतशीतमजापयः ।

अथापक्वदुग्धम् ।

आमं क्षीरमभिष्यन्दि गुरु श्लेष्मामवर्धनम् ॥ १९ ॥
तदपथ्यं भवेत्सर्वं गव्यमाहिषवर्जितम् ।

अथ क्वथितदुग्धम् ।

शृतोष्णं कफवातघ्नं शृतशीतं तु पित्तनुत् ॥ २० ॥
अर्धावृकं क्षीरशिष्टमामाल्लघुतरं हितम् ।
जलेन रहितं दुग्धं क्वथितं स्याद्यथा यथा ॥ २१ ॥
तथा तथा गुरु स्निग्धं वृष्यं बलविवर्धनम् ।

अथ शर्करासहितदुग्धम् ।

शर्करासहितं क्षीरं कफकृत्पवनापहम् ॥ २२ ॥
सितासितोपलायुक्तं शुक्लं दोषनाशनम् ।
सगुडं मूत्रकृच्छ्रघ्नं पित्तश्लेष्मकरं तथा ॥ २३ ॥

अथ रात्रिक्षीरगुणाः—

रात्रिक्षीरं न सेवेत यदि सेवेत न स्वपेत् ।
यदि स्वपेद्भरस्थायुस्तस्मात्पथ्यं दिवा पयः ॥ २४ ॥
रात्रौ चन्द्रगुणाधिक्याद्व्यायामपरिवर्जनात् ।
प्राभातिकं पयः प्रायो विष्टम्भि गुरु दोषलम् ॥ २५ ॥

अथ संध्याकालीनं पयः—

दिवाकरकराघाताद्व्यायामानिलसेवनात् ।
प्रादोषं श्रमनुद्बल्यं चक्षुष्यं वातपित्तनुत् ॥ २६ ॥

अथ रात्रिपीतदुग्धगुणाः—

विदाहीन्यन्नपानानि दिवा भुक्तानि यानि च ।
तद्विदाहप्रशान्त्यर्थं रात्रौ दुग्धं प्रशस्यते ॥ २७ ॥

अथ निषिद्धदुग्धम्—

विवर्णं विरसं चाम्लं दुर्गन्धि ग्रथितं पयः ।
वर्जयेदम्ललवणयुक्तं कुष्ठादिदोषकृत् ॥ २८ ॥

अथाधिकारविशेषे गुणविशेषः—

क्षीणानले कृशे पुंसि बाले वृद्धे रतिप्रिये ।
मतं हिततमं यस्मात्सद्यः शुक्रकरं पयः ॥ २९ ॥
जीर्णज्वरे मूत्रकृच्छ्रे रक्तपित्ते गदात्यये ।
कासे श्वासे प्रशंसन्ति गव्यं क्षीरं भिषग्वराः ॥ ३० ॥

अथ बष्कयण्या दुग्धगुणाः—

बष्कयण्यास्त्रिदोषघ्नं तर्पणं बलकृत्पयः ।
प्रसवान्मासाद्बष्कयण्यौ गौमहिष्यौ परं स्मृते ॥ ३१ ॥
अजामेष्यौ तृतीयात्तु स्त्रीतुरङ्ग्यौ तथाऽष्टमात् ।

अथ मथितदुग्धगुणाः—

क्षीरं गव्यमथाऽऽजं वा कोष्णं दण्डाहतं भवेत् ॥ ३२ ॥
वृष्यं लघु ज्वरहरं वातपित्तकफापहम् ।

अथ तत्फेनगुणाः—

गोदुग्धप्रभवं किंवा छागीदुग्धसमुद्भवम् ॥ ३३ ॥
तयोः फेनं त्रिदोषघ्नं रोचनं बलवर्धनम् ।
वह्निवृद्धिकरं पथ्यं सद्यस्तृप्तिकरं लघु ॥ ३४ ॥
अतिक्षीणातिसाराग्निमान्द्ये जीर्णेऽतिशस्यते ।

अथ संतानिकागुणाः—

संतानिका गुरुः स्निग्धा वृष्या पित्तास्रवातनुत् ॥ ३५ ॥
तर्पणी बृंहणी शीता बलासबलशुक्रदा ।

अथ पीयूषादिगुणलक्षणानि—

पीयूषं मोरटश्चापि कूर्चिका दधितक्रयोः ॥ ३६ ॥

किलाटः क्षीरशाकश्च तक्रपिण्डश्च पुष्टिदाः ।
गुरवः श्लेष्मला वृष्या हृद्या वाताग्निनाशनाः ॥ ३७ ॥
दीप्ताग्नीनामनिद्राणां व्यवाये चातिपूजिताः ।
क्षीरं तत्कालसूताया घनं पीयूषमुच्यते ॥ ३८ ॥
संवत्सरात्परं क्षीरमप्रसन्नं तु मोरटः ।
नष्टदुग्धभवं मस्तु मोरटं जैयटोऽब्रवीत् ॥ ३९ ॥
पक्वं दध्ना समं क्षीरं विज्ञेया दधिकूर्चिका ।
तक्रेण तक्रकूर्चिः स्यात्तयोः पिण्डः किलाटकः ॥ ४० ॥
पाकं विना स एव स्यात्क्षीरशाकः सशर्करः ।
तक्रनष्टं सतक्रं यद्दुग्धं बद्धं सुवाससा ।
द्रवभागपरित्यक्तं तक्रपिण्डः स कथ्यते ॥ ४१ ॥
इति योगतरङ्गिण्यां दुग्धगुणागुणकथनं नामैकविंशस्तरङ्गः ॥ २१ ॥

---

अथ द्वाविंशस्तरङ्गः ।

---

## अथ सामान्यदधिगुणागुणाः—

दध्युष्णं दीपनं स्निग्धं कषायानुरसं गुरु ।
पाकेऽम्लं ग्राहि पित्तास्रशोफमेदःकफप्रदम् ॥ १ ॥
मूत्रकृच्छ्रे प्रतिश्याये शीतगे विषमज्वरे ।
अतीसारेऽरुचौ कार्श्ये शस्यते बलशुक्रकृत् ॥ २ ॥

## अथ दधिभेदाः—

आदौ मन्दं ततः स्वादु स्वाद्वम्लं च ततः परम् ।
अम्लं चतुर्थमत्यम्लं पञ्चमं दधि पञ्चधा ॥ ३ ॥
मन्दं दुग्धवदव्यक्तरसं किंचिद्घनं मतम् ।
मन्दं स्यात्सृष्टविण्मूत्रं दोषत्रयविदाहकृत् ॥ ४ ॥
यत्सम्यग्घनतां यातं व्यक्तस्वादुरसं भवेत् ।
अव्यक्ताम्लरसं तत्तु स्वादु तज्ज्ञैरुदीरितम् ॥ ५ ॥

---

१ ग. °दे । वत्सरात्परं । २ क. °ष्टं जेज्जटोऽ° । ३ क. °स्यात्सुर्वि° ।

स्वादु स्यादत्यभिष्यन्दि वृष्यं मेदःकफावहम् ।
वातघ्नं मधुरं पाके रक्तपित्तप्रसादनम् ॥ ६ ॥
( * प्राभातिकं तु मधुरं वातपित्तनिबर्हणम् । )
स्वाद्वम्लं साम्लमधुरं कषायानुरसं भवेत् ॥ ७ ॥
स्वाद्वम्लस्य गुणा ज्ञेयाः सामान्यदधिवज्जनैः ।
यत्तिरोहति माधुर्यं व्यक्ताम्लत्वं तदम्लकम् ॥ ८ ॥
अम्लं तु दीपनं रक्तपित्तश्लेष्मविवर्धनम् ।
तदत्यम्लं दन्तरोमहर्षकण्ठादिदाहकृत् ॥
अत्यम्लं दीपनं रक्तपित्तदुष्टिकरं परम् ॥ ९ ॥

अथ गोदधिगुणाः—

गव्यं दध्युत्तमं बल्यं पाके स्वादु रुचिप्रदम् ।
पवित्रं दीपनं स्निग्धं पुष्टिकृत्पवनापहम् ॥
उक्तं दध्नामशेषाणां मध्ये गव्यं गुणाधिकम् ॥ १० ॥

अथ माहिषम्—

माहिषं दधि सुस्निग्धं श्लेष्मलं वातपित्तनुत् ।
स्वादुपाकमभिष्यन्दि वृष्यं गुर्वस्रदूषणम् ॥ ११ ॥

अथाऽऽजम्—

आजं दध्युत्तमं ग्राहि लघु दोषत्रयापहम् ।
शस्यते श्वासकासार्शःक्षयकार्श्येषु दीपनम् ॥ १२ ॥

अथ पक्वदुग्धदधिगुणाः—

शृतक्षीरभवं रुच्यं दधि स्निग्धं गुणाधिकम् ।
पित्तानिलापहं सर्वधात्वग्निबलवर्धनम् ॥ १३ ॥

अथ निःसारदुग्धदधिगुणाः—

असारं दधि संग्राहि कषायं वातलं लघु ।
विष्टम्भि दीपनं रुच्यं ग्रहणीरोगनाशनम् ॥ १४ ॥

अथ बद्धस्य दध्नो गुणागुणाः—

बद्धं च गालितं स्निग्धं वातघ्नं श्लेष्मलं गुरु ।
बलपुष्टिकरं रुच्यं मधुरं नाति पित्तलम् ॥ १५ ॥

---

* धनुश्चिह्नान्तर्गतमिदमर्धं ग. पुस्तकस्थम् ।

१ ग. "कषाय" ।

अथ शर्करादधिगुणाः—

सशर्करं दधि श्रेष्ठं तृष्णापित्तास्रदाहजित् ।

अथ सगुडदधिगुणाः—

सगुडं वातनुद्वृष्यं बृंहणं तर्पणं गुरु ॥ १६ ॥

अथ दधिभक्षणे कालादिनियमः—

न रात्रौ दधि सेवेत न चाप्यघृतशर्करम् ।
नामुद्गसूपं नाक्षौद्रं नोष्णैर्नाऽऽमलकैर्विना ॥ १७ ॥
शस्यते दधि नो रात्रौ शस्तं चाम्बुघृतान्वितम् ।
रक्तपित्तकफोत्थेषु विकारेषु हितं न तत् ॥ १८ ॥

अथ ऋतुविशेषे दधिगुणागुणाः—

हेमन्ते शिशिरे चैव वर्षासु दधि शस्यते ।
शरद्ग्रीष्मवसन्तेषु प्रायशस्तद्धि गर्हितम् ॥ १९ ॥

अथ दधिभक्षणविधित्यागे दोषाः—

ज्वरासृक्पित्तवीसर्पकुष्ठपाण्ड्वामयभ्रमान् ।
प्राप्नुयात्कामलां चोग्रां विधिं हित्वा दधिप्रियः ॥ २० ॥

अथ सरगुणाः—

दध्नस्तूपरिभागो यो घनः स्नेहसमन्वितः ।
लोके सर इति ख्यातो दध्नो मण्डस्तु मस्त्विति ॥ २१ ॥
सरः स्वादुर्गुरुर्वृष्यो वातवह्निप्रणाशनः ।
बस्तेर्विधमनश्चाम्लपित्तश्लेष्मविवर्धनः ॥ २२ ॥

अथ मस्तु—

मस्तु क्लमहरं बल्यं लघु भक्ताभिलाषकृत् ।
स्रोतोविशोधनं भेदि कफतृष्णानिलापहम् ॥
अवृष्यं प्रीणनं शीघ्रं भिनत्ति मलसंग्रहम् ॥ २३ ॥

इति योगतरङ्गिण्यां दधिगुणकथनं नाम द्वाविंशस्तरङ्गः ॥ २२ ॥

---

१ क. विशोधन° ।

अथ त्रयोविंशस्तरङ्गः ।

## अथ सामान्यतक्रगुणाः—

तक्रं ग्राहि कषायाम्लं मधुरं दीपनं लघु ।
वीर्योष्णं बलदं वृष्यं प्रीणनं वातनाशनम् ॥ १ ॥
विनिहन्ति गरच्छर्दिप्रसेकविषमज्वरान् ।
पाण्डुमेहग्रहण्यर्शोमूत्रग्रहभगंदरान् ॥ २ ॥
मेदो गुल्ममतीसारं शूलप्लीहोदरारुचीः ।
श्वित्रकुष्ठघृतव्यापत्कोष्ठ[1]शोफतृषाक्रिमीन् ॥ ३ ॥
यान्युक्तानि दधीनीह तेषां तक्रं तु तद्गुणम् ।

## अथ तक्रभेदाः

तक्रं तु घोलमथितोदश्वित्तक्रप्रभेदतः ॥ ४ ॥
सुश्रुताद्यैर्मुनिश्रेष्ठैश्चतुर्धा परिकीर्तितम् ।

## अथ तल्लक्षणानि—

ससरं निर्जलं घोलं मथितं त्वसरोदकम् ॥ ५ ॥
तक्रं पादजलं प्रोक्तमुदश्विच्चार्धवारिकम् ।
दिवोदासप्रभृतयस्तक्रमर्धजलं जगुः ॥ ६ ॥
पादतोयं विनिगदन्त्युदश्विदपि ते तथा ।

## अथ तद्गुणाः—

वातपित्तहरं घोलं मथितं कफपित्तनुत् ॥ ७ ॥
तक्रं त्रिदोषशमनमुदश्वित्कफदं स्मृतम् ।

## अथ मन्दादितक्रगुणाः—

मन्दजातं भवेत्तक्रं रूक्षाभिष्यन्दि दुर्जरम् ॥ ८ ॥
तक्रं तु मधुरं सर्वं श्लेष्मलं वातपित्तनुत् ।
अम्लं वातहरं तत्तु रक्तपित्तप्रकोपनम् ॥ ९ ॥

## अथ तन्वादिगुणाः—

तनु सान्द्रं सान्द्रतरं गुरु विद्याद्यथोत्तरम् ।
समुद्धृतघृतं तक्रं पथ्यं लघु विशेषतः ॥ १० ॥

१ ग. °पत्कुष्ठ° ।

स्तोकोद्धृतघृतं तक्रं गुरु वृष्यं कफप्रदम् ।
अनुद्धृतघृतं सान्द्रं गुरु पुष्टिकफप्रदम् ॥ ११ ॥

अथ दोषविशेषे संयोगविशेषः—

वातेऽम्लं सैन्धवोपेतं स्वादु पित्ते सशर्करम् ।
पिबेत्तक्रं कफे रूक्षं व्योषक्षारसमन्वितम् ॥ १२ ॥
मूत्रकृच्छ्रे तु सगुडं पाण्डुरोगे सचित्रकम् ।
हिङ्गुजीरयुतं घोलं सैन्धवेनावधूलितम् ॥ १३ ॥
तद्भवेद्रतिवातघ्नमर्शोतीसारनाशनम् ।
गुरुष्यं पुष्टिदं बल्यं बस्तिशूलविनाशनम् ॥ १४ ॥

अथाऽऽमतक्रगुणाः—

तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति च ।
पीनसश्वासकासादौ पक्वमेव विशिष्यते ॥ १५ ॥

अथ कालादिभेदे गुणभेदः—

शीतकालेऽग्निमान्द्ये च कफवातामयेषु च ।
अरुचौ स्रोतसां रोधे तक्रं स्यादमृतोपमम् ॥ १६ ॥

अथ तक्रनिषेधः—

नैव तक्रं क्षते दद्यान्नोष्णकाले न दुर्बले ।
न मूर्छाभ्रमदाहेषु न रोगे रक्तपित्तजे ॥ १७ ॥

अथ तक्रसेवनगुणाः—

न तक्रसेवी व्यथते कदाचिन्न तक्रदग्धाः प्रभवन्ति रोगाः ।
यथा सुराणाममृतं सुखाय तथा नराणां भुवि तक्रमाहुः ॥ १८ ॥

अथाच्छाच्छम्—

तण्डुलाम्बुसमं तक्रं तदच्छाच्छाभिधं मतम् ।
साजाजीहिङ्गुलवणमरिचं सर्वदोषनुत् ॥ १९ ॥
भोजनान्ते वरं प्रोक्तं भूरिभोजनपाचनम् ।
मुखवैशद्यरुचिकृदाज्याज्यविकृतिप्रणुत् ॥ २० ॥

---

१ क. वार्षे गु° । २ क. °तं प्रधाने त° ।

तृप्तिकृद्दलकृत्पथ्यं सर्वकालामयेषु च ।
विना क्षयं विना पाण्डुं विना कासं विना व्रणम् ।
अनम्लमेतत्स्वपि चेत्पथ्यमेव न संशयः ॥ २१ ॥

इति योगतरङ्गिण्यां द्रव्यरसविपाकादिवर्णनं नाम त्रयोविंशस्तरङ्गः ॥ २३ ॥

---

अथ चतुर्विंशस्तरङ्गः ।

---

## अथ नवनीतम्—

### गव्यं नवनीतम्—

नवनीतं हिमं गव्यं वृष्यं वर्णबलाग्निकृत् ।
संग्राहि वातपी * नार्शःक्षयार्शोर्दितकासजित् ॥ १ ॥
तद्धितं बालके वृद्धे विशेषादमृतं शिशोः ।

इति गव्यं नवनीतम् ।

### अथ माहिषम्—

माहिषं नवनीतं तु वातश्लेष्मकरं गुरु ॥ २ ॥
दाहपित्तश्रमहरं मेदःशुक्रविवर्धनम् ।

### अथाऽऽजम्—

आजं त्रिदोषशमनं नवनीतं तयोर्वरम् ॥ ३ ॥
क्षीरोत्थं तदतिस्निग्धं चक्षुष्यं रक्तपित्तनुत् ।
वृष्यं बलकरं ग्राहि मधुरं शीतलं परम् ॥ ४ ॥

### अथ सद्योनवनीतम्—

नवनीतं तु सद्यस्कं स्वादु ग्राहि हिमं लघु ।
मेध्यं किंचित्कषायाम्लमीषत्तक्रांशसंक्रमात् ॥ ५ ॥

### अथ चिरंतननवनीतम्—

सक्षारकटुकाम्लत्वाच्छर्द्यर्शःकुष्ठकोपनम् ।
श्लेष्मलं गुरु मेदस्यं नवनीतं चिरंतनम् ॥ ६ ॥

इति योगतरङ्गिण्यां नवनीतगुणागुणकथनं नाम
चतुर्विंशस्तरङ्गः ॥ २४ ॥

---

* क. पुस्तके वातपित्तघ्नं इति पाठान्तरम् ।

---

१ क. हितं नृ° ।

अथ पञ्चविंशस्तरङ्गः ।

---

## अथ घृतम्—

### तत्र सामान्यघृतगुणाः—

घृतं रसायनं स्वादु चक्षुष्यं गुरु दीपनम् ।
शीतवीर्यं विषालक्ष्मीपापचिन्तानिलापहम् ॥ १ ॥
अल्पाभिष्यन्दि कान्त्योजस्तेजोलावण्यबुद्धिकृत् ।
उदावर्तज्वरोन्मादशूलानाहव्रणाञ्जयेत् ॥ २ ॥
स्निग्धं कफप्रदं रक्षःक्षयवीसर्परक्तजित् ।

### अथ गव्यघृतगुणाः—

गव्यं घृतं घृतश्रेष्ठं नेत्र्यं बल्यं च दीपनम् ॥ ३ ॥
विपाके मधुरं शीतं वातपित्तविषापहम् ।
सर्वेषु गुणकृद्गव्यमाविकं त्वतिनिन्दितम् ॥ ४ ॥

### अथाऽऽजम्—

आजं गव्यादपि वरं त्रिदोषक्षयनुद्घृतम् ।
अतिचक्षुष्यमाग्नेयं घृतं कटुरसायनम् ॥ ५ ॥

### अथ माहिषम्—

माहिषं तु घृतं स्वादु पित्तरक्तानिलापहम् ।
शीतलं श्लेष्मलं वृष्यं गुरु पाके च तन्मतम् ॥ ६ ॥

### अथ दुग्धभवं घृतम्—

घृतं क्षीरभवं ग्राहि शीतलं नेत्ररोगजित् ।
निहन्ति पित्तदाहास्रमूर्छाभ्रममदानिलान् ॥ ७ ॥

### अथ हैयङ्गवीनघृतम्—

ह्योगोदोहोद्भवं सर्पिर्मवेद्धैयङ्गवीनकम् ।
हैयङ्गवीनं चक्षुष्यं दीपनं रोचनं परम् ॥ ८ ॥
बल्यं वृष्यं निगदितं जीर्णज्वरविनाशकृत् ।

### अथ पुराणघृतम्—

सर्पिः पुराणं विज्ञेयं दशवर्षस्थितं तु यत् ॥ ९ ॥

---

१ ग. °र्थं ... ° । २ ग. रक्षगव्यं घृतं श्रे° ।

सर्पिः पुरातनं श्रेष्ठं त्रिदोषतिमिरापहम् ।
मूर्छाकुष्ठविषोन्मादग्रहापस्मारनाशनम् ॥ १० ॥
दशसंवत्सरादूर्ध्वमाज्यमुक्तं रसायनम् ।
शतवर्षस्थितं यत्तु कुम्भसर्पिस्तदुच्यते ॥ ११ ॥
रक्षोघ्नं कुम्भसर्पिः स्यात्परतस्तु महाघृतम् ।
पेयं महाघृतं भूतैः सर्वतोऽपि गुणाधिकम् ॥ १२ ॥
यथा यथा जरां याति गुणवत्स्यात्तथा तथा ।
भक्षणात्कोपरोगघ्नमञ्जनान्नेत्ररोगजित् ॥ १३ ॥
शिरोभ्यङ्गादूर्ध्वजत्रुरोगघ्नं तत्पुरातनम् ।

अथ नूतनम्—

योजयेन्नवमेवाऽऽज्यं भोजने तर्पणे श्रमे ॥ १४ ॥
बलक्षये पाण्डुरोगे कामलानेत्ररोगयोः ।

अथ घृतमण्डः—

घृतमण्डो घृतस्योर्ध्वभागः स्यात्सुसृतस्य यः ॥ १५ ॥
घृतमण्डोऽपि घृतवद्विशेषात्सारको लघुः ।
दीपनः सर्वपीठाद्यस्तीक्ष्णः सूक्ष्मश्च पित्तलः ॥ १६ ॥

अथ रोगविशेषे घृतविशेषः—

राजयक्ष्मणि बाले च वृद्धे श्लेष्मामये गदे ।
रोगे सामे विसूच्यां च विबन्धे च मदात्यये ॥ १७ ॥
ज्वरे मन्दानले मेहे न सर्पिर्बहु मन्यते ।

इति योगतरङ्गिण्यां घृतगुणागुणकथनं नाम
षड्विंशस्तरङ्गः ॥ २६ ॥

---

अथ सप्तविंशस्तरङ्गः ।

---

अथ तैलम्—

सर्ववातहरं तैलं विशेषात्तिलसंभवम् ।
तैलं संयोगसंस्कारात्सर्वरोगहरं स्मृतम् ॥ १ ॥

---

१ क. °काष्ठी° । २ ग. शुक्लः ।

## अथ तिलतैलम्–

तिलतैलं गुरु स्निग्धं बलवर्णकरं सरम् ।
वृष्यं विकाशि विशदं मधुरं रसपाकयोः ॥ २ ॥
सूक्ष्मं कषायानुरसं तिक्तं श्लेष्मानिलापहम् ।
संस्पर्शवीर्ययोरुष्णं बृंहणं रक्तपित्तकृत् ॥ ३ ॥
लेखनं बद्धविण्मूत्रगर्भाशयविशोधनम् ।
दीपनं मतिदं मेध्यं व्यवायि व्रणमेहनुत् ॥ ४ ॥
श्रोत्रयोनिशिरःशूलनाशि लाघवकारकम् ।
त्वच्यं केश्यं च चक्षुष्यमभ्यङ्गे भोजनेऽन्यथा ॥ ५ ॥
छिन्नभिन्नच्युतोत्पिष्टमथितक्षतपिच्चिते ।
भग्नस्फुटितविद्धाग्निदग्धविश्लिष्टदारिते ॥ ६ ॥
तथाऽभिहतनिर्भुग्नमृगव्याघ्रादिविक्षते ।
बस्तौ पानेऽन्नसंस्कारे नस्यकर्णाक्षिपूरणे ॥ ७ ॥
सेकाभ्यङ्गावगाहेषु तिलतैलं प्रशस्यते ।
रूक्षादिदुष्टः पवनः स्रोतः संकोचयेद्यदा ॥ ८ ॥
रसासम्यग्वहः कार्श्यं कुर्याद्रक्ताद्यवर्धयन् ।
तेषु प्रवेष्टुं रसतासौम्यस्निग्धत्वमार्दवैः ॥ ९ ॥
तैलं क्षमं रसं नेतुं कृशानां तेन बृंहणम् ।
व्यवायि सूक्ष्मतीक्ष्णोष्णसरत्वैर्मेदसः क्षयम् ॥ १० ॥
शनैः प्रकुरुते तैलं तेन स्यात्स्थौल्यनाशनम् ।
श्लक्ष्णं पुरीषं बध्नाति स्खलितं तत्प्रवर्तयेत् ॥ ११ ॥
ग्राहकं सारकं चापि तेन तैलमुदीरितम् ।
घृतमब्दात्परं पक्वं हीनवीर्यं प्रजायते ॥ १२ ॥
तैलं पक्वमपक्वं वा चिरस्थायि गुणाधिकम् ।

## अथातसीतैलम्–

अतसीतैलमाग्नेयं स्निग्धोष्णं कफपित्तकृत् ॥ १३ ॥
कटुपाकमचक्षुष्यं बल्यं वातहरं गुरु ।
केशापथ्यं रक्तपित्तप्रकोपकृदरोचनम् ॥ १४ ॥

---

१ ग. °द स्पेर्यव° । २ क. °वीर्ये रुक्षोष्णं । ३ क. °सनुत् । ४ क. °नाशना° । ५ क. °रे तस्य । ६ क. °ध्नेनम् । ते° । ७ ग. °ष्टे परवाशोदमाक्षि° । ८ ग. °वायदुष्टं ती° । ९ क. °भ्यात्वत्वं मे° ।

अथ तुवरीतैलम्—

तीक्ष्णोष्णं तुवरीतैलं लघु ग्राहि कफास्रजित् ।
वह्निकृद्विषहृत्कण्डूकुष्ठकोठक्रिमिव्रणुत् ॥ १५ ॥
मेदोदोषापहं चापि व्रणशोथहरं परम् ।

अथ सार्षपम्—

सार्षपं दीपनं तैलं कटुपाकरसं लघु ॥ १६ ॥
लेखनं स्पर्शवीर्योष्णं तीक्ष्णं पित्तास्रदूषणम् ।
कफमेदोनिलार्शोघ्नं शिरःकर्णामयापहम् ॥ १७ ॥
कण्डूकोठक्रिमिश्वासकुष्ठदुष्टव्रणव्रणुत् ।

अथ राजिकातैलम्—

सार्षपेण समं तैलं राजिकायाश्च कृच्छ्रजित् ॥ १८ ॥
कण्डूपामापहं वह्निक्रिमिनुत्तीक्ष्णकं पुनः ।

अथैरण्डतैलगुणः—

एरण्डतैलं मधुरमुष्णं दीपनशोधनम् ॥ १९ ॥
वृष्यं * रुच्यं वयस्थापि मेधाकान्तिबलप्रदम् ।
कषायानुरसं सूक्ष्मं योनिशुक्रविशोधनम् ॥ २० ॥
हन्ति वातोदरानाहगुल्माष्ठीलाकटिग्रहान् ।
वातशोणितशूलादिव्रध्नशोफामविद्रधीन् ॥ २१ ॥

अथ कुसुम्भबीजतैलम्—

कुसुम्भतैलं कटुकमचक्षुष्यं बलप्रदम् ।
केवलानिलनुत्तीक्ष्णं विदाह्युष्णं त्रिदोषकृत् ॥ २२ ॥
अपथ्यं शिरसः कासश्वासहृल्लासकारकम् ।

अथ निम्बतैलम्—

निम्बतैलं जयेत्कुष्ठव्रणमेहमहाक्रिमीन् ॥ २३ ॥

अथ पालाशमाधूकपाटलातैलानि—

तैलं पालाशमाधूकपाटलाफलसंभवम् ।
कषायं मधुरं दाहपित्तश्लेष्मगदान्हरेत् ॥ २४ ॥

---

* क. पुस्तके रुच्यमिति पाठान्तरम् ।

---

१ ग. 'मिश्रिकृ' । २ ग. 'च्छ्रकृत् ।

अथाऽऽम्रतैलम्—

आम्रतैलं मनाक्तिक्तं मधुरं नातिपित्तकृत् ।
कफवातहरं रूक्षं सुगन्धि विशदं परम् ॥
अन्यत्स्वयोनिवत्तैलं गुणैर्ज्ञेयं मनीषिभिः ॥ २५ ॥

इति योगतरङ्गिण्यां तैलगुणागुणकथनं नाम षड्विंश-
स्तरङ्गः ॥ २६ ॥

---

अथ सप्तविंशस्तरङ्गः ।

---

अथ मद्यम्—

दीपनं रोचनं मद्यं तीक्ष्णोष्णं धातुपुष्टिदम् ।
सुस्वादु तिक्तकटुकमम्लपाकरसं सरम् ॥ १ ॥
सकषायं स्वरारोग्यप्रतिभावर्णकृल्लघु ।
नष्टनिद्रातिनिद्रेभ्यो हितं पित्तास्रदूषणम् ॥ २ ॥
कृशस्थूलहितं रूक्षं सूक्ष्मं स्रोतोविशोधनम् ।
वातश्लेष्महरं युक्त्या पीतं विषवदन्यथा ॥ ३ ॥
द्राक्षेक्षुमधुखर्जूरं शालेः पिष्टं यवस्य वा ।
पञ्च मद्याकराः श्रेष्ठास्तेषां द्राक्षा विशिष्यते ॥ ४ ॥
गुरुत्वदोषजननं नवं जीर्णमतोऽन्यथा ।
पेयं नोष्णोपचारेण न विरिक्तक्षुधातुरैः ॥ ५ ॥
नात्यर्थतीक्ष्णमृद्वल्पसंभारं कलुषं न च ।
गुल्मोदरार्शोग्रहणीशोषहृत्स्नेहनी गुरुः ॥ ६ ॥
सुराऽनिलघ्नी मेदोसृक्स्तन्यमूत्रसुखावहा ।
तद्गुणा वारुणी हृद्या लघुस्तीक्ष्णा निहन्ति च ॥ ७ ॥
शूलकासवमिश्वासविबन्धाध्मानपीनसान् ।
नातितीव्रमदा लघ्वी पथ्या बैभीतकी सुरा ॥ ८ ॥
व्रणे पाण्डुवामये कुष्ठे न चात्यर्थं विरुध्यते ।
विष्टम्भिनी यवसुरा गुर्वी रूक्षा त्रिदोषला ॥ ९ ॥
यथाद्रव्यगुणोऽरिष्टः सर्वमद्यगुणाधिकः ।
ग्रहणीपाण्डुकुष्ठार्शःशोफशोषोदरज्वरान् ॥ १० ॥
हन्ति व्रणक्रिमिप्लीह्नः कषायकटुवातलः ।
मार्द्वीकं लेखनं हृद्यं नात्युष्णं मधुरं सरम् ॥ ११ ॥

अल्पपित्तानिलं पाण्डुमेहार्शःकृमिनाशनम् ।
अस्मादल्पान्तरगुणं खार्जूरं वातलं गुरु ॥ १२ ॥
शार्करः सुरभिः स्वादुर्हृद्यो नातिमदो लघुः ।
सृष्टमूत्रशकृद्वातो गौडस्तर्पणदीपनः ॥ १३ ॥
वातपित्तकरः सीधुः स्नेहः श्लेष्मविकारहा ।
मेदःशोफोदरार्शोघ्नस्तत्र पक्वरसो वरः ॥ १४ ॥
छेदी मध्वासवस्तीक्ष्णो मेहपीनसकासजित् ।
रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनम् ॥ १५ ॥
भृशोष्णरूक्षतीक्ष्णाम्लं हृद्यं रुचिकरं सरम् ।
दीपनं शिशिरस्पर्शं पाण्डुदृक्कृमिनाशनम् ॥ १६ ॥
गुडेक्षुमद्यमार्द्वीकशुक्तं लघु यथोत्तरम् ।
कन्दमूलफलाद्यं च तद्वद्विन्द्यात्तदासुतम् ॥ १७ ॥
शाण्डाकी चाऽऽसुतं चान्यत्कालाम्लं रोचनं लघु ।
धान्याम्लं भेदि तीक्ष्णोष्णं पित्तकृत्स्पर्शशीतलम् ॥ १८ ॥
श्रमक्लमहरं रुच्यं दीपनं बस्तिशूलनुत् ।
शस्तमास्थापने हृद्यं लघु वातकफापहम् ॥ १९ ॥

इति योगतरङ्गिण्यां मद्यगुणागुणकथनं नाम सप्तविंशस्तरङ्गः ॥ २७ ॥

---

अथाष्टाविंशस्तरङ्गः ।

---

## अथेक्षुगुणाः ।

### सामान्येक्षुगुणाः—

इक्षुः स्वादुर्गुरुः शीतो वृष्यः स्निग्धो बलप्रदः ।
जीवनो वातपित्तघ्नः कुर्यान्मूत्रकफक्रिमीन् ॥ १ ॥
स मूले मधुरोऽत्यर्थं मध्ये मधुर एव तु ।
अग्रे ग्रन्थिषु विज्ञेयो लवणो रसतस्तथा ॥ २ ॥

इति सामान्येक्षुगुणाः ।

### अथेक्षुभेदाः

#### तत्र रक्तेक्षुः—

लोहितेक्षुर्गुरुः शीतो दाहपित्तास्रकृच्छ्रजित् ।

अथ पौण्ड्रकः—

पौण्ड्रकः शीतलः स्निग्धो बृंहणः कफकृत्सरः ॥ ३ ॥

अथ कृष्णेक्षुः

कृष्णेक्षुस्तद्गुणैर्ज्ञेया विशेषाद्दाहनाशनः ।

अथ वंशेक्षुः—

वंशेक्षुरीषत्कफकृद्वृष्यः स्निग्धो विबन्धनुत् ॥ ४ ॥

अथ शतपर्वा—

शतपर्वा किंचिदुष्णः पित्तवातश्रमप्रणुत् ।

अथ कान्तारः—

कान्तारो वातलः शीतो दाहपित्तास्रनाशनः ॥ ५ ॥

अथ तापसेक्षुः—

तापसेक्षुरसो वृष्यश्चक्षुष्यो वातकृद्गुरुः ।

अथ काष्ठेक्षुः—

काष्ठेक्षुर्विषपित्तास्रनाशनो वातलो हिमः ॥ ६ ॥

अथ कोशकारः—

कोशकारो गुरुः शीतो रक्तपित्तक्षयापहः ।

अथ सूचीपत्रादयः—

सूचीपत्रो नीलपर्वा नैपालो[1] दीर्घपत्रकः ॥ ७ ॥
वातलाः कफपित्तघ्नाः सकषाया विदाहिनः ।

अथ दन्तनिष्पीडितेक्षुगुणाः—

दन्तनिष्पडनात्तेषां रसः पित्तास्रनाशनः ॥ ८ ॥
शर्करासमवीर्यः स्यादविदाही कफप्रदः ।

अथ यन्त्रनिष्पीडितरसगुणाः—

यन्त्रनिष्पीडनादिक्षो रसो ग्राही गुरुस्तथा ॥ ९ ॥
विदाही वातपित्तघ्नः स्वादुः श्लेष्मविवर्धनः ।

अथावर्तितरसगुणाः—

रसः शृतो गुरुर्वृष्यः श्लेष्मलो वातपित्तनुत् ॥ १० ॥
लवणानुरसः स्वादुर्दाही श्रमविनाशनः ।

---

१ ग. नैपाली ।

अथ सितोपला—

सितोपला सरा गुर्वी हिमा पित्तानिलापहा ॥ ११ ॥
वृष्या श्रमक्लमच्छर्दिदाहमूर्च्छामदापहा ।

अथ खण्डः—

रूच्यः पुष्टिमदः स्निग्धो मोहदाहमदभ्रमान् ॥ १२ ॥
निहन्ति खण्डः शिशिरो गुरुः पित्तसमीरजित् ।

अथ श्वेतशर्करा—

सिता हिमा सरा वृष्या बलतृप्तिकरी लघुः ॥ १३ ॥
तृट्क्लमश्रमपित्तास्रदाहमोहानिलापहा ।

अथ मधुशर्करा—

माधवी शर्करा रूक्षा कफपित्तास्रजिद्गुरुः ॥ १४ ॥

अथ यवासशर्करा—

यवासशर्करा शीता वातला कफपित्तजित् ।

अथ पुष्पवासितशर्करा—

रक्तपित्तहरी हृद्या सुमनोवासिता सिता ॥ १५ ॥
वृष्या गुरुर्हिमा भ्रान्तिवमितृड्दाहमोहजित् ।

अथ फाणितम्—

फाणितं गुर्वभिष्यन्दि दोषलं मूत्रशोधनम् ॥ १६ ॥

अथ गुडः—

गुडः क्षारो गुरुः स्वादुर्वातपित्ताग्निकृत्सरः ।
बल्यः क्रमिश्लेष्मकरो मूत्ररक्तविशोधनः ॥ १७ ॥
जीर्णो हृद्यो लघुः पथ्यो नाभिष्यन्द्यग्निपुष्टिकृत् ।
इक्षोर्विकारा विमला यथा कुर्युर्गुणास्तथा ॥ १८ ॥
तृड्दाहमूर्छापित्तास्रविषमोहहरा हिमाः ।
गुरवो मधुरा बल्या स्निग्धा वातहराः सराः ॥ १९ ॥

इति योगतरङ्गिण्यामिक्षुशर्करादिगुणकथनं नामाष्टाविंशस्तरङ्गः ॥ २८ ॥

---

१ क. अथातिवे° । २ ग. °ग्निपुष्टिकृत् । व° । ३ क. ° गुणादश° ।

अथैकोनत्रिंशस्तरङ्गः।

---

अथ मधु—

माक्षिकं भ्रामरं क्षौद्रं पौतिकं छात्रमेव च।
आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः॥ १॥

मधुवर्णमाह—

माक्षिकं तैलसंकाशं भ्रामरं स्फटिकोज्ज्वलम्।
क्षौद्रं कपिशवर्णं स्यात्पौतिकं घृतसंनिभम्॥ २॥
छात्रं तत्पीतकपिलमार्घ्यं श्वेतपिशङ्गकम्।
औद्दालं पीतकपिलं नानावर्णं तु दालकम्॥ ३॥

तत्र सामान्यमधुगुणाः—

मधु शीतं लघु स्वादु रूक्षं ग्राहि विलेखनम्।
चक्षुष्यं दीपनं स्वर्यं व्रणशोधनरोपणम्॥ ४॥
वर्ण्यं मेधाकरं वृष्यं विशदं रोचनं जयेत्।
कुष्ठार्शःकासपित्तास्रकफमेहक्लमक्रिमीन्॥ ५॥
मदतृष्णावमिश्वासहिक्कातीसारहृद्ग्रहान्।
दाहक्षतक्षयांस्तत्तु योगवाह्यल्पवातलम्॥ ६॥

अथ माक्षिकादीनां विशिष्टगुणाः—

क्षये माक्षिकमुद्दिष्टं भ्रामरं रक्तपित्तनुत्।
क्षौद्रं मेहहरं प्राहुर्मेधो पौतिकमुत्तमम्॥ ७॥
छात्रं सर्वत्र शस्तं स्यादार्घ्यं चक्षुष्यमुत्तमम्।
औद्दालकं कुष्ठहरं रुचिकृद्दालमीरितम्॥ ८॥
एते विशिष्टाः कथिता मधूनां मुनिभिर्गुणाः।

अथ मधूच्छिष्टगुणाः—

मदनं मृदुलं स्निग्धं भूतघ्नं व्रणरोपणम्।
भग्नसंधानकृद्वातकुष्ठवीसर्परक्तजित्॥ ९॥

इति योगतरङ्गिण्यां मधुगुणागुणकथनं नामैकोनत्रिंशस्तरङ्गः॥ २९॥

---

१ ग. °द्रं पैत्तिकं। २ ग. °स्यात्पैत्तिकं। ३ क. °कं तैलवं°। ४ ग. °र्घं वर्णशो°। ५ ग. °मे पैत्तिक°।

अथ मिश्रप्रकरणः ।

अथ शाल्यादि—

शालयो रक्तशाल्याद्या व्रीहयः षष्टिकादयः ।
मुद्गादि वैदलं प्राहुः कङ्ग्वादि तृणधान्यकम् ॥ १ ॥
यवादि शूकधान्यं स्यादित्याद्याः क्रमशः स्मृताः ।

अथ सामान्यशालिगुणाः—

शालयो मधुराः स्निग्धा बल्या बद्धाल्पवर्चसः ॥ २ ॥
पित्तघ्नाः सानिलकफा मूत्रला ल(ल)घवो हिमाः ।

इति सामान्यशालिगुणाः ।

अथ रक्तशालिः—

रक्तशालिर्वरस्तेषां बल्यो वर्ण्यस्त्रिदोषजित् ॥ ३ ॥
चक्षुष्यो मूत्रलः स्वर्यः शुक्रलस्तृड्ज्वरापहः ।
विषव्रणहरः किंचित्तस्मादल्पगुणाः परे ॥ ४ ॥

अथ महाशालिः—

महाशालिर्वरैर्बल्यो रक्तशालिगुणैः समः ।

अथ षष्टिकाः—

षष्टिका मधुराः शीता लघवो बद्धवर्चसः ॥ ५ ॥
वातपित्तप्रशमनाः शालीनां च गुणैः समाः ।

अथ महाषष्टिकाः—

षष्टिकः प्रवरस्तेषां लघुः स्निग्धस्त्रिदोषजित् ॥ ६ ॥
पाके स्वादुर्मृदुर्ग्राही स्थैर्यकारी बलप्रदः ।
रक्तशालिगुणैस्तुल्यस्तस्मादल्पगुणाः परे ॥ ७ ॥

अथ कृष्णव्रीहिः—

कृष्णव्रीहिर्वरस्तेषां तस्मादल्पगुणाः परे ।

अथ दग्धभूजातशालयः—

शालयो दग्धभूजाता लघुरूक्षाः कफावहाः ॥ ८ ॥
बल्याश्च मधुरा वृष्या अतिपथ्या ह्यामये ।

---

१ ग. °लिः परं बल्यो । २ ग. °भ्रकृत् । ३ ग. °फापहाः ।

अथ सामान्यस्थलजशालिगुणाः—

स्थलजाः स्वादवः पित्तकफघ्ना वातवह्निदाः ॥ ९ ॥

अथ केदारजाः—

केदारा वातपित्तघ्ना गुरवः कफशुक्रलाः ।

अथ रोपिताः—

छिन्नरूढा हिमा रूक्षाः पित्तश्लेष्मनिबर्हणाः ॥ १० ॥
ईषद्वातकरा रुच्या विशेषाल्लघुपाकिनः ।

इति शालिः ।

अथ गोधूमगुणाः—

गोधूमो मधुरः शीतो वातपित्तहरो गुरुः ॥ ११ ॥
कफशुक्रप्रदो बल्यः स्निग्धसंधानकृत्सरः ।
एतस्मात्स्थूलगोधूमात्क्षुद्रो हीनतरो गुणैः ॥ १२ ॥

अथोम्बिका—

अर्धपक्वैर्वह्निभृष्टैरुम्बिका कथिता बुधैः ।
उम्बिका कफदा बल्या गुरुः पित्तानिलापहा ॥ १३ ॥
स्निग्धा विबन्धकृद्रक्तमूत्रकृच्छ्रहिता मता ।

अथ यवगुणाः—

यवः कषायो मधुरः शीतः पित्तकफास्रजित् ॥ १४ ॥
व्रणेषु तिलवत्पथ्यो रूक्षो मेधाग्निवर्धनः ।
लेखनो बद्धनिष्पन्दः स्वर्यो मेदस्तृपापहः ॥ १५ ॥
बहुवातमलस्थैर्यवर्णकारी च पिच्छिलः ।
अस्मादतियवः किंचिद्गुणैर्हीनतरो मतः ॥ १६ ॥
निःशूकोऽतियवः प्रोक्तो धवलाकृतिको महान् ।

अथ शिम्बीधान्यम्—

शिम्बी मुद्गश्चणो माषः सतीनः सकलायकः ॥ १७ ॥
मसूरवक्तमङ्कुल्यामकुलत्थिपुटादयः ।
वैदला मधुरा रूक्षाः कषायाः कटुपाकिनः ॥ १८ ॥

---

१ क. °वपित्तदाः । २ ग. °क्रदो व° । ३ ग. °च्या लघुः पि° । ४ क. °मनाद्वे° ।

वातलाः कफपित्तास्रमलमूत्रकरा हिमाः।
ऋते मुद्गमसूराभ्यामन्ये त्वाध्मानकारकाः ॥ १९ ॥

अथ शिम्बगुणाः—

धान्यानां कञ्चुकं शिम्बी बीजगुप्तिश्च सा भवेत्।
तद्युतानि तु धान्यानि शिम्बिधान्यानि लक्ष्यते ॥ २० ॥
शिम्ब्या विष्टम्भिनो मेहदृष्टिघ्ना वातपित्तलाः।
विशदा गुरवो हृद्या रूक्षाः कटुकपाकिनः ॥ २२ ॥
सितासितादिभेदेन बहुधा ते प्रकीर्तिताः।

अथ मुद्गः—

मुद्गो रूक्षो लघुर्ग्राही कफपित्तहरो हिमः ॥ २२ ॥
स्वादुरल्पानिलो नेत्र्यो वन्योऽप्येतद्गुणः स्मृतः।
मुद्गेषु प्रवरः श्यामो मुद्गाः स्वल्पगुणाः परे ॥ २३ ॥

अथाऽऽर्द्रीकृतमुद्गगुणाः—

स जलार्द्रीकृतः स्वादुः पथ्यः श्रमजुषां नृणाम्।
विशेषेण च पित्तघ्नस्तर्पणो बलकृद्गुरुः ॥ २४ ॥

अथ मुद्गशिम्बः—

शिम्ब आर्द्रो लघुः किंचिद्वातकृत्पित्तहृत्सरः।

अथ स्नेहसिद्धशिम्बार्द्रमुद्गगुणाः—

स्नेहसिद्धः स बलकृत्त्रिदोषघ्नो रुचिप्रदः ॥ २५ ॥

अथ माषः—

माषो गुरुः स्वादुपाकः स्निग्धो वृष्योऽनिलाप(प)हः।
गुदकीलार्दितश्वासपक्तिशूलान्विनाशयेत् ॥ २६ ॥

अथ राजमाषः—

राजमाषः स्वादुरूक्षः कषायस्तर्पणो गुरुः।
ग्राही वातकरस्तन्यबहुवर्चोरुचिप्रदः ॥ २७ ॥

अथ मकुष्ठः—

मकुष्ठो वातलो ग्राही कफपित्तहरो लघुः।
वह्निजिन्मधुरः पाके कृमिकृज्ज्वरनाशनः ॥ २८ ॥

---

१ क. °सकरप°।

अथ निष्पावः—

निष्पावोऽनिलपित्तास्रमूत्रस्तन्यकरः सरः ।
विदाह्युष्णो गुरुः शोफकफकृच्छुक्रनाशनः ॥ २९ ॥

अथाऽऽढकी—

आढकी तुवरी रूक्षा वातला कफपित्तजित् ।
किंचिदानाहजननी सस्नेहा तु त्रिदोषनुत् ॥ ३० ॥

अथ वर्तुलः—

वर्तुलः शीतलो ग्राही कफपित्तहरो लघुः ।
विपाके मधुरो रूक्षो हरेणुस्तद्गुणो मतः ॥ ३१ ॥

अथ कलायत्रिपुटगुणाः—

कलायः कफपित्तघ्नो ग्राही शीतोऽतिवातलः ।
त्रिपुटोऽपि गुणैरेवं तच्छाकं कफपित्तजित् ॥ ३२ ॥

अथ चणकः—

चणकः शीतलो रूक्षः पित्तरक्तकफापहः ।
लघुः कषायो विष्टम्भी वातलः पुंस्त्वनाशनः ॥ ३३ ॥
श्वेतोऽप्येवं गुणैर्ज्ञेयः किंचित्तस्माद्गुरुर्मतः ।
भृष्टो रुचिकरः पुष्टिप्रदश्छर्दिबलासजित् ॥ ३४ ॥
स जलार्द्रीकृतो रुच्यो वातश्लेष्मकरो हिमः ।
स शिम्बार्द्रो हिमः पित्तहरो वातकफप्रदः ॥ ३५ ॥
वृष्यो रुचिकरो बल्यो मेहकृच्छ्राश्मरीहरः ।
अर्धपक्वैश्च शिम्बैश्च होलाको वह्निभर्जितः ॥ ३६ ॥
होलाकोऽल्पानिलो मेदी कफकृत्पित्तनाशनः ।
बल्योऽतिरुचिकृत्पथ्यः श्रमभाजां नृणां गुरुः ॥ ३७ ॥

अथ मसूरः—

मसूरो मधुरः पाके संग्राही शीतलो लघुः ।
कफपित्तास्रजिद्रूक्षस्तच्छाकं लघु तिक्तकम् ॥ ३८ ॥

अथ कुलित्थः—

कुलित्थः कटुकः पाके कषायः * कफपित्तजित् ।

---

* अत्र पित्तरक्तकृदिति पाठो भावप्रकाशे वर्तते इति क. पुस्तके ।

---

१ ग. °फापहः । २ क. °रूक्षो वा° । ३ क. °कावातम° । ४ ग. °को मेदः क° । ५ क. °जिद्रूक्षो वातलो ज्वरनाशनः ।

लघुर्विदाही वीर्योष्णः श्वासकासकफानिलान् ॥ ३९ ॥
हन्ति हिक्काश्मरीशुक्रगदानाहान्सपीनसान् ।
स्वेदसंग्राहको गुल्ममेदःकृमिहरः सरः ॥ ४० ॥
वन्यो विशेषतः शीतो नेत्रामयविषापहः ।

अथ तिलाः—

तिलो ग्राही गुरुः स्वादुः स्निग्धोष्णः कफपित्तलः ॥ ४१ ॥
बल्यः केश्यो हिमस्पर्शो रुच्यो व्रणहितः परम् ।
वन्योऽल्पमूत्रकृद्वातनाशनोऽग्निमतिप्रदः ॥ ४२ ॥
कृष्णः श्रेष्ठतमस्तेषु शुक्लो मध्यमः सितः ।
अन्ये हीनतराः प्रोक्तास्ततो रक्तादयस्तिलाः ॥ ४३ ॥

अथ तुवरी—

तुवरी ग्राहिणी शीता लघुः कफविषास्रजित् ।

अथातसी—

अतसी शुक्रदृष्टिघ्नी स्निग्धोष्णा वातजिद्गुरुः ॥ ४४ ॥

अथ किरटा—

किरटा तद्वदुद्दिष्टा विशेषाद्विषनाशिनी ।

अथ सर्षपः—

सर्षपः कफवातघ्नस्तीक्ष्णोष्णो रक्तपित्तकृत् ॥ ४५ ॥
किंचिद्रूक्षोऽग्निदः कण्डूकुष्ठकोठक्रिमीन्क्षयेत् ।

अथ राजिका—

राजिका तद्गुणा ज्ञेया तीक्ष्णा तीव्रा विशेषतः ॥ ४६ ॥

अथ शणः—

शणो हिमो गुरुर्ग्राही तत्पुष्पं प्रदरास्रजित् ।

अथ तृणधान्यम्—

तत्र प्रियङ्गुगुणाः—

प्रियङ्गुः पित्तजिद्वृष्या भग्नसंधानकृद्गुरुः ॥ ४७ ॥

अथ श्यामाकः—

श्यामाकः शोषणः शीतो रूक्षः पित्तकफापहः ।

अथ कोद्रवः—

कोद्रवः शीतलो ग्राही विषपित्तकफान्क्षयेत् ॥ ४८ ॥

अथ नीवारः—

नीवारः शीतलो ग्राही पित्तघ्नः कफवातकृत्।

अथ यावनालः—

यावनालः स्वादुशीतो वातलः कफपित्तजित् ॥ ४९ ॥
रूक्षो लघुतरः शुष्को भृष्टोऽग्नौ पुष्कराभिधः।
पुष्करं मधुरं रुच्यं बलकृल्लघु शीतलम् ॥ ५० ॥
त्रिदोषशमनं क्षीणहितं शुक्रकरं परम्।
तल्लाजा लघवो रूक्षास्ततो न्यूनगुणा मताः ॥ ५१ ॥

अथ गवेधुका—

गवेधुका कटुः स्वाद्वी कार्श्यकृत्कफनाशिनी।

अथ नन्दीमुखीवेणुयवादि—

नन्दीमुखी वेणुयववरकोद्दालनर्तकाः ॥ ५२ ॥
नलो नाली मुकुन्दश्च तोदपर्णी मधूलिका।
तृणधान्यमिदं स्वादु कटुपाकि विलेखनम् ॥ ५३ ॥
रूक्षोष्णं बद्धविट्कं च वातपित्तकरं लघु।

अथ गुणहीनधान्यम्—

अपर्याप्तं व्याधिहतमनार्तवमभूमिजम् ॥ ५४ ॥
नवं जन्त्वादिभिर्जुष्टं धान्यं न गुणवन्मतम्।

अथ नूतनधान्यगुणाः—

धान्यं नवमभिष्यन्दि गुरु स्वादु कफप्रदम् ॥ ५५ ॥

अथ वर्षोषितधान्यगुणाः—

वर्षोषितं सर्वधान्यं गौरवं परिमुञ्चति।
न मुञ्चति च वीर्यं स्वं क्रमान्मुञ्चत्यतः परम् ॥ ५६ ॥
विदाहि गुरु विष्टम्भि विरूढं दृष्टिदूषणम्।

अथ विशिष्टनूतनान्नगुणागुणाः—

एतेषु यवगोधूमतिलमाषा नवा हिताः ॥
रूढाः पुराणा विरसा न तथा गुणकारिणः ॥ ५७ ॥
इति योगतरङ्गिण्यां शाल्यादिगुणागुणकथनं नाम त्रिंशत्तरङ्गः ॥ ३० ॥

---

१ ग. व्याधिह°।

अथैकत्रिंशत्तरङ्गः ।

---

## अथ फलानि—

### अथ द्राक्षा—

द्राक्षा पक्वा सरा शीता चक्षुष्या बृंहणी गुरुः ।
हन्ति तृष्णाज्वरश्वासवातपित्तास्रकामलाः ॥ १ ॥
कृच्छ्रास्रपित्तसंमोहदाहशोषमदात्ययान् ।
आमा स्वल्पगुणा गुर्वी सैवाम्ला रक्तपित्तकृत् ॥ २ ॥

### अथाऽऽम्रः—

आम्रो ग्राही प्रमेहार्शःकफपित्तव्रणास्रपेत् ।
तत्फलं बालमत्यम्लं रूक्षं दोषत्रयास्रकृत् ॥ ३ ॥
बद्धास्थि तालुगेवोक्तं वातहारि च पित्तलम् ।
पक्वं तु मधुरं वृष्यं स्निग्धं हृद्यं बलप्रदम् ॥ ४ ॥
गुरु वातहरं रुच्यं वर्ण्यं शीतमपित्तलम् ।
रसस्तस्य सरः स्निग्धो रोचनो बलवर्णकृत् ॥ ५ ॥
आम्रबीजं कषायं स्याच्छर्द्यतीसारनाशकृत् ।
ईषदम्लं च मधुरं तथा हृद्यदाहनुत् ॥ ६ ॥
आम्रावर्तस्तृषाच्छर्दिवातपित्तहरः सरः ।
रुच्यः सूर्यांशुभिः पाकाल्लघुश्च परिकीर्तितः ॥ ७ ॥

### अथ सामान्यजम्बूः—

जम्बूः संग्राहिणी रूक्षा कफपित्तव्रणास्रजित् ।

### अथ राजजम्बूफलम्—

राजजम्बूफलं स्वादु विष्टम्भि गुरु रोचनम् ॥ ८ ॥

### अथ लघुजम्बूः—

क्षुद्रजम्बूफलं तद्वद्विशेषाद्दाहनाशनम् ।

### अथ नारिकेरम्—

नारिकेरफलं शीतं दुर्जरं बस्तिशोधनम् ॥ ९ ॥

---

१ क. °तृषाताप° । २ क. °सजित् । ३ क. °दाहक° । ४ क. °हरो लघुः । ५° । ५ °ठं ग्राहि स्या° । ६ ग. °म्भिरो° ।

विष्टम्भि बृंहणं बल्यं वातपित्तास्रदाहजित् ।
तस्याश्मः शीतलं हृद्यं दीपनं शुक्रलं लघु ॥ १० ॥
तत्पादपशिरोमज्जा शुक्रलो वातपित्तजित् ।

अथ पिण्डखर्जूरीस्वल्पखर्जूरीफलम्—

खर्जूरिकाफलं शीतं स्वादु स्निग्धं क्षतास्रजित् ॥ ११ ॥
बल्यं हन्ति मरुत्पित्तमदमूर्छामदात्ययान् ।
तस्मादल्पगुणं ज्ञेयमन्यत्खर्जूरिकाफलम् ॥ १२ ॥
तन्मज्जा मूर्धजः शीतो वृष्यः पित्तास्रदाहजित् ।

अथ सलेमानी—

सलेमानी श्रमभ्रान्तिदाहमूर्छास्रपित्तजित् ॥ १३ ॥

अथ कदली—

कदली योनिदोषाश्मरक्तपित्तहरा हिमा ।
तत्कन्दः शीतलो बल्यः केश्यः पित्तकफास्रजित् ॥ १४ ॥
तत्फलं मधुरं शीतं विष्टम्भि बलकृद्गुरु ।
स्निग्धं पित्तास्रतृड्दाहक्षतक्षयसमीरजित् ॥ १५ ॥

अथ दाडिमम्—

दाडिमं दीपनं हृद्यं रोचनं नातिपित्तलम् ।
कषायानुरसं ग्राहि द्विधा स्वाद्वम्लभेदि तत् ॥ १६ ॥
तयोः स्वादु त्रिदोषघ्नमम्लं वातबलासहृत् ।
शुष्काम्लदाडिमीसारो हिमः पित्तसमीरकृत् ॥ १७ ॥

अथ बदरम्—

बदरं लघु संग्राहि रुच्यमुष्णं समीरजित् ।
कफपित्तकरं तद्वत्कोलं गुरु सरं मतम् ॥ १८ ॥
सौवीरं बदरं शीतं भेदनं गुरु शुक्रलम् ।
बृंहणं पित्तदाहास्रक्षयतृष्णानिलापहम् ॥ १९ ॥
कर्कन्धु मधुरं स्निग्धं गुरु पित्तानिलापहम् ।
शुष्कं भेद्यग्निकृत्सर्वं लघु तृष्णाक्लमास्रजित् ॥ २० ॥
मरुत्पित्तहरस्तस्य मज्जा वृष्यो बलप्रदः ।

---

१ क. °नं वातपि° ।

अथ क्षीरिणीफलम्—

क्षीरिवृक्षफलं शीतं स्निग्धं गुरु बलप्रदम् ॥ २१ ॥
तृष्णामूर्छामदभ्रान्तिक्षयदोषत्रयास्रजित् ।

अथ चारः—

चारः पित्तकफास्रघ्नस्तत्फलं मधुरं गुरु ॥ २२ ॥
स्निग्धं सरं मरुत्पित्तदाहतृष्णाक्षतापहम् ।
तन्मज्जा मधुरः स्निग्धः शुक्रलः पित्तवातजित् ॥ २३ ॥

अथ परूपकम्—

परूपकं कषायाम्लमामपित्तकरं लघु ।
पक्वं तु मधुरं पाके शीतं विष्टम्भि बृंहणम् ॥ २४ ॥
हृद्यं तृट्पित्तदाहास्रक्षतक्षयसमीरजित् ।

अथ तिन्दुकः—

तिन्दुको व्रणवातघ्नस्तत्सारः पित्तरोगजित् ॥ २५ ॥
आममस्य फलं ग्राहि शीतलं वातलं लघु ।
पक्वं पित्तप्रमेहास्रश्लेष्मघ्नं विशदं गुरु ॥ २६ ॥
विषतिन्दुकमप्येवं विशेषाद्ग्राहि शीतलम् ।

अथ किङ्किणी—

*किङ्किणी तुवरस्तिक्तः पित्तश्लेष्महरो हिमः ॥ २७ ॥
तत्फलं वातलं त्वामं पक्वं स्वादु त्रिदोषनुत् ।

अथाऽऽरुकम्—

आरुकं जारकं वातमेहार्शःकफनाशनम् ॥ २८ ॥

अथ मधूकः—

मधूकः कफवातघ्नः कषायो व्रणरोपणः ।
तत्पुष्पं मधुरं बल्यं शीतलं गुरु बृंहणम् ॥ २९ ॥
फलं शीतं गुरु स्वादु शुक्रलं वातपित्तजित् ।
अहृद्यं हन्ति तृष्णास्रदाहश्वासक्षतक्षयान् ॥ ३० ॥

---

* यद्यपि किङ्किणीशब्दस्य स्त्रीवाचकत्वात्तद्विशेषणान्यपि तथैवापेक्षितानि तथाऽपि शिष्टप्रयोगत्वाल्लिङ्गव्यत्ययविभेदेऽपीतिन्यायेन कथंचिद्गेयानि ।

अथ पनसम्—

पनसं शीतलं पक्वं स्निग्धं पित्तानिलापहम् ।
बल्यं शुक्रप्रदं हन्ति रक्तपित्तक्षतक्षयान् ॥ ३१ ॥
आमं तदेव विष्टम्भि वातलं तुवरं गुरु ।

अथ लकुचम्—

लकुचं गुरु विष्टम्भि स्वादूष्णं रक्तपित्तजित् ॥ ३२ ॥
श्लेष्मकारि समीरघ्नमम्लं शुक्राग्निनाशनम् ।

अथ तालः—

तालः शीतो मरुत्पित्तव्रणजिन्मदशुक्रकृत् ॥ ३३ ॥
तत्फलं शीतलं बल्यं स्निग्धं स्वादुरसं गुरु ।
विष्टम्भि वातपित्तास्रक्षयदाहक्षतापहम् ॥ ३४ ॥

अथ खर्बूजम्—

खर्बूजं मूत्रलं बल्यं कोष्ठशुद्धिकरं गुरु ।
स्निग्धं स्वादुतरं शीतं वृष्यं पित्तानिलापहम् ॥ ३५ ॥

अथ शिम्बितिकाफलम्—

फलं शिम्बितिकापूर्वं वातपित्तहरं गुरु ।
बृंहणं कफकृद्वृष्यं स्वादुपाकरसं हिमम् ॥ ३६ ॥

अथ महच्छिम्बितिकाफलम्—

अपरं सै(नै)व गुणवद्विशेषात्तुवरं हिमम् ।

अथामृतफलम्—

अमृतं गुरु वातघ्नं स्वाद्वम्लरुचि शुक्रकृत् ॥ ३७ ॥

अथ वातामम्—

वातामसुष्णं सुस्निग्धं वातघ्नबलशुक्रकृत् ।

अथ निकोचकमुकूलके—

निकोचकं गुरु स्निग्धं वृष्योष्णं स्वादु बृंहणम् ॥ ३८ ॥
रक्तप्रसाधनं बल्यं वातघ्नं कफपित्तकृत् ।
तद्वन्मुकूलकं ज्ञेयं विशेषाद्गुरु दुर्जरम् ॥ ३९ ॥

---

१ क. °क्रजित् । २ ग. °ग्धं बलशुक्रकरं गुरु ।

अथाऽऽलूकम्—

आलूकं रसतः शीतं स्वाद्वम्लं वातपित्तहृत् ।

अथाक्षीरम्—

अक्षीरं शीतलं स्वादु गुरु पित्तास्रवातजित् ॥ ४० ॥
तस्मादल्पगुणं ज्ञेयमक्षीरं लघु तद्गुणम् ।

अथाक्षोटम्—

अक्षोटं मधुरं बल्यं गुरूष्णं वातहृत्सरम् ॥ ४१ ॥

अथ शृङ्गाटम्—

शृङ्गाटं मधुरं रूक्षं गुरु ग्राहि हिमं तथा ।
शुक्रानिलश्लेष्मकरं शुष्कमार्द्रं विशेषतः ॥ ४२ ॥

अथ पालेवतमाणवके—

पालेवतं श्वेतपुष्पं तिन्दुकाभफलं मतम् ।
अन्यन्माणवकं ज्ञेयं महापालेवतं तथा ॥ ४३ ॥
पालेवतं हिमं स्वादु गुरूष्णं वह्निवातजित् ।
तद्वन्माणवकं हृद्यं तृष्णाघ्नं मिष्टमस्तकम् ॥ ४४ ॥

अथ तूतम्—

तूतं गुरु हिमं पक्वं स्वादु पित्तानिलापहम् ।

अथ गाङ्गेरुतोदने—

गाङ्गेरु रोचनं पक्वं गुरु वातास्रपित्तजित् ॥ ४५ ॥
तोदनं ग्राहि मधुरं वातपित्तहरं लघु ।

अथ तुवरकः—

कलायवत्फलैः पत्रैः केसराभः समुद्रजः ॥ ४६ ॥
वृक्षः समुद्रजो ज्ञेयो भल्लातकसमो गुणैः ।
तौवरं कफजित्पाके कटूष्णं व्रणमेहनुत् ॥ ४७ ॥

अथ बीजपूरः

बीजपूरफलं रुच्यं रसेऽम्लं दीपनं लघु ।
रक्तपित्तकरं ग्राहि जिह्वाहृच्छोधनं परम् ॥ ४८ ॥

---

१ क. °त्रैः । तुव° । २ ग. °रं कण्ठ्यं जि° ।

त्वक्तस्य तिक्ता गुर्व्युष्णा कृमिवातकफापहा ।
तन्मांसं बृंहणं शीतं गुरु पित्तसमीरजित् ॥ ४९ ॥
केसरो मधुरो ग्राही शूलगुल्मोदरापहः ।
बीजमुष्णं क्रिमिश्लेष्मवातजिद्गर्भदं गुरु ॥ ५० ॥
तत्पुष्पं शीतलं ग्राहि रक्तपित्तहरं लघु ।

अथ मधुकर्कटी—

मधुकर्कटिका शीता रक्तपित्तहरा गुरुः ॥ ५१ ॥

अथ नारङ्गम्—

नारङ्गमम्लमत्युष्णं रुच्यं वातहरं परम्[1] ।
स्वाद्वम्लमपरं हृद्यं दुर्जरं वातनाशनम् ॥ ५२ ॥

अथ जम्बीरम्—

जम्बीरमम्लं शूलघ्नं गुरूष्णं कफवातजित् ।
आस्यवैरस्यहृत्पीडावह्निमान्द्यकृमीञ्जयेत् ॥ ५३ ॥

अथाम्लवेतसम्—

अम्लवेतसमत्यम्लं भेदनं शतवेधि च ।
हृद्रोगशूलगुल्मघ्नं पित्तासृक्कफदूषणम् ॥ ५४ ॥

अथ साराम्लम्—

साराम्लमम्लं वातघ्नं गुरु पित्तकफप्रदम् ।

अथ निम्बूकम्—

निम्बूकमम्लं वातघ्नं पाचनं दीपनं लघु ॥ ५५ ॥
राजनिम्बूफलं स्वादुपाकं पित्तसमीरजित् ।
मिष्टनिम्बूफलं पित्तवातहृद्गुरु रोचनम् ॥ ५६ ॥
भ्रमतृड्दाहपित्तास्रच्छर्दिक्षयगरापहम् ।

अथ कर्मरङ्गम्—

कर्मरङ्गं हिमं ग्राहि स्वाद्वम्लं कफपित्तजित् ॥ ५७ ॥

अथाम्लिका—

अम्लिकाऽऽमा गुरुर्वातहरा पित्तकफास्रकृत् ।
पक्वा तद्वत्सरा रुच्या वह्निबस्तिविशुद्धिकृत् ॥ ५८ ॥

---

१ ग. धरम् । २ क. °म् । कटुवम्ल° । ३ ग. °मं लघु दीपनम् । हृ°

शुक्ता हृद्या श्रमभ्रान्तितृष्णाक्लमहरा लघुः ।

अथ वृक्षाम्लम्—

तिन्तिडीकं समीरघ्नमाममुष्णं परं गुरु ॥ ५९ ॥
तत्पक्वं लघु संग्राहि ग्रहणीकफवातजित् ।

अथ करमर्दम्—

करमर्दं गुरूष्णाम्लं रक्तपित्तकफप्रदम् ॥ ६० ॥
तत्पक्वं मधुरं रुच्यं लघु पित्तसमीरजित् ।
शुष्कं पक्ववदस्यामं पक्वमप्यार्द्रमामवत् ॥ ६१ ॥

अथ कपित्थम्—

कपित्थमामं संग्राहि लघु दोषत्रयापहम् ।
पक्वं गुरु तृषाहिक्काशमनं वातपित्तजित् ॥ ६२ ॥
स्वाद्वम्लं तुवरं कण्ठशोधनं ग्राहि दुर्जरम् ।

अथाऽऽम्रातकम्—

आम्रातमामं वातघ्नं गुरूष्णं रुचिकृत्सरम् ॥ ६३ ॥
पक्वं स्वादु हिमं वृष्यं मरुत्पित्तक्षतास्रजित् ।

अथ राजाम्रम्—

राजाम्रं मधुरं शीतं ग्राहि पित्तकफापहम् ॥ ६४ ॥

अथ क्रमुकम्—

पूगं गुरु हिमं रूक्षं कषायं कफपित्तजित् ।
मोहनं दीपनं रुच्यमास्यवैरस्यनाशनम् ॥ ६५ ॥
आर्द्रं तद्गुर्वभिष्यन्दि वह्निदृष्टिकरं सरम् ।
स्विन्नं त्रिदोषहृत्सर्वं तद्भेदांस्तद्वदादिशेत् ॥ ६६ ॥

अथ ताम्बूलम्—

ताम्बूलं विशदं रुच्यं तीक्ष्णोष्णं तुवरं सरम् ।
तिक्तं क्षारं मनोजन्यं रक्तपित्तकरं लघु ॥ ६७ ॥
बल्यं श्लेष्मास्यदौर्गन्ध्यमेहवातश्रमापहम् ।
फलतुल्यगुणं सर्वं मज्जानमपि चाऽऽदिशेत् ॥ ६८ ॥

---

१ ग. °ष्णं च रु° । २ ग. °त्तकफाप्र° ।

अथ त्याज्यफलम्—

फलं हिमाग्निदुर्वातव्यालकीटादिदूषितम् ।
अकालजातं नाशीपात्पाकातीतमभूमिजम् ।
आमं दोषकरं प्रायः फलं बैल्वं विनाऽखिलम् ॥ ६१ ॥

इति योगतरङ्गिण्यां द्राक्षादिदोषगुणागुणकथनं नामैकत्रिंशस्तरङ्गः ॥ ३१ ॥

---

अथ द्वात्रिंशस्तरङ्गः ।

---

अथ शाकानि—

पत्रं पुष्पं फलं कन्दं नालं भूस्वेदजं तथा ।
शाकं षड्विधमुद्दिष्टं गुरु विद्याद्यथोत्तरम् ॥ १ ॥

अथ सामान्यशाकम्—

प्रायः सर्वाणि शाकानि विष्टम्भीनि गुरूणि च ।
रूक्षाणि बहुवर्चांसि सृष्टविण्मारुतानि च ॥ २ ॥
सर्वं शाकमचक्षुष्यं मज्जीयेय(?)मवृष्यकम् ।
ऋते पटोलवास्तूककाकमाचीपुनर्नवाः ॥ ३ ॥
सर्वशाकेषु जीवन्ती श्रेष्ठा निन्द्यं तु सार्षपम् ।

अथ कूष्माण्डम्—

कूष्माण्डं बृंहणं शीतं गुरु पित्तास्रवातजित् ॥ ४ ॥
बालं पित्तापहं शीतं मध्यमं कफकारकम् ।
पक्वं नातिहिमं स्वादु सारकं दीपनं लघु ॥ ५ ॥
बस्तिशुद्धिकरं चेतोरोगदोषत्रयापहम् ।
कूष्माण्डनाडी मधुरा वाताश्मरिकफापहा ॥ ६ ॥
तन्मज्जा पित्तहृद्वृष्या मधुरा बस्तिशोधनी ।

अथ कालिङ्गम्—

कालिङ्गं ग्राहि दृक्पित्तशुक्रहृच्छीतलं गुरु ॥ ७ ॥
पक्वं तूष्णसरं क्षारं पित्तलं कफवातजित् ।

---

१ ग. °रि मृष्ट° ।

अथालाबु—

मिष्टं तुम्बीफलं वृष्यं कफपित्तहरं गुरु ॥ ७ ॥
कटुतुम्बी हिमा हृद्या पित्तकासविषापहा ।

अथ कर्कटी—

कर्कटी शीतला रूक्षा ग्राहिणी मधुरा गुरुः ॥ ९ ॥
रुच्या पित्तहरी साऽऽमा पक्वोष्णा वह्निपित्तकृत् ।

अथ त्रपुसम्—

त्रपुसं मूत्रलं शीतं रूक्षं पित्तास्रकृच्छ्रजित् ॥ १० ॥
तत्पक्वमुष्णमम्लं स्यात्पित्तलं कफवातजित् ।

अथ चिर्भटम्—

चिर्भटं मधुरं रूक्षं गुरु पित्तकफापहम् ॥ ११ ॥
शीतं विष्टम्भि संग्राहि कफघ्नोष्णं तु पित्तलम् ।
वृद्धत्तदेव वातास्रपित्तनुन्मधुराम्लकम् ॥ १२ ॥
पाचनं शूलविष्टम्भमूत्रकृच्छ्राश्मरीर्जयेत् ।

अथ वालुकम्—

वालुकं श्लेष्मलं स्वादु लघु मेदि च पित्तजित् ॥ १३ ॥
मधुराम्लरसं पित्तरक्तजित्पक्वमुत्तमम् ।

अथ शीर्णवृन्तम्—

शीर्णवृन्तं लघु स्वादु मेद्युष्णं वह्निपित्तकृत् ॥ १४ ॥

अथ कोशातकी—

कोशातकी लघुस्तिक्ता रूक्षाऽऽमाशयशोधनी ।
शोफपाण्डूदरप्लीहकुष्ठार्शःकफपित्तजित् ॥ १५ ॥
तत्फलं भेदनं शीतं लघु मेहविशेषजित् ।

अथ राजकोशातकी—

राजकोशातकी शीता ज्वरघ्नी कफवातला ॥ १६ ॥

महाकोशातकी—

महाकोशातकी स्निग्धा सरा पित्तानिलापहा ।

---

१ क. °वहकाव° । २ क. °विशोष° । ३ क. °रा पक्वानि° ।

अथ वृन्ताकम्—

वृन्ताकं स्वादु तीक्ष्णोष्णं कटुपाकमपित्तलम् ॥ १७ ॥
कफवातहरं हृद्यं दीपनं शुक्रलं लघु ।
ज्वरारोचककासघ्नं पक्वं तत्पित्तलं गुरु ॥ १८ ॥
अपरः श्वेतवृन्ताकस्तस्मान्न्यूनगुणो मतः ।
अर्शःसु पथ्यः कथितः सरः किंचिन्न पित्तलः ॥ १९ ॥

अथ बिम्बी—

बिम्बी वातमदा हन्ति रक्तपित्तास्रकामलाः ।
तत्फलं शीतलं स्वादु गुरु पित्तास्रदाहजित् ॥ २० ॥
स्तम्भनं लेखनं वातविबन्धाध्मानकारकम् ।

अथ कारवेल्लम्—

कारवेल्लं हिमं भेदि लघु तिक्तमवातलम् ॥ २१ ॥
पित्तास्रकामलापाण्डुकफमेहकृमीञ्जयेत् ।

अथ कर्कोटकम्—

तद्वत्कर्कोटकं कुष्ठबलासारुचिनाशनम् ॥ २२ ॥

अथ वन्ध्यकर्कोटकी—

वन्ध्यकर्कोटकी तिक्ता विषवीसर्पकासजित् ।

अथ डोडिका—

डोडिका कफपित्तार्शःकृमिगुल्मविषापहा ॥ २३ ॥

अथ पृथुशिम्बः—

कोलशिम्बः समीरघ्नो गुरूष्णकफपित्तकृत् ।

अथ डिण्डिशः—

डिण्डिशो वातलो रूक्षो मूत्रलोऽश्मरिभेदनः ॥ २४ ॥

अथ शिम्बी—

शिम्बी शीता गुरुर्बल्या श्लेष्मला वातपित्तजित् ।

अथ पटोलम्—

पटोलं पाचनं हृद्यं वृष्यं लघ्वग्निदीपनम् ॥ २५ ॥

---

१ क. °ड्विषमाढ° । २ क. °पवेश° । ३ ग. डिण्डशः । ४ ग. डिण्डशो मू° ।

स्निग्धोष्णं हन्ति कासास्रज्वरदोषत्रयक्रिमीन् ।
पत्रं पित्तहरं शीतं वल्ली तस्य कफापहा ॥ २६ ॥
मूलं विरेचनं प्रोक्तं फलं दोषत्रयापहम् ।

अथ बृहत्पटोलिका—

बृहत्पटोलश्चिचिण्डो बलकृद्दृष्टिपुष्टिदः ॥ २७ ॥
किंचिन्न्यूनगुणस्तस्माद्विशेषाच्छोषिणो हितः ।

अथ पत्रशाकम्—

तत्र वास्तूकः—

वास्तूकः पाचनो रुच्यो लघुः शुक्रबलप्रदः ॥ २८ ॥
सरः प्लीहार्शपित्तास्रक्रिमिदोषत्रयापहः ।

अथ रक्तवास्तुकः—

जीवन्तो बलदः क्षारः स्वादुपाकस्त्रिदोषनुत् ॥ २९ ॥
जीवन्तो रक्तवास्तूक इति भेडादयो जगुः ।

अथ चक्रवर्तिशाकम्—

चक्रवर्त्यभिधं शाकं गुणैर्वास्तूकवन्मतम् ॥ ३० ॥
सरं शीतं त्रिदोषघ्नं लघु दीपनपाचनम् ।

अथ चिल्ली—

रक्ता महद्दला गौडदेशे वास्तूकसंज्ञिता ॥ ३१ ॥
चिल्ली सरा लघुः शीता रुच्या मेध्याग्निदीपनी ।
बल्या रूक्षा जयेत्प्लीहरक्तदोषत्रयक्रिमीन् ॥ ३२ ॥

अथ कालशाकम्[३]—

कालशाकं सरं रुच्यं वातकृत्कफशोषहृत् ।
बल्यं हृद्यं पिच्छिलं च रक्तपित्तहरं हिमम् ॥ ३३ ॥

अथ चञ्चुः—

चञ्चुः शीता सरा रूक्षा स्वाद्वी दोषत्रयापहा ।

अथ नाडीकः—

नाडीको रक्तपित्तघ्नो विष्टम्भी वातकोपनः ॥ ३४ ॥

१ क. °बलः स्थौल्यल° । २ क. श्वेता । ३ क. °म् । नरिवेति भाषा का°।

अथ करम्बी—

करम्बी स्तन्यदा लघ्वी मधुरा शुक्रवर्धिनी ।

अथ तण्डुलीयः—

तण्डुलीयो लघुः शीतो रूक्षः पित्तकफास्रजित् ॥ ३५ ॥
सृष्टमूत्रमलो रुच्यो दीपनो रक्तपित्तहा ।

अथ फोङ्गः स तु मरुदे(दे)शभवः—

फोङ्गः संग्राहकः शीतो रक्तपित्तविषापहः ॥ ३६ ॥

अथ मारीषः—

मारीषो रेचनः शीतो गुरुर्मदाग्निदोषजित् ।
ततोऽपि रक्तमारीषो विशेषाद्गुणवी मतः ॥ ३७ ॥

अथ पालक्या—

पालक्या वातला शीता भेदिनी श्लेष्मला गुरुः ।
परा विष्टम्भिनी श्वासरक्तपित्तकफापहा ॥ ३८ ॥

अथ चुक्रा—

चुक्रा चुकतरा स्वाद्वी वातघ्नी कफपित्तकृत् ।
रुच्या लघुतरा पाके वृन्ताके नातिरोचनी ॥ ३९ ॥

अथ शतपुष्पा—

शतपुष्पा कटुः स्निग्धा तिक्तोष्णा श्लेष्मवातहा ।
रुच्या वस्तिहिता नेत्र्या बद्धविट्क्रिमिशुक्रनुत् ॥ ४० ॥

अथ मेथिका—

मेथिका दीपनी हृद्या बद्धविट्क्रिमिशुक्रनुत् ।
गुल्मशूलानिलहरा श्लेष्मणो नाशिनी परा ॥ ४१ ॥

अथ मीनाक्षी—

मीनाक्षीशाकमुद्दिष्टं चक्षुष्यं च त्रिदोषनुत् ।

अथ चक्रमर्दम्—

दद्रुघ्नजं लघु स्वादु शाकं वातहरं मतम् ॥ ४२ ॥

---

१ क. °ह्यपित्तग° । २ क. फोगः । ३ क. फोगः । ४ क. °त्तविषाप° । ५ क. °ताजित् ।

तिक्तं कटु क्रिमिश्वासकासकुष्ठकफप्रणुत् ।
पित्तप्रकोपनं बल्यं कण्डूपामाहरं परम् ॥ ४३ ॥

अथ पुनर्नवाशाकम्—

पौनर्नवं त्रिदोषघ्नं शाकं चक्षुष्यवृष्यकम् ।
सरं शाकेषु सर्वेषु विशेषाच्छोफिनो हितम् ॥ ४४ ॥

अथोपोदकी—

*उपोदकी हिमा स्निग्धा श्लेष्मला वातपित्तजित् ।
अकण्ठ्या ग्रहणीनिद्राशुक्रला रक्तपित्तजित् ॥ ४५ ॥

अथ लोणिका—

लोणिकात्रितयं रूक्षं पटु विड्भिन्न शीतलम् ।
दोषलं मधुरं पाके लघ्वी तत्र सरा मता ॥ ॥ ४६ ॥

अथ सुनिषण्णः—

सुनिषण्णो हिमो ग्राही मेहदोषत्रयापहः ।

अथ तिलपर्णी—

तिलपर्णी हिमा रूक्षा ग्राहिणी कफपित्तजित् ॥ ४७ ॥

अथ सितवारः—

सितवारः सरो वृष्यः शोथघ्नो वातपित्तलः ।

अथ नाली—

नाली सरा लघुः शीता पित्तनुत्कफवातला ॥ ४८ ॥

अथ सार्षपम्—

सार्षपं सर्षपोद्भूतं चक्षुघ्नं दाहि रोचनम् ।
बद्धविट्कं बद्धमूत्रं गुरूष्णं च त्रिदोषकृत् ॥ ४९ ॥

अथ कौसुम्भम्—

कौसुम्भं स्वादु रूक्षोष्णं कफजित्पित्तलं लघु ।

अथ चणकशाकम्—

चाणकं शाकमुद्दिष्टं दुर्जरं कफवातकृत् ॥ ५० ॥

---

* क. पुस्तके बाळ इति ।

---

१ ग. °क्षुष्यं दा° ।

अथ कलायशाकम्—

कलायशाकं भेदि स्याल्लघु पित्तकफापहम् ।

अथ चाङ्गेरी—

चाङ्गेरी दीपनी रुच्या लघूष्णा कफवातजित् ॥ ५१ ॥
पित्तला च ग्रहण्यर्शःकुष्ठातीसारनाशिनी ।

अथ कासमर्दः—

कासमर्दो लघुः कण्ठ्यो रक्तकासत्रिदोषनुत् ॥ ५२ ॥
शाऽप्यन्धनाशनो भेदी दीपनः श्लेष्मपित्तजित् ।

अथ सौभाञ्जनम्—

शिग्रुस्तिक्तो लघुर्ग्राही वह्निदः कफवातजित् ॥ ५३ ॥
तीक्ष्णोष्णो विद्रधिप्लीहव्रणघ्नश्चाम्लपित्तजित् ।

अथ मधुशिग्रुः—

मधुशिग्रुर्गुणैस्तद्वद्विशेषाद्दीपनः परः ॥ ५४ ॥

अथ पुष्पाणि—

तत्र सौभाञ्जनपुष्पगुणाः—

तीक्ष्णोष्णं कटुकं पुष्पं शिग्रुजं स्नायुशोथजित् ।
क्रिमिनुत्कफवातघ्नं विद्रधिप्लीहगुल्मनुत् ॥ ५५ ॥

अथ मधुशिग्रुपुष्पम्—

मधुशिग्रोर्वरं पुष्पं श्लेष्मक्रिमिविनाशनम् ।
पित्तहृच्चक्षुषोः पथ्यं रक्तपित्तप्रसाधनम् ॥ ५६ ॥
सौभाञ्जनफलं स्वादु कषायं कफपित्तजित् ।
शूलकुष्ठक्षयश्वासगुल्मघ्नं स्वरसादनुत् ॥ ५७ ॥

अथ मधुशिग्रु—

रुच्यं स्यान्मधुशिग्रुजं फलमहोरात्री हितं देहिनां
पथ्यं वातहरं प्रमेहदमनं श्वासं च कासं जयेत् ।
दौर्बल्यं विनिहन्ति पुंस्त्वजनकं दुर्नामदुःखं हरे-
न्नानारोगनिवारणाय जनितं वीर्येण चोष्णं लघु ॥ ५८ ॥

---

१ क. मुस्तीक्ष्णो ड° । २ ग. वरः ।

—अथ कदलीपुष्पम्—

कदलीकुसुमं तिक्तं कषायं ग्राहि दीपनम् ।
उष्णवीर्यं बलासघ्नं तद्गुणं चास्फुटं वलम् ॥ ५९ ॥

अथ मुनिद्रुमपुष्पम्—

अगस्त्यपुष्पं शिशिरं चतुर्थज्वरशान्तिकृत् ।
नक्तान्ध्यनाशनं प्रोक्तं पीनसश्लेष्मपित्तनुत् ॥ ६० ॥
सतिक्तं कटुकं पाके कषायं वातलं मतम् ।
अगस्त्यशिम्बसदृशो गुणः पुष्पस्य दुर्जरः ॥ ६१ ॥

अथ मूलशाकानि—

मूलकं बालकं रुच्यं वीर्योष्णं पाचनं लघु ।
हन्ति दोषत्रयश्वासगलाक्षिगदपीनसान् ॥ ६२ ॥
महत्तदेव रूक्षोष्णं गुरु दोषत्रयप्रदम् ।
घृतसिद्धं तदेव स्याद्दोषत्रयविनाशनम् ॥ ६३ ॥
शुष्कं तु विषशोथघ्नं लघु दोषत्रयापहम् ।
तत्पुष्पं श्लेष्मपित्तघ्नं तत्फलं श्लेष्मवातनुत् ॥ ६४ ॥
तत्पत्रं पाचनं तीक्ष्णं श्लेष्मवातहरं हिमम् ।
तदेव पाचितं स्वादु क्षारं पित्तकफप्रदम् ॥ ६५ ॥

अथ सूरणः—

सूरणो दीपनो रूक्षः कफार्शःकृमिजिल्लघुः ।
तद्वद्वन्यो विशेषेण कफघ्नो रक्तपित्तकृत् ॥ ६६ ॥

अथाऽऽलूकी—

आलूकी रुचिदा भव्या बल्या हृत्कफनाशिनी ।
कोष्ठबन्धकरी प्रोक्ता गुर्वी विष्टम्भकारिणी ॥ ६७ ॥
बृहदालूकिका तद्वद्विशेषाद्बलदा गुरुः ।
कुचालुस्तत्समा ज्ञेया लघुर्बस्तिविशोधिनी ॥ ६८ ॥

अथ गर्जरम्—

गर्जरं मधुरं तीक्ष्णं तिक्तोष्णं दीपनं लघु ।
संग्राहि रक्तपित्तार्शोग्रहणीकफवातजित् ॥ ६९ ॥

---

१ ग. त्रयापहम् । २ ग. विषहृता मता वृ° । ३ ग. कुचालु ।

अथ माणकः—

माणकः शीतलः स्वादुः पित्तरक्तहरो गुरुः ।

अथ कसेरुकशालूके—

कसेरुकं हिमं स्वादु गुरु पित्तास्रदाहजित् ॥ ७० ॥
ग्राहि शुक्रानिलश्लेष्मप्रदं शालूककं तथा ।

अथाऽऽलूकम्—

आलूकं शीतलं सर्वं विष्टम्भि मधुरं सरम् ॥ ७१ ॥
सृष्टमूत्रमलं रूक्षं दुर्जरं रक्तपित्तनुत् ।
कफानिलकरं बल्यं वृष्यं स्तन्यविवर्धनम् ॥ ७२ ॥

अथ पिण्डालु—

पिण्डालु किंचिन्मधुरं श्लेष्मलं पित्तनुद्गुरु ।

अथ हस्तालु—

हस्तालु शीतलं स्वादु श्लेष्मलं वातपित्तनुत् ॥ ७३ ॥

अथ वाराहीकन्दः—

सौकरः पित्तलो वर्ण्यः स्वादुस्तिक्तो रसायनः ।
आयुःशुक्राग्निकृन्मेहकफकुष्ठानिलापहः ॥ ७४ ॥

अथ मुसलीकन्दः—

मुसली बृंहणी वृष्या वीर्योष्णाऽर्शोनिलापहा ।

अथ केलूटम्—

केलूटं शीतलं ग्राहि पित्तघ्नं कफवातजित् ॥ ७५ ॥

अथ कदलीकन्दः—

शीतलः कदलीकन्दो ग्राही रूक्षोऽस्रपित्तजित् ।
ईषत्कषायः कफकृद्वातलः प्रदरे हितः ॥ ७६ ॥

अथ लशुनः—

लशुनो बृंहणो वृष्यः स्निग्धोष्णः पाचनः सरः ।
भग्नसंधानकृत्केश्यो गुरुः पित्तास्रवृद्धिदः ॥ ७७ ॥

---

१ क. °सवातजि° । २ ग. वर्ण्यं । ३ क. °र्द सप्वधि° ।

रसायनः कफश्वासकासगुल्मज्वरारुचीः ।
हन्ति शोफप्रमेहार्शःकुष्ठशूलानिलक्रिमीन् ॥ ७८ ॥
तत्पत्रं मधुरं क्षारं नालो मधुरपिच्छिलः ।

अथ पलाण्डुः—

पलाण्डुस्तद्गुणैस्तुल्यः कफकृन्नातिपिच्छिलः ॥ ७९ ॥
अनुष्णः केवलं वातं स्वादुपाकरसो जयेत् ।

अथ गृञ्जनः—

गृञ्जनः पित्तलो ग्राही तीक्ष्णोष्णो रोगनाशनः ॥ ८० ॥
गन्धाकृतिरसैस्तुल्यः सूक्ष्मनालः पलाण्डुना ।

अथ नालशाकम्—

तत्रास्थिशृङ्खलिका—

अस्थिशृङ्खलिका वृष्या श्लेष्मला मधुरा हिमा ॥ ८१ ॥
अस्थिसंधानकृद्बल्या पित्तरक्तानिलापहा ।

अथाऽऽलूकीनालम्—

आलूकीनालशाकं तु कटूष्णं कफपित्तकृत् ॥ ८२ ॥

अथ करीरः—

वेणोः करीरः श्लेष्मघ्नः कषायो रुचिकृत्सरः ।
वातपित्तहरो रूक्षः कटुको रसपाकतः ॥ ८३ ॥

अथ भूस्वेदजं शाकम्—

सर्वे संस्वेदजाः शीताः पिच्छिला दोषलाश्च ते ।
गुरवश्छर्द्यतीसारज्वरश्लेष्मामयप्रदाः ॥ ८४ ॥
श्वेताः शुचिस्थलीकाष्ठवंशगोव्रजसंभवाः ।
नातिदोषकरा ज्ञेयाः शेषास्तेभ्यो विगर्हिताः ॥ ८५ ॥
( * शिलीन्ध्रं शीतलं वल्यं गुरु भेदि त्रिदोषकृत् । )

निषिद्धशाकम्—

अतिजीर्णमकालोत्थं रूक्षं स्निग्धमभूमिजम् ॥ ८६ ॥

---

* धनुश्चिह्नान्तर्गतमिदमर्धं ग. पुस्तकस्थम् ।

१ ग. °पित्तलः । २ ग. कण्डूलं क° ।

कृमिजग्धं कोमलं वा शीतव्यालादिदूषितम् ।
शुष्कं शाकं च सकलं नाश्नीयान्मूलकं विना ॥ ८७ ॥

इति योगतरङ्गिण्यां षड्विधशाकगुणागुणकथनं नाम
द्वात्रिंशत्तरङ्गः ॥ ३२ ॥

---

अथ त्रयस्त्रिंशत्तरङ्गः ।

---

## अथ मांसानि—

### तत्र सामान्यमांसगुणाः—

मांसं वातहरं सर्वं बृंहणं बलशुक्रकृत् ।
प्रीणनं गुरु हृद्यं च मधुरं रसपाकयोः ॥ १ ॥

### अथ तद्भेदाः—

मांसवर्गो द्विधा ज्ञेयो जाङ्गलानूपभेदतः ।

### तत्र जाङ्गललक्षणमाह—

मांसवर्गेऽत्र जङ्घाला बिलस्थाश्च गुहाशयाः ॥ २ ॥
तथा पर्णमृगा ज्ञेया विष्किराः प्रतुदा अपि ।
प्रसहा अथ च ग्राम्या अष्टौ जाङ्गलजातयः ॥ ३ ॥
जाङ्गला मधुरा रूक्षास्तुवरा लघवस्तथा ।
बल्या वृष्या बृंहणाश्च दीपना दोषहारिणः ॥ ४ ॥
मूकतां मिम्मिणित्वं च गद्गदत्वार्दिते तथा ।
बाधिर्यमरुचिं छर्दिं प्रमेहं मुखजान्गदान् ॥ ५ ॥
गलगण्डं श्लीपदं च नाशयन्त्यनिलामयान् ।

### अथाऽऽनूपलक्षणगुणाः—

कूलेचरा प्लवाश्चापि कोशस्था पादिनस्तथा ॥ ६ ॥
मत्स्या एतेऽत्र विख्याताः पञ्चधाऽऽनूपजातयः ।
आनूपा मधुराः स्निग्धा गुरवो वह्निसादनाः ॥ ७ ॥
श्लेष्मलाः पिच्छिलाश्चैव मांसवृद्धिप्रदा भृशम् ।
तथाऽभिष्यन्दिनस्ते हि प्रायो पथ्यतमाः स्मृताः ॥ ८ ॥

अथ जाङ्गलानां गणनाविशिष्टगुणाः—

हरिणैणकुरङ्गर्ष्यवातायुमृगमातृकाः ।
राजीवः पृषतश्चापि श्वदंष्ट्रः शरमादयः ॥ ९ ॥
जङ्घालक्षणा एते तेषां चिह्नं पृथक्शृणु ।
हरिणस्ताम्रवर्णः स्यादेणः कृष्णः प्रकीर्तितः ॥ १० ॥
कुरङ्गस्ताम्रवर्णः स्याद्धरिणाकृतिको महान् ।
ऋष्यो नीलाण्डको लोके सराजं इति मण्यते ॥ ११ ॥
वातायुस्तु किशोराभो मृगः स्वल्पः प्रकीर्तितः ।
स्वल्पः पृथूदरो ज्ञेयः शशाभो मृगमातृकः ॥ १२ ॥
कस्तूरीहरिणं केचिद्वदन्ति मृगमातृकम् ।
राजीवस्तु मृगो ज्ञेयो राजिभिर्बहुभिर्वृतः ॥ १३ ॥
पृषतश्चन्द्रबिन्दुः स्याद्धरिणात्किंचिदल्पकः ।
न्यङ्कुर्बहुविषाणोऽथ शम्बरो गवयान्महान् ।
श्वदंष्ट्रः स मतो यस्तु काश्मीरे कर्कटाभिधः ॥ १४ ॥
काश्मीरदेशशरभोऽष्टपात्स्यादुरसाहयुक्तश्चतुरूर्ध्वपादः ।
उष्ट्रप्रमाणः स महाविषाणः ख्यातो वनस्थश्च महामृगाख्यः॥१५॥
जङ्घालाः प्रायशः सर्वे पित्तश्लेष्महरा मताः ।
किंचिद्वातकराश्चापि लघवो बलवर्धनाः ।

अथ बिलेशयलक्षणगुणाः—

गोधाशशभुजङ्गाखुशल्लकाद्या बिलेशयाः ।
बिलेशया वातहरा मधुरा रसपाकयोः ॥ १७ ॥
बृंहणा बद्धविण्मूत्रा वीर्योष्णाश्च प्रकीर्तिताः ।

अथ गुहाशयलक्षणगुणाः—

सिंहव्याघ्रवृका ऋक्षतरक्षुद्वीपिनस्तथा ।
बभ्रुजम्बुकमार्जारा इत्याद्याः स्युर्गुहाशयाः ।
* श्वेतपुच्छो रक्तनेत्रो बभ्रुर्मदःसमाकुलः ॥ १९ ॥

* क. पुस्तके स्थूलपु० इति पाठान्तरम् ।

१, २ क. राजिष्ठतरश्चो । ३ क. °यः । जाङ्गल्याः प्रकृता ए° । ४ क. °गुरु

गुहाशया वातहरा गुरूष्णा मधुराश्च ते ।
स्निग्धा बल्या हिता नित्यं नेत्रगुह्यविकारिणाम् ॥ २० ॥
द्वीपी चित्रव्याघ्रः ।

अथ पर्णमृगः—

वनौकोवृक्षमार्जारवृक्षमर्कटिकादयः ।
एते पर्णमृगाः प्रोक्ताः सुश्रुताद्यैर्महर्षिभिः ॥ २१ ॥
स्मृताः पर्णमृगा वृष्याश्चक्षुष्याः शोषिणो हिताः ॥ २२ ॥
श्वासकासार्शःशमनाः सृष्टमूत्रपुरीषकाः ॥ २२ ॥

अथ विष्किराः—

वर्तिकालावविकिरकपिञ्जलकतित्तिराः ।
चकोरककराद्याश्च विष्किराः समुदाहृताः ॥ २३ ॥
विकीर्य भक्षयन्त्येते यस्मात्तस्माद्धि विष्किराः ।
विष्किरा मधुराः शीताः कषायाः कटुपाकिनः ॥ २४ ॥
बल्या वृष्यास्त्रिदोषघ्नाः पथ्याश्च लघवो मताः ।

अथ प्रतुदाः—

कालकण्टकहारीतकपोतश्वेतपत्रकाः ॥ २५ ॥
सारिका खञ्जरीटश्च पिकाद्याः प्रतुदा मताः ।
प्रतुद्य भक्षयन्त्येते तुण्डेन प्रतुदास्ततः ॥ २६ ॥
प्रतुदा मधुराः पित्तकफघ्नास्तुवरा हिमाः ।
[illegible]वो बद्धवर्चस्काः किंचिद्वातप्रकोपनाः ॥ २७ ॥

अथ प्रसहाः—

[illegible]ल्लूकश्च चिल्लश्च शशघातकः ।
[illegible]ुरर इत्याद्याः प्रसहाः स्मृताः ॥ २८ ॥
[illegible]ा एते प्रसह्य च्छित्वा भक्षणात् ।
[illegible]हाः सर्वे तन्मांसं चाऽऽहरन्ति ये ॥ २९ ॥
[illegible]ोन्मादैः शुक्रक्षीणा विशेषतः ।

[illegible] ग्राम्याः—

[illegible]गाः प्रोक्ता महर्षिभिः ॥ ३० ॥

[illegible] य इति पाठान्तरम् ।

ग्राम्या वातहराः सर्वे दीपनाः कफपित्तलाः ।
मधुरा रसपाकाभ्यां बृंहणा बलवर्धनाः ॥ ३१ ॥

अथ कूलेचराणां गणना गुणाश्च—

लुलायगण्डवाराहचमरीवारणादयः ।
एते कूलेचराः प्रोक्ता यस्मात्कूले चरन्त्यमी ॥ ३२ ॥
कूलेचरा मरुत्पित्तहरा वृष्या बलावहाः ।
मधुराः शीतलाः स्निग्धा मूत्रलाः श्लेष्मवर्धनाः ॥ ३३ ॥

अथ प्लवाः—

हंससारसकाचाक्षबककौञ्चशराविकाः ।
नन्दीमुखी सकादम्बा बलाकाद्याः प्लवा मताः ॥ ३४ ॥
प्लवन्ति सलिले यस्मादेते तस्मात्प्लवाः स्मृताः ।
प्लवाः पित्तहराः स्निग्धा मधुरा गुरवो हिमाः ॥ ३५ ॥
वातश्लेष्मप्रदाश्चैवं बलशुक्रकराः सराः ।

अथ कोशस्थगुणाः—

शङ्खो वराटकश्चैव शुक्तिशम्बूकमल्लकाः ॥ ३६ ॥
जीवाश्चैवंविधाः सर्वे कोशस्थाः परिकीर्तिताः ।
कोशस्था मधुराः स्निग्धाः पित्तवातहरा हिमाः ॥ ३७ ॥
बृंहणाश्च तथा वृष्या वर्चस्काः कफवर्धनाः ।

अथ पादिनः—

कुम्भीरकूर्मनक्राश्च गोधामकरशङ्कवः ॥ ३८ ॥
घण्टिका शिशुमारश्चेत्यादयः पादिनः स्मृताः ।
पादिनः संस्मृताः सद्भिः कोशस्थानां गुणैः समाः ॥ ३९ ॥

अथ मत्स्याः—

मत्स्यो मीनो विसारश्च झषो वैसारिणोऽण्डजः ।
शकुली पृथुरोमा च सशुदर्शन इत्यपि ॥ ४० ॥
रोहिताद्याश्च ये जीवास्ते मत्स्याः परिकीर्तिताः ।
मत्स्याः स्निग्धोष्णमधुरा गुरवः कफपित्तलाः ॥ ४१ ॥
बल्याभिष्यन्दिनो वृष्या बृंहणाः पवनापहाः ।
व्यवायाध्वरतानां च दीप्ताग्नीनां च पूजिताः ॥ ४२ ॥

---

१ ग. °ध कर्कटः कृष्णकर्कटः । प° ।

अथ विशिष्टानां जन्तूनां गुणाः—

छागमांसं गुरु स्निग्धं लघुपाकं त्रिदोषजित् ।
आद्राहि बृंहणं नातिशीतं पीनसनाशनम् ॥ ४३ ॥
देहधातुसमानत्वादनभिष्यन्दि बृंहणम् ।
तत्रापि कोमलच्छागमांसं पथ्यं त्रिदोषजित् ॥ ४४ ॥

इति छागमांसगुणाः ।

मेषमांसगुणाः—

मेषमांसं गुरु स्निग्धं बल्यं पित्तकफप्रदम् ।

इति मेषमांसगुणाः ।

अथ मेदःपुच्छः—

मेदःपुच्छामिषं वृष्यं कफपित्तकरं गुरु ॥ ४५ ॥

इति मेदःपुच्छः ।

अथ कृष्णसारः—

एणमांसं हिमं रुच्यं ग्राहि दोषत्रयापहम् ।
षड्रसं बलदं पथ्यं लघु रूक्षं ज्वरास्रजित् ॥ ४६ ॥

इति कृष्णसारः ।

अथ हरिणी—

हरिण्या आमिषं तद्वद्विशेषात्पथ्यमीरितम् ।

इति हरिणी ।

अथ गोकर्णशम्बरौ—

गोकर्णशम्बरौ शीतौ गुरुस्निग्धौ कफप्रदौ ॥ ४७ ॥
रसे पाके च मधुरौ रक्तपित्तविनाशनौ ।

इति गोकर्णशम्बरौ ।

अथ गवयः—

गवयो मधुरो वृष्यो स्निग्धोष्णः कफपित्तलः ॥ ४८ ॥

इति गवयः ।

अथ कस्तूरीमृगः—

कस्तूरीहरिणः स्वादुर्वह्निविद्दीपनो लघुः ।

इति कस्तूरीमृगः ।

---

१ ग. °नम् । मद्दाग्नु° ।

अथ मुण्डिनी-

मुण्डिनी ज्वरकासास्रक्षयश्वासापहा हिमा ॥ ४९ ॥

इति मुण्डिनी।

अथ वातप्रमीचित्रमृगच्छिकारगुणाः-

वातप्रम्याश्चित्रकस्य च्छिकारस्याऽऽमिषं लघु।
मधुरं ग्राहि शिशिरं दोषत्रयहरं हितम् ॥ ५० ॥
ज्वरास्रनाशनं स्वादु हृद्यं श्वासविनाशनम्।

इति वातप्रमीचित्रमृगच्छिकारगुणाः।

अथ रुरुः-

रुरोमांसं गुरु स्वादु वृष्यं पित्तानिलापहम् ॥ ५१ ॥

इति रुरुः।

अथ न्यङ्कुः-

न्यङ्कुः स्वादुर्लघुर्वृष्यो रुच्यो दोषत्रयापहः।

इति न्यङ्कुः।

अथ शशः-

शशः शीतो लघुः स्वादुर्ग्राही पथ्योऽग्निदीपनः ॥ ५२ ॥
संनिपातज्वरश्वासरक्तपित्तकफापहः।

इति शशः।

अथ सल्लकसैन्धे-

सल्लकः श्वासकासास्रशोषदोषत्रयापहः ॥ ५३ ॥
सैन्धा तथैव विज्ञेया विशेषाद्बलवर्धिनी।

इति सल्लकसैन्धे।

अथ सूकरः-

सौकरं पिशितं स्वादु बल्यं वातापहं गुरु ॥ ५४ ॥
स्निग्धोष्णं शुक्रलं रुच्यं निद्रास्थूलत्वदार्ढ्यकृत्।

इति सूकरः।

---

१ ग. °घुर्बल्यो वृष्यो दो°। २ क. °श्वासशो°।

अथ गण्डकः—

गण्डको बद्धविण्मूत्रः पवित्रोऽनिलनाशनः ॥ ५५ ॥

इति गण्डकः।

अथ महिषः—

माहिषं मधुरं मांसं स्निग्धोष्णं वातनाशनम्।
निद्रारेतोबलस्तन्यतनुदार्ढ्यकरं गुरु ॥ ५६ ॥
तद्वदारण्यजं विद्याद्विशेषाच्छोषिणे हितम्।

इति महिषः।

अथोष्ट्रमांसगुणाः—

उष्ट्रमांसं लघु स्वादु चक्षुष्यमनिलापहम् ॥ ५७ ॥
उष्णमर्शःप्रशमनं मेदि पित्तकफप्रदम्।

इत्युष्ट्रमांसगुणाः।

अथ घोटकः—

घोटकः कटुकः पाके दीपनः कफपित्तकृत् ॥ ५८ ॥
वातहृद्बृंहणो बल्यश्चक्षुष्यो मधुरो लघुः।

इति घोटकः।

अथ शृगालः—

शृगालो बलदो वृष्यः सर्ववातक्षयापहः ॥ ५९ ॥

इति शृगालः।

अथ मूषकः—

मूषको बद्धविण्मूत्रो बल्यो वृष्योऽनिलापहः।

इति मूषकः।

अथ रांजि(जी)मृगः—

रांजीमृगस्त्रिदोषघ्नो ज्वररक्तहरो हिमः ॥ ६० ॥

इति रांजि(जी)मृगः।

अथ पक्षिमांसगुणाः—

वार्ताको वर्तकश्चित्रस्ततोऽल्पा वर्तिका स्मृता।
वर्तकोऽग्निकरः शीतो ज्वरदोषत्रयापहः ॥ ६१ ॥

---

१ ग. रांजामृ°। २ ग. रांजामृ°। ३ ग. रांजामृ°।

गुरुच्य: शुक्रदो बल्यो वर्तिकाऽल्पगुणा मता ।

अथ लावाः—

लावा विष्किरवर्गेषु ते चतुर्धा मता बुधैः ॥ ६२ ॥
पांसुलो गौरकोऽन्यस्तु पौण्ड्रको दर्भरस्तथा ।
लावा वह्निकराः स्निग्धा मधुरा ग्राहिणो हिमाः ॥ ६३ ॥
पांसुलः श्लेष्मलस्तेषु वीर्योष्णोऽनिलनाशनः ।
गौरो लघुतरो रूक्षो वह्निकारी त्रिदोषजित् ॥ ६४ ॥
पौण्ड्रकः पित्तकृत्किंचिल्लघुर्वातकफापहः ।
दर्भरो रक्तपित्तघ्नो हृद्रामयहरो हिमः ॥ ६५ ॥

अथ वार्तिकः—

वर्तीरो वातचटको वार्तिकोऽपि च संस्मृतः ।
वार्तिको मधुरः शीतो रूक्षश्च कफपित्तजित् ॥ ६६ ॥

अथ कृष्णतित्तिरो गौरतित्तिरश्च—

तित्तिरः कृष्णवर्णः स्यात्स तु गौरः कपिञ्जलः ।
तित्तिरो वर्णदो ग्राही हिक्कादोषत्रयापहः ॥ ६७ ॥
श्वासकासज्वरहरस्तस्माद्गौरोऽधिको गुणैः ।

अथ गवैर ( चटकः )

चटकः कलविङ्कः स्यात्कुलिङ्गः कालकण्टकः ॥ ६८ ॥
कुलिङ्गः शीतलः स्निग्धः स्वादुः शुक्रकफप्रदः ।
संनिपातहरो ग्राही चटकस्त्वतिशुक्रलः ॥ ६९ ॥

अथ कुक्कुटाः—

कुक्कुटः कृकवाकुः स्यात्कालज्ञश्चरणायुधः ।
ताम्रचूडस्तथा दक्षो यामनादी शिखण्डकः ॥ ७० ॥
कुक्कुटो बृंहणः स्निग्धो वीर्योष्णोऽनिलजिद्गुरुः ।
चक्षुष्यः शुक्रकफकृद्बल्यो रूक्षः कषायकः ॥ ७१ ॥
अरण्यकुक्कुटः स्निग्धो बृंहणः श्लेष्मलो गुरुः ।
वातपित्तक्षयवमीविषमज्वरनाशनः ॥ ७२ ॥
पानीयकुक्कुटः स्निग्धो बृंहणः श्लेष्मलो गुरुः ।

इति कुक्कुटत्रयम् ।

१ ग. °मा ज्वरघ्ना मा° । २ ज. °स्तनुद । ३ ग. °तकरौ । ४ ग. °कुटो वृष्यो बृ° । ५ ग. °कुटो वृष्यः श्लेष्म°हरबृंहणो गु° ।

## अथ प्रतुदेषु: (प्रतुदः)—

हारीतो रक्तपित्तः स्याद्धरितोऽपि स कथ्यते ॥ ७३ ॥
हारीतो रूक्ष उष्णश्च रक्तपित्तकफापहः ।
स्वेदः स्वरकरः प्रोक्त ईषद्वातकरश्च सः ॥ ७४ ॥

## अथ पाण्डुधवलौ—

पाण्डुस्तु द्विविधो ज्ञेयश्चित्रपक्षः कलध्वनिः ।
द्वितीयो धवलः प्रोक्तः स कपोतस्फुटध्वनिः ॥ ७५ ॥

## अथ चित्रपक्षः चित्तरोप इति लोके—

चित्रपक्षः कफहरो वातघ्नो ग्रहणीप्रणुत् ।
धवलः पाण्डुरुद्दिष्टो रक्तपित्तहरो हिमः ॥ ७६ ॥
रसे पाके च मधुरः संग्राही वातपित्तनुत् ।

## अथ परेवा ( पारावतः )—

पारावतः कलरवः कपोतो रक्तलोचनः ॥ ७७ ॥
पारावतो गुरुः स्निग्धो रक्तपित्तानिलापहः ।
संग्राही शीतलस्तज्ज्ञैः कथितो वीर्यवर्धनः ॥ ७८ ॥

## अथ पक्ष्यण्डस्य गुणाः—

नातिस्निग्धानि वृष्याणि स्वादुपाकरसानि च ।
वातघ्नान्यतिशुक्राणि गुरूण्यण्डानि पक्षिणाम् ॥ ७९ ॥

## अथ मयूरमांसम्—

मयूरमांसं दृग्वर्णस्वरकेशाग्निबुद्धिदम् ।
उष्णं श्रोत्रशिरःपीडावातशोषारुचिप्रणुत् ॥ ८० ॥
सेव्यं मयूरजं मांसं हेमन्ते शिशिरे मधौ ।
न शरद्ग्रीष्मयोः पथ्यं वर्षास्वपि हितं न च ॥ ८१ ॥

## अथ सारसः—

सारसो बृंहणो वृष्यः स्निग्धोष्णो वह्निकृद्गुरुः ।
पित्तास्रवातशमनो वर्णस्वरबलप्रदः ॥ ८२ ॥

इति सारसः ।

---

१ । २ क. °तलाग्य° ।

अथ हंसः—

हंसः स्निग्धो गुरुर्वृष्यो वीर्योष्णः स्वरवर्णकृत् ।
वातास्रपित्तशमनो बृंहणो बलवर्द्धनः ॥ ८३ ॥

इति हंसः ।

अथ चक्रवाकादिगुणाः—

चक्रक्रौञ्चबकोटादिमांसं स्निग्धं हिमं गुरु ।
मधुरं सृष्टविण्मूत्रं वातपित्तास्रनाशनम् ॥ ८४ ॥

इति चक्रवाकादिगुणाः ।

अथ मत्स्याः—

रक्तोदरो रक्तमुखो रक्ताक्षो रक्तपक्षतिः ।
कृष्णपृष्ठो झषः श्रेष्ठो रोहितः कथितो बुधैः ॥ ८५ ॥
रोहितः सर्वमत्स्यानां वरो वृष्योऽर्दितार्तिजित् ।
कषायानुरसः स्वादुर्वातघ्नो नातिपित्तकृत् ॥ ८६ ॥
ऊर्ध्वजत्रुगतान्रोगान्हन्याद्रोहितमुण्डकम् ।

अथ शिलीन्ध्रः—

शिलीन्ध्रः श्लेष्मलो बल्यो विपाके मधुरो गुरुः ॥ ८७ ॥
वातपित्तहरो रुच्य आमवातकरश्च सः ।

अथ भाकुरः ( भकुडः )

भकुडो मधुरः शीतो वृष्यः श्लेष्मकरो गुरुः ॥ ८८ ॥
विष्टम्भजनकश्चापि रक्तपित्तहरः स्मृतः ।

अथ मोई ( मोयिका )

मोयिका वातहृद्बल्या बृंहणी मधुरा गुरुः ॥ ८९ ॥
पित्तहृत्कफकृद्रुच्या वृष्या दीप्ताग्नये हिता ।

अथ पाठीनः—

पाठीनः श्लेष्मलो बल्यो निद्रालुः पिशिताशिनः ॥ ९० ॥
दूषयेद्रुधिरं पित्तं कुष्ठरोगं करोति च ।

अथ शृङ्गी—

शृङ्गी तु वातशमनी स्निग्धा श्लेष्मप्रकोपिनी ॥ ९१ ॥

१ ग. °क्रौञ्चादि° । २ ग. मोचितद्राव° ।

रसे तिक्ता कषाया च लघ्वी रुच्या स्मृता बुधैः।

अथ हिल्लिशः—

हिल्लिशो मधुरः स्निग्धो रोचनो वह्निवर्धनः॥ ९२॥
पित्तकृत्कफकृत्किंचिल्लघुर्वृष्योऽनिलापहः।

अथ सौरी—(शकुली)

शकुली ग्राहिणी हृद्या मधुरा तुवरा स्मृता॥ ९३॥

अथ वेलगर्गरः—

गर्गरः पित्तलः किंचिद्वातजित्कफकोपनः।

अथ कवई—(कविका)

कविका मधुरा स्निग्धा कषाया रुचिकारिणी॥ ९४॥
किंचित्पित्तकरी वातनाशिनी बलवर्धिनी।

अथ वाम्वी (वर्मिः)

वर्मिर्मत्स्यो हरेद्वातं पित्तं रुचिकरो लघुः॥ ९५॥

अथ डण्डारी (डण्डमत्स्यः)

डण्डमत्स्यो रसे तिक्तः पित्तं रक्तं कफं हरेत्।
वातसाधारणः प्रोक्तः शुक्रलो बलवर्धनः॥ ९६॥

अथैरङ्गः—

एरङ्गो मधुरः स्निग्धो विष्टम्भी शीतलो गुरुः।

अथ पयता— (महाशफरः)

महाशफरसंज्ञस्तु तिक्तः पित्तकफापहः॥ ९६॥
शिशिरो मधुरो रुच्यो वातसाधारणो मतः।

अथ गरई— (गरघ्नी)

गरघ्नी मधुरा तिक्ता तुवरा वातपित्तहृत्॥ ९८॥
कफघ्नी रुचिकृल्लघ्वी दीपनी बलवीर्यकृत्।

अथ मगरी— (मकुरः)

मकुरो वातहृद्वृष्यो बल्यः कफकरो लघुः॥ ९९॥

---

१ ग. 'शकुला मा'। २ ग. 'गर्गरः'। ३ ग. 'मद्गुरो'।

अथ गोडएस— ( सपादमत्स्यः )

सपादमत्स्यो मेधाकृन्मेदःक्षपकरश्च सः ।
वातपित्तकरश्चापि रुचिकृत्परमो मतः ॥ १०० ॥

अथ महरी प्रोष्ठी—

प्रोष्ठी तिक्ता कटुः स्वादुः शुक्रघ्नी कफवातजित् ।
स्निग्धाऽऽस्यकण्ठरोगघ्नी रोचनी च लघुः स्मृता ॥ १ ॥

अथ क्षुद्रमत्स्याः—

क्षुद्रमत्स्याः स्वादुरसा दोपत्रयविनाशनाः ।
लघुपाका रुचिकराः सर्वदा ते हिता मताः ॥ २ ॥

अथातिक्षुद्रमत्स्याः—

अतिसूक्ष्माः पुंस्त्वहरा रुच्याः कासानिलापहाः ।

अथ मत्स्याण्डगुणाः—

मत्स्यगर्भो भृशं वृष्यः स्निग्धः पुष्टिकरो गुरुः ॥ ३ ॥

अथ शुष्कमत्स्याः—

शुष्कमत्स्या न बल्याः स्युर्दुर्जरा विड्विबन्धिनः ।

अथ दग्धमत्स्याः—

दग्धमत्स्यो गुणैः श्रेष्ठः पुष्टिकृद्बलवर्धनः ॥ ४ ॥

अथ कूपजादिमत्स्यगुणाः—

कौपा मत्स्याः शुक्रमूत्रकुष्ठश्लेष्मविवर्धनाः ।
सरोजा मधुराः स्निग्धा बल्या वातविनाशनाः ॥ ५ ॥
नादेया बृंहणा मत्स्या गुरवोऽनिलनाशनाः ।
रक्तपित्तकरा वृष्याः स्निग्धोष्णाः स्वल्पवर्चसः ॥ ६ ॥
चौड्याः पित्तहराः स्निग्धा मधुरा लघवो हिमाः ।
ताडागा गुरवो वृष्याः शीतला बलमूत्रदाः ॥ ७ ॥
तडागवन्निर्झरजा बलायुर्मतिदक्कराः ।

अथ ऋतुविशेषे मत्स्यविशेषाः—

हेमन्ते कूपजा मत्स्याः शिशिरे सारसा हिताः ॥ ८ ॥

---

१ क. प्रोष्ठी । २ क. हिमा म° । ३ क. हिताः । ता° ।

वसन्ते तु नदीजाता ग्रीष्मे चौड्यसमुद्भवाः ।
तडागजाता वर्षासु तास्वपथ्या नदीभवाः ॥ ९ ॥
नैर्झराः शरदि श्रेष्ठा विशेषोऽयमुदाहृतः ।

इति मत्स्यगुणाः ।

सद्योहतस्य मांसं स्याद्व्याधिघाति यथाऽमृतम् ॥ १० ॥
वयस्थं बृंहणं सात्म्यमन्यथा तद्विवर्जयेत् ।
स्वयं मृतस्य चाबल्यमतीसारकरं गुरु ॥ ११ ॥
वृद्धानां दोषलं मांसं बलानां बलदं लघु ।
त्रिदोषकृद्व्यालजुष्टं शुष्कं शूलकरं गुरु ॥ ११२ ॥

इति योगतरङ्गिण्यां मांसमत्स्यादिगुणकथनं नाम त्रयस्त्रिंशत्तरङ्गः ॥ ३३ ॥

---

अथ चतुस्त्रिंशत्तरङ्गः ।

---

## अथ हरीतकीगुणाः—

हरस्य भवने जाता हरिता च स्वभावतः ।
हरते सकलान्व्याधींस्तेन चाऽऽख्या हरीतकी ॥ १ ॥

### हरीतकीलक्षणमाह—

जीवन्ती पूतना पश्चादमृता विजयाऽभया ।
रोहिणी चेतकी सप्तभेदभिन्ना हरीतकी ॥ २ ॥
जीवन्ती स्वर्णवर्णाभा पूतनाऽस्थिमती मता ।
अमृता त्रिदला प्रोक्ता विजया तुम्बरूपिणी ॥ ३ ॥
पञ्चाङ्गी त्वभया ज्ञेया मता वृत्ता तु रोहिणी ।
त्र्यङ्गी तु चेतकी ज्ञेया कर्म तासामथोच्यते ॥ ४ ॥
सर्वरोगेषु जीवन्ती प्रलेपे पूतना हिता ।
शुद्ध्यर्थममृता प्रोक्ता विजया सर्वरोगजित् ॥ ५ ॥
अक्षिरोगेऽभया शस्ता रोहिणी व्रणरोपणी ।
चेतकी चूर्णयोगे स्यात्सप्तधैवं हरीतकी ॥ ६ ॥

---

१ ग. °थं स्थूलं गुरु विकारकृत्। २ ग. °न प्रोक्ताह° । ३ ग. रोहिणी ।

अथ सामान्यहरीतकी—

पक्वा वैशाखमासे या स्वयं पतति वृक्षतः ।
स्थूला गुर्वी घना स्निग्धा वैशाखी सा हरीतकी ॥ ७ ॥

अथ विशेषः—

शोणा छिन्ना गुडनिभा किंचिदम्ला कषायिणी ।
स्थूलत्वक्सरसा गुर्वी जले मज्जेच्छिवोत्तमा ॥ ८ ॥
[ *चेतकीपादपच्छायामुपसर्पन्ति ये नराः ।
भिद्यन्ते तत्क्षणादेव पशुपक्षिमृगादिभिः ॥ ९ ॥
चेतकी तु धृता हस्ते यावत्तिष्ठति देहिनाम् ।
तावद्विरिच्यते जन्तुस्तत्प्रभावान्न संशयः ॥ १० ॥ ]
चर्विता वर्धयत्यग्निं पेषिता मलशोधिनी ।
स्विन्ना संग्राहिणी प्रोक्ता भृष्टा पथ्या त्रिदोषजित् ॥ ११

अथ ऋतुहरीतकी—

ग्रीष्मे तुल्यगुडां सुसैन्धवयुतां मेघावनद्धाम्बरे
तुल्यां शर्करया शरद्यमलया शुण्ठ्या तुषारागमे ।
पिप्पल्या शिशिरे वसन्तसमये क्षौद्रेण संयोजितां
राजन्प्राश्य हरीतकीमिव गदा नश्यन्तु ते शत्रवः ॥ १२

अथ सामान्यहरीतकीगुणाः—

हरीतकी पञ्चरसा लवणा तुवरोत्कटा ।
रूक्षोष्णा दीपनी मेध्या स्वादुपाका रसायनी ॥ १३ ॥
सरा बुद्धिप्रदा स्वर्या चक्षुष्या बृंहणी लघुः ।
श्वासकासप्रमेहार्शःकुष्ठशोफोदरक्रिमीन् ॥ १४ ॥
वैस्वर्यग्रहणीदोषविबन्धविषमज्वरान् ।
गुल्माध्मानव्रणच्छर्दिहिध्माकण्डूहृदामयान् ॥ १५ ॥
कामलां शूलमत्युग्रं प्लीहानं चापकर्षति ।
मधुराम्लतया वातं कषायस्वादुभावतः ॥
पित्तं हन्ति कफं तद्वत्कटुत्वेन हरीतकी ॥ १६ ॥
भुक्ते पथ्याऽभुक्ते पथ्या भुक्ताभुक्ते पथ्या पथ्या ।
जीर्णे पथ्याऽजीर्णे पथ्या जीर्णाजीर्णे पथ्या पथ्या ॥ १७

* मधुधिकान्तर्गतो ग्रन्थः क. पुस्तकस्थः ।

अध्वातिखिन्नः परिहीनतेजा
रूक्षः कृशो लङ्घनकर्शितश्च ।
ज्वरान्वितो गर्भवती व्रणी च
क्षय्यल्पशुक्रोऽप्यभयां न खादेत् ॥ १८ ॥
हरिं हरीतकीं चैव गायत्रीं च दिने दिने ।
मोक्षारोग्यतपःकामी चिन्तयेद्भक्षयेज्जपेत् ॥ १९ ॥

इति हरीतकीगुणाः ।

## अथाऽऽमलकी—

तद्वद्धात्रीफलं वृष्यं विशेषाद्रक्तपित्तजित् ।
अम्लत्वात्पवनं हन्ति पित्तं माधुर्यशैत्यतः ॥ २० ॥
कफं रूक्षकषायत्वात्पक्वमामलकीफलम् ।
कुर्यात्पित्तं तदम्लत्वात्कफं माधुर्यशैत्यतः ॥ २१ ॥
वातं रूक्षकषायत्वादेवं किं न विपर्ययः ।
धात्र्यास्त्रिदोषहन्तृत्वं शक्त्यैव मुनिभिः स्मृतम् ॥ २२ ॥
संभावनवशादुक्ता रसादेरपि हेतुता ।

इत्यामलकी ।

## अथ विभीतकः—

विभीतकः स्वादुपाकः कषायः कफपित्तनुत् ॥ २३ ॥
उष्णवीर्यो हिमस्पर्शो भेदनः कासनाशनः ।
रूक्षो नेत्रहितः केश्यो मज्जाऽस्य मदकारकः ॥ २४ ॥

इति विभीतकः ।

## अथ त्रिफला—

एका हरीतकी योज्या द्वौ तु योज्यौ बिभीतकौ ।
चत्वार्यामलकान्याहुः सिताऽत्र द्विगुणा भवेत् ॥ २५ ॥
त्रिफला मेहशोफघ्नी कुष्ठहन्त्री रसायनी ।
सर्पिर्मधुभ्यां संयुक्ता सैव नेत्रामयापहा ॥ २६ ॥

इति त्रिफला ।

---

१ ग. °वी च नारी क्ष° ।

अथ भूम्यामलकी-

भूधात्री वातकृत्तिक्ता कषाया मधुरा हिमा ।
पिपासां कासपित्तास्रकफपाण्डुक्षतापहा ॥ २७ ॥

इति भूम्यामलकी ।

अथ राजामलकम्-

राजामलकमस्राक्षिरोगपित्तसमीरजित् ।
सरं शीतं श्लेष्महरं गुरु स्वाद्वम्लमुत्तमम् ॥ २८ ॥

इति राजामलकम् ।

अथ वासकः-

वासको वातकृत्स्वर्यः कफपित्तास्रनाशनः ।
श्वासकासज्वरच्छर्दिमेहकुष्ठक्षयापहः ॥ २९ ॥

इति वासकः ।

अथ गुडूची-

गुडूची कटुका लघ्वी स्वादुपाका रसायनी ।
संग्राहिणी कषायोष्णा बल्या तिक्ताऽग्निदीपनी ॥ ३० ॥
कामलाकुष्ठवातास्रज्वरपित्तवमीर्जयेत् ।

इति गुडूची ।

अथ तत्सत्त्वगुणाः-

छिन्नासत्त्वं हरति सकलं दुस्तरं तीव्रतापं
दाहे चोष्णं भवति च नृणां यौवनेऽष्टज्वरेषु ।
दाहं मोहं ज्वरवमितृषाश्वासपाण्डश(स)हिक्काः
क्षीणां रक्तप्रदरजनिते रोगराजेऽपि शस्तम् ॥ ३१ ॥

अथ बिल्वम्-

बिल्वं ग्राहि कषायोष्णं कटु दीपनपाचनम् ।
हृद्यं बालं लघु स्निग्धं तिक्तं वातकफापहम् ॥ ३२ ॥
वृद्धं गुरु त्रिदोषं स्याद्दुर्जरं पूतिमारुतम् ।
विदाहि विष्टम्भकरं मधुरं वह्निमान्द्यकृत् ॥ ३३ ॥
ग्राहिणी कफवातामशूलघ्नी बिल्वपेशिका ।

इति बिल्वम् ।

१ ग. °वाश्रहपि° । २ ग. °तार्तः क° ।

अथाग्निमन्थः—

अग्निमन्थः श्वयथुंहृद्वीर्योष्णः कफवातनुत् ॥ ३४ ॥

इत्यग्निमन्थः ।

अथ पाटला—

पाटलाऽरुचिशोथास्रश्वासतृट्छर्दिनाशिनी ।
अनुष्णा रुचिरा स्वादुस्तत्पुष्पं कफरक्तनुत् ॥ ३५ ॥
पित्तातिसारदाहघ्नं फलं हिक्कास्रपित्तजित् ।

इति पाटला ।

अथ गम्भारी—

काश्मरी ज्वरशूलघ्नी वीर्योष्णा मधुरा गुरुः ॥ ३६ ॥
तत्पुष्पं वातलं ग्राहि पित्तासृक्प्रदरापहम् ।
फलं रसायनं केश्यं बृंहणं शुक्रलं गुरु ॥ ३७ ॥
वातपित्तं तृषां हन्ति वातास्रं च विबन्धनुत् ।

इति गम्भारी ।

अथ श्योनाकः—

श्योनाको जीवनः पाके कटुस्तुवरको हिमः ॥ ३८ ॥
ग्राही तिक्तोऽनिलश्लेष्मपित्तकासामनाशनः ॥ ३९ ॥

इति श्योनाकः ।

अथ महत्पञ्चमूलम्—

बिल्वादिभिः पञ्चभिरेभिरेतत्स्यात्पञ्चमूलं महदग्निकारि ।
लघूष्णतिक्तं रसतः कषायं मेदःकफश्वाससमीरहारि ॥ ४० ॥

इति महत्पञ्चमूलम् ।

अथ गोक्षुरः—

गोक्षुरः शीतलः स्वादुर्बलकृद्बस्तिशोधनः ।
प्रमेहश्वासकासाश्मकृच्छ्रहृद्रोगवातजित् ॥ ४१ ॥

इति गोक्षुरः ।

---

१ ग. 'शुद्धी' । २ ग. °र्पं रक्तपित्तनु° । ३ ग. 'तं क्षयं तृष्णां हन्ति वाऽस्रं वि° ।

अथ शालिपर्णी-

शालिपर्णी गुरुश्छर्दिज्वरश्वासातिसारजित् ।
शोषदोषत्रयहरा बृंहण्युष्णा रसायनी ॥ ४२ ॥

इति शालिपर्णी ।

अथ पृश्निपर्णी-

पृश्निपर्णी लघुर्वृष्या मधुरोष्णा विनाशयेत् ।
रक्तातिसारदाहतृड्दोषत्रयवमिज्वरान् ॥ ४३ ॥

इति पृश्निपर्णी ।

अथ बृहती-

बृहती ग्राहिणी हृद्या पाचनी कफवातजित् ।
उष्णा कुष्ठज्वरश्वासशूलकासाग्निमान्द्यहृत् ॥ ४४ ॥

इति बृहती ।

अथ लघुकण्टकारी-

कण्टकारी सरा तिक्ता कटुका दीपनी लघुः ।
रूक्षोष्णा पाचनी कासश्वासज्वरकफानिलान् ॥ ४५ ॥
निहन्ति पीनसं पार्श्वपीडाकृच्छ्रहृदामयान् ।

इति लघुकण्टकारी ।

अथ लघुपञ्चमूलम्-

ह्रस्वाख्यं पञ्चमूलं स्यात्पञ्चभिर्गोक्षुरादिभिः ॥ ४६ ॥
बल्यं पित्तानिलहरं नात्युष्णं स्वादु बृंहणम् ।

इति लघुपञ्चमूलम् ।

अथाष्टवर्गः-

जीवकर्षभकौ मेदे काकोल्यौ वृद्धिवृद्धिके ॥ ४७ ॥
अष्टवर्गोऽष्टभिर्द्रव्यैः कथितश्चरकादिभिः ।
अष्टवर्गो हिमः स्वादुर्बृंहणः शुक्रलो गुरुः ॥ ४८ ॥
भग्नसंधानकृत्स्तन्यगर्भकृद्बलवर्धनः ।
वातपित्तास्रतृड्दाहज्वरमेहक्षयप्रणुत् ॥ ४९ ॥

१ ग. °न्यवल्लासवमथु° ।

तत्र जीवकर्षभकयोरुत्पत्तिमाह–

जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिखरोद्भवौ ।
रसोनकन्दवत्कन्दौ निःसारौ सूक्ष्मपत्रकौ ॥ ५० ॥
जीवकः कूर्चकाकार ऋषभो वृषशृङ्गवत् ।
जीवकर्षभकौ बल्यौ शीतौ शुक्रकफप्रदौ ॥ ५१ ॥
मधुरौ पित्तदाहास्रकार्श्यवातक्षयापहौ ।

अथ मेदामहामेदयोरुत्पत्तिलक्षणमाह–

महामेदाभिधः कन्दो मोरङ्गादौ प्रजायते ॥ ५२ ॥
महामेदाखनौ मेदा स्यादित्युक्तं मुनीश्वरैः ।
शुक्लार्द्रकनिभः कन्दो लताजातः सुपाण्डुरः ॥ ५३ ॥
महामेदाभिधो ज्ञेयो मेदालक्षणमुच्यते ।
शुक्लः कन्दो नखच्छेदान्मेदोधातुमिव स्रवेत् ॥ ५४ ॥
यः स मेदेति विज्ञेया जिज्ञासातत्परैर्जनैः ।
मेदायुग्मं गुरु स्वादु वृष्यं स्तन्यकफापहम् ॥ ५५ ॥
बृंहणं शीतलं रक्तपित्तवातक्षयप्रणुत् ।

अथ काकोलीक्षीरकाकोल्योरुत्पत्तिलक्षणमाह–

जायते क्षीरकाकोली महामेदोद्भवस्थले ॥ ५६ ॥
यत्र स्यात्क्षीरकाकोली काकोली तत्र जायते ।
पीवरीसदृशः कन्दः सक्षीरः प्रियगन्धवान् ॥ ५७ ॥
स प्रोक्तः क्षीरकाकोली तच्चिह्नं लिङ्गमुच्यते ।
यथा स्यात्क्षीरकाकोली काकोल्यपि तथा भवेत् ॥ ५८ ॥
एषा किंचिद्भवेत्कृष्णा भेदोऽयमुभयोरपि ।
काकोलीयुगुलं शीतं शुक्रलं मधुरं गुरु ॥ ५९ ॥
बृंहणं वातदाहास्रपित्तशोषज्वरापहम् ।

अथ ऋद्धिवृद्ध्योरुत्पत्तिलक्षणम्–

ऋद्धिर्वृद्धिश्च कन्दौ द्वौ भवतः कोशयामले ॥ ६० ॥
श्वेतलोमान्वितः कन्दो लताजातः सरन्ध्रकः ।
स एव ऋद्धिर्वृद्धिश्च भेदमप्येतयोर्ब्रुवे ॥ ६१ ॥

---

१ क. °सशेष° । २ ग. °वे । तूञ्

तृणग्रन्थिसमा ऋद्धिर्वामावर्तफला च सा ।
वृद्धिस्तु दक्षिणावर्तफला प्रोक्ता महर्षिभिः ॥ ६२ ॥
ऋद्धिर्बल्या त्रिदोषघ्नी शुक्रला मधुरा गुरुः ।
प्राणैश्वर्यकरी मूर्छारक्तपित्तविनाशिनी ॥ ६३ ॥
वृद्धिर्गर्भप्रदा शीता बृंहणी मधुरा स्मृता ।
वृष्या पित्तास्रशमनी क्षतकासक्षयापहा ॥ ६४ ॥
राज्ञामष्टकवर्गस्तु यतोऽयमतिदुर्लभः ।
तस्मादस्य प्रतिनिधिं गृह्णीयात्तद्गुणं भिषक् ।

तमेवाऽऽह—

मेदाजीवककाकोलीवृद्धिद्वंद्वेऽसति क्रमात् ।
वरीविदार्यश्वगन्धावाराहीस्तत्र निक्षिपेत् ॥ ६६ ॥

इत्यष्टकवर्गः ।

डोडी—

जीवन्ती शीतला स्वादुः स्निग्धा दोषत्रयापहा ।
रसायनी बलकरी चक्षुष्या च यशस्करी ॥ ६७ ॥

इति डोडी ।

अथ ज्येष्ठमधु—

मधुयष्टी गुरुः शीता बल्या तृट्छर्दिपित्तजित् ।

इति ज्येष्ठमधु ।

अथ माषपर्णीमुद्गपर्ण्यौ—

माषपर्णी हिमा तिक्ता रूक्षा शुक्रबलासकृत् ॥ ६८ ॥
मधुरा ग्राहिणी शोषवातपित्तज्वरास्रजित् ।
तद्वज्ज्ञेया मुद्गपर्णी त्रिदोषास्रहरा लघुः ॥ ६९ ॥

इति माषपर्णीमुद्गपर्ण्यौ ।

अथ जीवनीयगणः—

जीवन्ती सूर्यपर्णी [1] युक्काकोल्यौ जीवकर्षभौ ।
मेदोयष्टीति मधुरो जीवनीयो गणो गुरुः ॥ ७० ॥

---

१ ग. °रा गुरुः । वृ° ।

शुक्रकृद्बृंहणः शीतः स्तन्यगर्भकफप्रदः ।
रक्तपित्ततृषाशोषज्वरदाहक्षतापहः ॥ ७१ ॥

इति जीवनीयगणः ।

अथैरण्डद्वयगुणः—

एरण्डयुग्मं मधुरमुष्णं गुरु च नाशयेत् ।
शूलशोथकटीबस्तिशिरःपीडोदरज्वरान् ॥ ७२ ॥
ऊर्ध्वश्वासकफानाहकासकुष्ठाममारुतान् ।
तत्फलं भेदनं स्वादु क्षारमुष्णं समीरनुत् ॥ ७३ ॥

इत्यैरण्डद्वयगुणः ।

अथ सारिवाद्वयम्—

सारिवायुगुलं स्वादु स्निग्धं शुक्रकरं गुरु ।
दोषत्रयास्रप्रदरज्वरातीसारनाशनम् ॥ ७४ ॥

इति सारिवाद्वयम् ।

अथ यासमुण्डचौ—

यासः स्वादुः सरस्तिक्तो हिमः पित्तहरो लघुः ।
हन्ति रक्तकफभ्रान्तीस्तद्वद्धन्वयवासकः ॥ ७५ ॥
मुण्डी तिक्ता कटुः पाके वीर्योष्णा मधुरा लघुः ।
मेध्या गण्डापचीकृच्छ्रकृमियोन्यर्तिपाण्डुजित् ॥ ७६ ॥

इति मुण्डी ।

अथ बृहन्मुण्डी

कदम्बपुष्पी मुण्डी च गुणैर्भूमिकदम्बकः ।

इति बृहन्मुण्डी ।

अथ श्वेतापामार्गः—

अपामार्गः सरस्तीक्ष्णो दीपनः कफवातनुत् ॥ ७७
हन्ति तद्भस्म हिध्मार्शःकण्डूशूलोदरापचीः ।

इति श्वेतापामार्गः ।

---

१ ग. ॰द । निहन्ति दद्रु हि॰ ।

अथ रक्तापामार्गः—

अपामार्गोऽरुणो वातविष्टम्भी कफनाशनः ॥ ७७ ॥
न्यूनः सर्वगुणै रूक्षं तत्पत्रं रक्तपित्तनुत् ।

इति रक्तापामार्गः ।

अथ कम्पिल्लः—

कम्पिल्लः कफपित्तास्रक्रिमिगुल्मोदरव्रणान् ॥ ७९ ॥
हन्ति रेची कटूष्णश्च तच्छाकं ग्राहि शीतलम् ।

इति कम्पिल्लः ।

अथ दन्तिनी—

दन्तीद्वयं सरं पाकरसयोः कटु दीपनम् ॥ ८० ॥
तीक्ष्णोष्णं हन्ति पित्तास्रकफशोफोदरक्रिमीन् ।

इति दन्तिनी ।

अथ त्रिवृत्—

त्रिवृत्तिक्ता सरा रूक्षा स्वादुरुष्णा समीरकृत् ॥ ८१ ॥
कटुः पाके ज्वरश्लेष्मपित्तशोफोदरापहा ।

इति त्रिवृत् ।

अथ श्यामा त्रिवृत्—

त्रिवृत्कृष्णा हीनगुणा सा स्यात्तीव्रविरेचनी ॥ ८२ ॥
मूर्छादाहमदभ्रान्तिकण्ठाकर्षणकारिणी ।

इति श्यामा त्रिवृत् ।

अथैन्द्रवारुणीद्वयम्—

ऐन्द्रवारुणिकायुग्मं तिक्तं कटु सरं लघु ॥ ८३ ॥
वीर्योष्णं कामलापित्तकफप्लीहोदरापहम् ।

इत्यैन्द्रवारुणीद्वयम् ।

अथ राजवृक्षः—

आरग्वधो गुरुः स्वादुः शीतलो मृदुरेचनः ॥ ८४ ॥
ज्वरहृद्रोगपित्तास्रवातोदावर्तशूलनुत् ।
तत्पुष्पं वातलं ग्राहि तिक्तं पित्तकफापहम् ॥ ८५ ॥

---

[illegible]

तन्मज्जा मधुरः पाके स्निग्धः पित्तसमीरजित् ।

इति राजवृक्षः ।

अथ नीलिनी—

नीलिनी रेचनी तिक्ता केश्या मोहभ्रमावहा ॥ ८६ ॥
उष्णा हन्त्युदरप्लीहवातरक्तकफानिलान् ।

इति नीलिनी ।

अथ कटुकी—

कटुकी कटुका पाके तिक्ता रूक्षा सरा लघुः ॥ ८७ ॥
हिमा हन्ति क्रिमिश्वासदाहपित्तकफज्वरान् ।

इति कटुकी ।

अथाङ्कोलः—

अङ्कोलकः कटुः स्निग्धस्तीक्ष्णोष्णस्तुवरो लघुः ॥ ८८ ॥
रेचनः कृमिशूलामशोफश्लेष्मविषापहः ।
तत्फलं शीतलं स्वादु श्लेष्मलं बृंहणं गुरु ॥ ८९ ॥
बल्यं विरेचनं वातपित्तदाहक्षयास्रजित् ।

इत्यङ्कोलः ।

अथ निम्बगुणाः—

निम्बस्तिक्तो लघुर्ग्राही कटुः शीतोऽग्निवातकृत् ॥ ९
व्रणपित्तकफच्छर्दिकुष्ठहृल्लासमेहनुत् ।
तत्फलं भेदनं स्निग्धमुष्णं कुष्ठहरं लघु ॥ ९१ ॥
तत्पुष्पं छर्दिपित्तघ्नं तस्य त्वग्ज्वरनाशिनी ।

इति निम्बगुणाः ।

अथ बकाननिम्बगुणाः—

महानिम्बो हिमो रूक्षस्तिक्तो ग्राही कषायकः ॥ ९२ ॥
कफपित्तक्रिमिच्छर्दिकुष्ठहृल्लासरक्तजित् ।
ाननिम्बगुणाः ।

---

नुत् ।

## अथ चिराईतगुणाः—

किरातो वातलो रूक्षः शीतलस्तिक्तको लघुः ॥ ९३ ॥
संनिपातज्वरश्वासकफपित्तास्रदाहनुत् ।

इति चिराईतगुणाः ।

## अथ कुटजः—

कुटजः कटुको रूक्षो दीपनस्तुवरो हिमः ॥ ९४ ॥
अर्शोतिसारपित्तास्रकफतृष्णामकुष्ठनुत् ।
तत्पुष्पं वातलं शीतं तिक्तं पित्तातिसारजित् ॥ ९५ ॥

इति कुटजः ।

## अथेन्द्रयवः—

ऐन्द्रो यवस्त्रिदोषघ्नः संग्राही शीतलः कटुः ।
ज्वरातिसारपित्तास्रकृमिवीसर्पकुष्ठनुत् ॥ ९६ ॥

इतीन्द्रयवः ।

## अथ (गेळ) मदनफलम्—

मदनो वामनस्तिक्तो वीर्योष्णो लेखनो लघुः ।
रूक्षः कुष्ठकफानाहशोफगुल्मव्रणापहः ॥ ९७ ॥

इति (गेळ) मदनफलम् ।

## अथ कङ्कुष्ठम्—

कङ्कुष्ठं रेचनं तिक्तं कटूष्णं वर्णकारकम् ।
क्रिमिशोफोदराध्मानगुल्मानाहकफापहम् ॥ ९८ ॥

इति कङ्कुष्ठम् ।

## अथ चोकः—

हेमाह्वा रेचनी तिक्ता महदुत्क्लेशकारिणी ।
कृमिकण्डूकफानाहविषकुष्ठविनाशिनी ॥ ९९ ॥

इति चोकः ।

## अथ सातला—

सातला कटुका पाके वातला शीतला लघुः ।
तिक्ता शोफकफानाहपित्तोदावर्तरक्तजित् ॥ १०० ॥

इति सातला ।

## अथाश्मन्तः काञ्चनारभेदः—

अश्मन्तस्तुवरो ग्राही शीतलः कफवातजित्।
निहन्ति गलगण्डास्रगण्डमालागलामयान् ॥ १ ॥
तत्फलं लेखनं ग्राहि गुरुश्लेष्मानिलापहम्।

इत्यश्मन्तः काञ्चनारभेदः।

## अथ काञ्चनारकोविदारौ—

काञ्चनारो हिमो ग्राही तुवरः श्लेष्मपित्तनुत् ॥ २ ॥
कृमिकुष्ठगुदभ्रंशगण्डमालाव्रणापहः।
कोविदारोऽपि तद्वत्स्यात्पुष्पं शीतं तयोर्लघु ॥ ३ ॥
रूक्षं संग्राहि पित्तास्रप्रदरक्षतकासनुत्।

इति काञ्चनारकोविदारौ।

## अथ निर्गुण्डी—

निर्गुण्डी स्मृतिदा तिक्ता कषाया कटुका लघुः ॥ ४ ॥
केश्या नेत्रहिता हन्ति शूलशोफाममारुतान्।
कृमिकुष्ठारुचिश्लेष्मव्रणधीसर्पनाशिनी ॥ ५ ॥

इति निर्गुण्डी।

## अथ मेषशृङ्गी—

मेषशृङ्गी रसे तिक्ता वातला कासनाशिनी।
रूक्षा पाके कटुः पित्तव्रणश्लेष्माक्षिशूलनुत् ॥ ६ ॥

इति मेषशृङ्गी।

## अथ श्वेतपुनर्नवा—

पुनर्नवा सरा तिक्ता रूक्षोष्णा मधुरा कटुः।
शोफानिलव्रणश्लेष्महरा रुच्या रसायनी ॥ ७ ॥
तन्मूलं नेत्ररोगघ्नं शिशिरं शोफजित्सरम्।

इति श्वेतपुनर्नवा।

## अथ रक्तपुनर्नवा—

पुनर्नवाऽरुणा तिक्ता कटुपाका हिमा लघुः ॥ ८ ॥
वातला ग्राहिणी श्लेष्मपित्तरक्तविनाशिनी।

इति रक्तपुनर्नवा।

अथ चिराईतगुणाः—

किरातो वातलो रूक्षः शीतलस्तिक्तको लघुः ॥ ९३ ॥
संनिपातज्वरश्वासकफपित्तास्रदाहनुत् ।

इति चिराईतगुणाः ।

अथ कुटजः—

कुटजः कटुको रूक्षो दीपनस्तुवरो हिमः ॥ ९४ ॥
अर्शोतिसारपित्तास्रकफतृष्णामकुष्ठनुत् ।
तत्पुष्पं वातलं शीतं तिक्तं पित्तातिसारजित् ॥ ९५ ॥

इति कुटजः ।

अथेन्द्रयवः—

ऐन्द्रो यवस्त्रिदोषघ्नः संग्राही शीतलः कटुः ।
ज्वरातिसारपित्तास्रक्रिमिवीसर्पकुष्ठनुत् ॥ ९६ ॥

इतीन्द्रयवः ।

अथ (गेळ)मदनफलम्—

मदनो वामनस्तिक्तो वीर्योष्णो लेखनो लघुः ।
रूक्षः कुष्ठकफानाहशोफगुल्मव्रणापहः ॥ ९७ ॥

इति (गेळ)मदनफलम् ।

अथ कङ्कुष्ठम्—

कङ्कुष्ठं रेचनं तिक्तं कटूष्णं वर्णकारकम् ।
क्रिमिशोफोदराध्मानगुल्मानाहकफापहम् ॥ ९८ ॥

इति कङ्कुष्ठम् ।

अथ चोकः—

हेमाह्वा रेचनी तिक्ता महदुत्क्लेशकारिणी ।
क्रिमिकण्डूकफानाहविषकुष्ठविनाशिनी ॥ ९९ ॥

इति चोकः ।

अथ सातला—

सातला कटुका पाके वातला शीतला लघुः ।
तिक्ता शोफकफानाहपित्तोदावर्तरक्तजित् ॥ १०० ॥

इति सातला ।

## अथाश्मन्तः काञ्चनारभेदः—

अश्मन्तस्तुवरो ग्राही शीतलः कफवातजित् ।
निहन्ति गलगण्डास्रगण्डमालागलामयान् ॥ १ ॥
तत्फलं लेखनं ग्राहि गुरुश्लेष्मानिलापहम् ।

इत्यश्मन्तः काञ्चनारभेदः ।

## अथ काञ्चनारकोविदारौ—

काञ्चनारो हिमो ग्राही तुवरः श्लेष्मपित्तनुत् ॥ २ ॥
कृमिकुष्ठगुदभ्रंशगण्डमालाव्रणापहः ।
कोविदारोऽपि तद्वत्स्यात्पुष्पं शीतं तयोर्लघु ॥ ३ ॥
रूक्षं संग्राहि पित्तास्रप्रदरक्षतकासनुत् ।

इति काञ्चनारकोविदारौ ।

## अथ निर्गुण्डी—

निर्गुण्डी स्मृतिदा तिक्ता कषाया कटुका लघुः ॥ ४ ॥
केश्या नेत्रहिता हन्ति शूलशोफाममारुतान् ।
कृमिकुष्ठारुचिश्लेष्मव्रणार्शीसर्पनाशिनी ॥ ५ ॥

इति निर्गुण्डी ।

## अथ मेषशृङ्गी—

मेषशृङ्गी रसे तिक्ता वातला कासनाशिनी ।
रूक्षा पाके कटुः पित्तव्रणश्लेष्माक्षिशूलनुत् ॥ ६ ॥

इति मेषशृङ्गी ।

## अथ श्वेतपुनर्नवा—

पुनर्नवा सरा तिक्ता रूक्षोष्णा मधुरा कटुः ।
शोफानिलव्रणश्लेष्महरा रुच्या रसायनी ॥ ७ ॥
तन्मूलं नेत्ररोगघ्नं शिशिरं शोफजित्सरम् ।

इति श्वेतपुनर्नवा ।

## अथ रक्तपुनर्नवा—

पुनर्नवाऽरुणा तिक्ता कटुपाका हिमा लघुः ॥ ८ ॥
वातला ग्राहिणी श्लेष्मपित्तरक्तविनाशिनी ।

इति रक्तपुनर्नवा ।

अथ कुष्ठम्-

कुष्ठमुष्णं कटु स्वादु तिक्तं शुक्रप्रदं लघु ॥ २४ ॥
हन्ति वातास्रवीसर्पकासकुष्ठमरुत्कफान् ।

इति कुष्ठम् ।

अथ (शृङ्गी) काकडशिंगी-

शृङ्गी कषाया तिक्तोष्णा हन्ति हिध्मावमिज्वरान् ॥ २
तृष्णारुचिकफश्वासक्षयकासोर्ध्वमारुतान् ।

इति ( शृङ्गी काकडशिंगी )

अथ रोहिषम्-

रोहिषं कटुकं पाके तिक्तोष्णं तुवरं जयेत् ॥ २६ ॥
कण्ठहृद्रोगपित्तास्रशूलकासकफज्वरान् ।

इति रोहिषम् ।

अथ ( कट्फलम् ) कायफळ-

कट्फलं तुवरं तिक्तं कटु वातकफज्वरान् ॥ २७ ॥
हन्ति श्वासप्रमेहार्शःकासकण्ठामयारुचीः ।

इति ( कट्फलम् ) कायफळ ।

अथ भार्गी-

भार्गी रूक्षा कटुस्तिक्ता रुच्योष्णा पाचनी जयेत् ॥ २
शोथकासकफश्वासपीनसज्वरमारुतान् ।

इति भार्गी ( भारङ्गी ) ।

अथ पाषाणभेदः-

पाषाणभेदस्तुवरो हिमो बस्तिविशोधनः ॥ २९ ॥
सरस्तिक्तः प्रमेहार्शःकृच्छ्राश्मरिरुजो जयेत् ।

इति पाषाणभेदः ।

अथ मुस्ता-

मुस्तं कटु हिमं ग्राहि तिक्तं दीपनपाचनम् ॥ ३० ॥
कषायं क्रिमिपित्तास्रकफतृष्णाज्वरापहम् ।

इति मुस्ता ।

---

१ ग. हिमं ।

## अथ धातकी—

धातकी कटुका शीता मदकृत्तुवरा लघुः ॥ ३१ ॥
तृष्णातीसारपित्तास्रविषक्रिमिविसर्पजित् ।

इति धातकी ।

## अथ मोचिका—

मोचिकाऽम्ला रसे पाके कषाया शीतला लघुः ॥ ३२ ॥
पक्वातिसारपित्तास्रकफकण्ठामयापहा ।

इति मोचिका ।

## अथ विदारीकन्दः—

विदारी मधुरा स्निग्धा बृंहणी स्तन्यशुक्रदा ॥ ३३ ॥
गुरुः पित्तास्रपवनदाहजिच्च रसायनी ।

इति विदारीकन्दः ।

## अथ वाराहीकन्दः—

वाराही मधुरा स्निग्धा कटुस्तिक्ताऽतिशुक्रला ॥ ३४ ॥
बल्या पित्तकरी वातकफमेदःक्रमीञ्जयेत् ।

इति वाराहीकन्दः—

## अथ पाठा—

पाठोष्णा कटुका तीक्ष्णा वातश्लेष्महरा लघुः ॥ ३५ ॥
हन्ति शूलज्वरच्छर्दिकुष्ठातीसारहृद्रुजः ।

इति पाठा ।

## अथ मूर्वा—

मूर्वा सरा गुरुः स्वादुस्तिक्ता पितास्रमेहनुत् ॥ ३६ ॥
त्रिदोषतृष्णाहृद्रोगकण्डूकुष्ठज्वरापहा ।

इति मूर्वा ।

## अथ मञ्जिष्ठा—

मञ्जिष्ठा मधुरा तिक्ता कषाया स्वरवर्णकृत् ॥ ३७ ॥

---

१ क. 'क्रा विशु' ।

अथ कुष्ठम्—

कुष्ठमुष्णं कटु स्वादु तिक्तं शुक्रपदं लघु ॥ २४ ॥
हन्ति वातास्त्रवीसर्पकासकुष्ठमरुत्कफान् ।

इति कुष्ठम् ।

अथ (शृङ्गी) काकडशिंगी—

शृङ्गी कषाया तिक्तोष्णा हन्ति हिध्मावमिज्वरान् ॥ २
तृष्णारुचिकफश्वासक्षयकासोर्ध्वमारुतान् ।

इति ( शृङ्गी काकडशिंगी )

अथ रोहिषम्—

रोहिषं कटुकं पाके तिक्तोष्णं तुवरं जयेत् ॥ २६ ॥
कण्ठहृद्रोगपित्तास्त्रशूलकासकफज्वरान् ।

इति रोहिषम् ।

अथ ( कट्फलम् ) कायफळ—

कट्फलं तुवरं तिक्तं कटु वातकफज्वरान् ॥ २७ ॥
हन्ति श्वासप्रमेहार्शःकासकण्ठामयारुचीः ।

इति ( कट्फलम् ) कायफळ ।

अथ भार्गी—

भार्गी रूक्षा कटुस्तिक्ता रुच्योष्णा पाचनी जयेत् ॥ २
शोथकासकफश्वासपीनसज्वरमारुतान् ।

इति भार्गी ( भारङ्गी ) ।

अथ पाषाणभेदः—

पाषाणभेदस्तुवरो हिमो बस्तिविशोधनः ॥ २९ ॥
सरस्तिक्तः प्रमेहार्शःकृच्छ्राश्मरिरुजो जयेत् ।

इति पाषाणभेदः ।

अथ मुस्ता—

मुस्तं कटु हिमं ग्राहि तिक्तं दीपनपाचनम् ॥ ३० ॥
कषायं क्रिमिपित्तास्रकफतृष्णाज्वरापहम् ।[1]

इति मुस्ता ।

---

1 ग. हितं ।

## अथ धातकी—

धातकी कटुका शीता मदकृत्तुवरा लघुः ॥ ३१ ॥
तृष्णातीसारपित्तास्रविषक्रिमिविसर्पजित् ।

इति धातकी ।

## अथ मोचिका—

मोचिकाऽम्ला रसे पाके कषाया शीतला लघुः ॥ ३२ ॥
पक्वातिसारपित्तास्रकफकण्ठामयापहा ।

इति मोचिका ।

## अथ विदारीकन्दः—

विदारी मधुरा स्निग्धा बृंहणी स्तन्यशुक्रदा ॥ ३३ ॥
गुरुः पित्तास्रपवनदाहजिच्च रसायनी ।

इति विदारीकन्दः ।

## अथ वाराहीकन्दः—

वाराही मधुरा स्निग्धा कटुस्तिक्ताऽतिशुक्रला ॥ ३४ ॥
बल्या पित्तकरी वातकफमेदःकृमीञ्जयेत् ।

इति वाराहीकन्दः—

## अथ पाठा—

पाठोष्णा कटुका तीक्ष्णा वातश्लेष्महरा लघुः ॥ ३५ ॥
हन्ति शूलज्वरच्छर्दिकुष्ठातीसारहृद्रुजः ।

इति पाठा ।

## अथ मूर्वा—

मूर्वा सरा गुरुः स्वादुस्तिक्ता पित्तास्रमेहनुत् ॥ ३६ ॥
त्रिदोषतृष्णाहृद्रोगकण्डूकुष्ठज्वरापहा ।

इति मूर्वा ।

## अथ मञ्जिष्ठा—

मञ्जिष्ठा मधुरा तिक्ता कषाया स्वरवर्णकृत् ॥ ३७ ॥

---

१ क. 'क्रा विषु'।

गुरूष्णा श्लेष्मविषहा शोफयोन्यक्षिशूलनुत् ।
रक्तातीसारकुष्ठास्रविसर्पव्रणमेहजित् ॥ ३८ ॥

इति मञ्जिष्ठा ।

अथ हरिद्रा—

हरिद्रा कटुका तिक्ता रूक्षोष्णा श्लेष्मपित्तनुत् ।
वर्ण्या त्वग्दोषमेहास्रशोफकण्डूव्रणापहा ॥ ३९ ॥

इति हरिद्रा ।

अथ दार्वी—

दार्वी तद्वद्विशेषात्तु नेत्रकर्णास्यरोगजित् ।

इति ( हरदः ) दार्वी ।

अथ प्रपुन्नाटः(डः)

प्रपुन्नाटो( डो ) लघुः स्वादू रूक्षः पित्तानिलापहः ॥
हृद्यो हिमः कफश्वासकुष्ठदद्रुविषानिलान् ।
वातरक्तापहो हन्ति तच्छाकं कफकृल्लघु ॥ ३१ ॥

इति प्रपुन्नाटः ( डः ) ।

अथ वाकूची—

वाकुची मधुरा तिक्ता कटुपाका रसायनी ।
विष्टम्भिनी हिमा रुच्या सरा हृद्याऽस्रपित्तनुत् ॥ ४२ ॥
रूक्षा हन्ति कफश्वासकुष्ठमेहज्वरक्रिमीन् ।
तत्फलं पित्तलं श्वेतकुष्ठवातकफापहम् ॥ ४३ ॥

इति वाकूची ।

अथ भृङ्गराजगुणाः—

भृङ्गराजः कटुस्तिक्तो रूक्षोष्णः कफवातनुत् ।
दन्त्यो रसायनो रौक्ष्यकुष्ठनेत्रशिरोर्तिजित् ॥ ४४ ॥

इति भृङ्गराजगुणाः ।

अथ पर्पटः—

पर्पटो हन्ति पित्तास्रभ्रमतृष्णाकफज्वरान् ।
संग्राही शीतलस्तिक्तो दाहनुद्वातलो लघुः ॥ ४५ ॥

इति पर्पटः ।

अथ स(श)णपुष्पी—

स(श)णपुष्पी कटुस्तिक्ता कफजिच्छर्दिकारिणी ।

इति स(श)णपुष्पी ।

अथ त्रायमाणा—

त्रायमाणा सरा पित्तज्वरश्लेष्मास्रशूलजित् ॥ ४६ ॥

इति त्रायमाणा ।

महाजालिनी—

महाजालिनिका तिक्ता रेचनी कफपित्तजित् ।
हन्ति दाहोदरानाहशोफकुष्ठकृमिज्वरान् ॥ ४७ ॥

इति महाजालिनी ।

अथ विषा ( अतिविष )—

विषोष्णा पाचनी तिक्ता श्लेष्मपित्तातिसारजित् ।

इति विषा ( अतिविष ) ।

काकमाची—

काकमाची त्रिदोषघ्नी स्निग्धोष्णा स्वरशुक्रकृत् ॥ ४८ ॥
हृद्या रसायनी शोफकुष्ठार्शोज्वरमेहजित् ।

इति काकमाची ।

अथ काकजङ्घा—

काकजङ्घा हिमा हन्ति रक्तपित्तकफज्वरान् ॥ ४९ ॥

इति काकजङ्घा ।

अथ लोध्रद्वयम्—

लोध्रो विरेचनः शीतश्चक्षुष्यः कफपित्तनुत् ।
कषायो रक्तपित्तास्रतृडतीसारनाशनः ॥ ५० ॥

इति लोध्रद्वयम् ।

अथ वृद्धदारुः—

वृद्धदारुः कषायोष्णः सरस्तिक्तो रसायनः ।
वृष्यो वातामवाताम्रशोफमेहकफप्रणुत् ॥ ५१ ॥

इति वृद्धदारुः ।

---

१ ग. कटुः पित्तश्लेष्मजि' ।

अथ देवदाली ( घोरसारी )—

देवदाली रसे तिक्ता कफार्शःशोफपाण्डुताः ।
नाशयेद्वामनी तीक्ष्णा क्षयहिक्काक्रिमिज्वरान् ॥ ५२ ॥

इति देवदाली ( घोरसारी ) ।

अथ हंसपादी—

हंसपादी गुरुः शीता हन्ति रक्तविषव्रणान् ।
विसर्पदाहातीसारलूतामूतांश्च रोपणी ॥ ५३ ॥

इति हंसपादी ।

अथ सोमवल्ली

सोमवल्ली त्रिदोषघ्नी कटुस्तिक्ता रसायनी ।

इति सोमवल्ली ।

अथ नाकुली ( मुंगशी )—

नाकुली तुवरा तिक्ता कटूष्णा विनाशयेत् ॥ ५४ ॥
विषं लूतावृश्चिकाखुसर्पाणां च क्रिमिव्रणान् ।

इति नाकुली ( मुंगशी । )

अथ पटपत्री—

पटपत्री योनिगदान्कषायोष्णा विनाशयेत् ॥ ५५ ॥

इति पटपत्री ।

अथ लज्जालुः—

लज्जालुः शीतला तिक्ता कषाया श्लेष्मपित्तनुत् ।
रक्तपित्तमतीसारं योनिरोगांश्च नाशयेत् ॥ ५६ ॥

इति लज्जालुः ।

अथ मुसलीकन्दः—

मुसली मधुरा वृष्या वीर्योष्णा बृंहणी गुरुः ।
तिक्ता रसायनी हन्ति गुदजान्यनिलं तथा ॥ ५७ ॥

इति मुसलीकन्दः ।

अथ कपिकच्छुः ( कवाछु )—

कपिकच्छुः परं वृष्या मधुरा बृंहणी गुरुः ।
तद्बीजं वातशमनं वाजीकरणमुत्तमम् ॥ ५८ ॥

इति कपिकच्छुः ( कवाछु ) ।

अथ पुत्रजीवः—

पुत्रजीवो गुरुर्वृष्यो गर्भदः श्लेष्मवातकृत् ।

इति पुत्रजीवः ।

अथ वन्ध्यकर्कोटकी—

वंध्या कर्कोटकी लघ्वी कफनुद्व्रणशोधनी ॥ ५९ ॥
सर्पदर्पहरी तीक्ष्णा विसर्पविषनाशिनी ।

इति वन्ध्यकर्कोटकी ।

अथ विष्णुकान्ता—

विष्णुकान्ता कटुर्मेध्या कृमिव्रणकफाञ्जयेत् ॥ ६० ॥

इति विष्णुकान्ता ।

अथ शङ्खपुष्पी—

शङ्खपुष्पी सरा मेध्या मनोरेतोविकारिणाम् ।
रसायनी कषायोष्णा स्मृतिदा प्रोहनाशिनी ॥ ६१ ॥

इति शङ्खपुष्पी ।

अथ दुग्धिकोष्णा—

दुग्धिकोष्णा गुरू रूक्षा वातला गर्भनाशिनी ।
स्वादुर्विष्टम्भिनी वृष्या कफकुष्ठक्रिमीञ्जयेत् ॥ ६२ ॥

इति दुग्धिकोष्णा ।

अथ नागार्जुनी—

वृत्तपत्रा बहुफला छत्राकारा पयस्विनी ।
दिव्यौषधी सा मेहास्रकुष्ठवीसर्पपाण्डुजित् ॥ ६३ ॥
शोषकासक्षयश्वासश्वित्रगण्डार्बुदापहा ।
रसायनी ज्वरहिता नागार्जुन्यभिधा मता ॥ ६४ ॥

इति नागार्जुनी ।

अथाधःपुष्पी—

अधःपुष्पी क्रिमिश्लेष्ममेहजन्तुविकारजित् ।

इत्यधःपुष्पी ।

---

१ ग. °दा मेहना° । २ ग. °र्भकारिणी । स्वा° । ३ ग. °हचितवि° ।

## अथ भल्लातकः ( भिलामां— )

भल्लातकः कषायोष्णः शुक्लो मधुरो लघुः ॥ ६५ ॥
वातश्लेष्मोदरानाहकुष्ठार्शोग्रहणीगदान् ।
हन्ति गुल्मज्वरश्वित्रवह्निमान्द्यकृमिव्रणान् ॥ ६६ ॥

इति भल्लातकः ( भिलामां ) ।

## अथ चिरपोटी—

चिरपोटी हिमा रूक्षा भेदिनी श्वासकासजित् ।
[ * चरपोटा दीर्घपत्रा भवेन्नागफणाकृतिः ॥ ६७ ॥ ]

इति चिरपोटी ।

## अथेन्द्रशाकम्—

इन्द्रशाकं रेचनकं विबन्धाध्माननाशनम् ।

इतीन्द्रशाकम् ।

## अथ द्रोणपुष्पी—

द्रोणपुष्पी गुरू रूक्षा स्वादुस्तिक्तोष्णभेदिनी ॥ ६८ ॥
वातपित्तकरी शोफकामलाज्वरकृम्यरिः ।

इति द्रोणपुष्पी ।

## अथ ब्राह्मीमाण्डूक्यौ—

ब्राह्मी हिमा सरा स्वादुर्लघुर्मेध्या रसायनी ॥ ६९ ॥
स्वर्या स्मृतिप्रदा कुष्ठपाण्डुमेहास्रकोठजित् ।
विषशोफज्वरहरा तद्वन्मण्डूकपर्ण्यपि ॥ ७० ॥
ब्राह्मी तु रक्तदण्डा स्यान्नीलपुष्पी लघुर्मता ।
लोणिकापत्रसदृशपत्राऽन्या नीलदण्डिनी ॥ ७१ ॥

इति ब्राह्मीमाण्डूक्यौ ।

## अथ सूर्यभक्ताद्वयम् । तिलपर्णीति केचित्—

सूर्यभक्ता गुरुः शीता मूत्रला कफवातजित् ।
अन्योष्णा कुष्ठमेहाश्मकृच्छ्रज्वरहरा लघुः ॥ ७२ ॥

इति सूर्यभक्ताद्वयम् । तिलपर्णीति केचित् ।

---

* धनुश्चिह्नान्तर्गतमिदमर्धं ग. पुस्तकस्थम् ।

१ घ चरपोटा । २ घरपोटा । ३ ग. सुवर्चला गु° ।

अथ मत्स्याक्षी—

मत्स्याक्षी ग्राहिणी कुष्ठपित्तश्लेष्मास्रनुद्धिमा ।
मत्स्येच्छीति पर्वतद्रोण्यादौ जायते ।

इति मत्स्याक्षी ।

अथ जलपिप्पली—

जलपिप्पलिका हृद्या चक्षुष्या शुक्रला मता ॥ ७३ ॥

इति जलपिप्पली ।

अथ गोजिह्वा ( गोभी )

गोजिह्वा वातला शीता ग्राहिणी कफपित्तनुत् ।
हृद्या प्रमेहकासास्रव्रणज्वरहरा लघुः ॥ ७४ ॥

इति गोजिह्वा ( गोभी ) ।

अथ नागदमनी—

स्यान्नागदमनी व्रण्या लूतासर्पविषापहा ।

इति नागदमनी ।

अथ विरवेली—

वेल्लन्तरोऽस्रनुद्ग्राही कफकृच्छ्रानिलार्तिजित् ॥ ७५ ॥

इति विरवेली ।

अथ वन्दाकः—

वन्दाकः कफवातास्ररक्षोव्रणविषापहः ।

इति वन्दाकः ।

अथ पिण्डारुः—

पिण्डारुर्मधुरः शीतः शोफपित्तकफापहः ॥ ७६ ॥

इति पिण्डारुः ।

अथ छिक्किणी—

छिक्किका पित्तला कुष्ठकृमिवातकफापहा ।

इति छिक्किणी ।

१ ग. °सदुष्टव्रणद° ।

## अथ रोहीतकः ( रोहिडा- )

रोहीतकः सरो गुल्मयकृत्प्लीहोदरापहः ॥ ७७ ॥

इति ( रोहीतकः ) रोहिडा ।

## अथ मोचकः ( मोचरसः- )

मोचकः शीतलो ग्राही गुरुर्वृष्योऽतिसारजित् ।
प्रवाहिकामपित्तास्रकफदाहनिबर्हणः ॥ ७८ ॥

इति मोचकः ( मोचरसः ) ।

## अथाजगन्धा ( नसरी )

अजगन्धा लघू रुच्या हृद्या हृत्कफवातनुत् ।

इत्यजगन्धा ( नसरी ) ।

## अथ सैरेयकः ( कण्ठसर इति )

सैरेयकः कुष्ठवातकफपाण्डुविषास्रजित् ॥ ७९ ॥
तिक्तोष्णो मधुरः केश्यः सुस्निग्धः केशरञ्जनः ।

इति सैरेयकः ( कण्ठसर इति ) ।

## अथ गिरिकर्णीद्वयम् । ( सफली )

गिरिकर्णीद्वयं शीतं ग्रहघ्नं दंष्ट्रिनादकृत् ॥ ८० ॥
कुष्ठशूलत्रिदोषामशोथव्रणविषापहम् ।

इति गिरिकर्णीद्वयम् । ( सफली ) ।

## अथ क्षुरकः । ( तालमखाना )

क्षुरकः शीतलो वृष्यो गुरुर्वातरुजास्रजित् ॥ ८१ ॥
शोथव्रणविषातङ्ककपित्तनाशकरः सरः ।

इति क्षुरकः । ( तालमखाना ) ।

## अथ कार्पासः-

कार्पासको लघुः कोष्णो मधुरो वातनाशनः ॥ ८२ ॥
तद्बीजं वातजिद्वृष्यं स्निग्धं कफकरं गुरु ।

इति कार्पासः ।

---

१ ग. °मे दहिमा° ।

अथाऽऽरामशीतला—

आरामशीतला शीता कटुः पित्तकफास्रजित् ॥ ८३ ॥

इत्यारामशीतला ।

अथ कुकुरन्दुः ( स्थूलकुरकुदा )

कुकुरन्दुः कटुः शीतो ज्वररक्तकफापहः ।

इति कुकुरन्दुः (स्थूलकुरकुदा) ।

अथ वामी—

वामी शोथहरा कुष्ठपित्तश्लेष्मापहा सरा ॥ ८४ ॥

इति धामी ।

अथ बलामोटा—

बलामोटा श्लेष्मपित्तनुद्रणे विजयप्रदा ।

इति बलामोटा ।

अथ शरपुङ्खा—

शरपुङ्खा यकृत्प्लीहगुल्मव्रणविषापहा ॥ ८५ ॥
तिक्ता कषायकासास्रश्वासज्वरहरा लघुः ।

इति शरपुङ्खा ।

अथ मयूरशिखा—

स्यान्मयूरशिखा लघ्वी पित्तश्लेष्मातिसारजित् ॥ ८६ ॥
गर्भदा मोहिनी मेध्या कासकण्डूविषापहा ।

इति मयूरशिखा ।

अथ लक्ष्मणकन्दः—

नागवल्लीव वल्ली या रक्तबिन्द्वङ्कितच्छदा । ८७ ॥
मनुष्याकृतिमूला या लक्ष्मणेति लता मता ।
लक्ष्मणा गर्भदा शीता सरा वृष्या त्रिदोषनुत् ॥ ८८ ॥
तन्मूलं पयसा पिष्टमेकवर्णजुषस्तु गोः ।
ऋतुस्नातया पीतं स्याद्दत्वन्ते गर्भदं स्त्रियाः ॥ ८९ ॥

इति लक्ष्मणकन्दः ।

---

१ ग. कटुः स्निग्धो ज्व° । २ क. °ध धामी । ३ क. धामी । ४ क. धामी ।

अथ मांसरोहिणी-

स्यान्मांसरोहिणी वृष्या सरा दोषत्रयापहा ॥ १० ॥

इति मांसरोहिणी ।

अथोच्चटा-

या कूर्मकन्दा हयमारतुल्यैः फलच्छदाद्या ह्यतिकोच्चटा सा ।

प्रमेहजिद्वृष्यतमा क्षयघ्नी रसायनी पारदबन्धकर्त्री ॥ ११

इत्युच्चटा ।

अथास्थिसंधानकृत् ( हडसंधान )

अस्थिसंधानकृद्वृष्यो शीतो वातहरोऽस्थियुक् ।

इत्यस्थिसंधानकृत् ( हडसंधान )।

अथ रुदन्ती-

दिव्यौषधी रुदन्ती स्यात्तीर्थी चणकपत्रिका ॥ १२ ॥

ऊर्ध्वाधोवारिबिन्द्वाढ्या क्षाराम्लरससंयुता ।

सा निहन्ति प्रमेहास्रक्षयक्षण्यभ्रमज्वरान् ॥ १३ ॥

कासश्वासाग्निवैषम्यकुष्ठार्शःपाण्डुरोगनुत् ।

इति रुदन्ती ।

अथ भङ्गाशुद्धिः-

बब्बूलत्वक्कषायेण भङ्गीं संस्वेद्य शोषयेत् ।

गोदुग्धभावनां दत्त्वा शुष्कां सर्वत्र योजयेत् ॥ १४ ॥

इति भङ्गाशुद्धिः ।

अथ तस्या गुणाः-

कफानिलहरी लघुर्मदकरी च पित्तप्रदा

विमोहजठरानलप्रबलवाग्विवृद्धिप्रदा ।

ग्रहण्यतिसृतिक्षयश्वसनकासमेहापहा

रसे कटुरशीतला शयनकृच्च भङ्गा मता ॥ १५ ॥

इति भङ्गागुणाः ।

अथ दूर्वाद्वयम्-

दूर्वाद्वयं हिमं श्लेष्मविसर्पास्रविषमणुत् ।

इति दूर्वाद्वयम् ।

---

१ क. बिन्दुसा क्षा° ।

## अथ काशः—

काशः कृच्छ्राश्मदाहास्रपित्तक्षयहरो हिमः ॥ ९६ ॥

इति काशः ।

## अथ कुशः—

दर्भः कृच्छ्रास्रतृट् + + कफबस्तिगदाश्मजित् ।

इति कुशः ।

## अथ मुञ्जः—

मुञ्जो विसर्पदाहास्रकृच्छ्राक्षिगदनाशनः ॥ ९७ ॥

इति मुञ्जः ।

## अथ नलः—

नलो मूर्छार्तिदाहास्रकफपित्तविसर्पनुत् ।

इति नलः ।

## अथ वंशः—

वंशः सरो हिमः पित्तकफदाहास्रशोफजित् ॥ ९८ ॥
तत्करीरो गुरुर्भेदी श्लेष्मलो वातपित्तजित् ।
तद्यवो भेदकोऽत्युष्णः कफघ्नो वातपित्तकृत् ॥ ९९ ॥

इति वंशः ( वेणुः ) ।

## अथ यवानी ( खुरासनी जवानी )

यवानी यावनी रूक्षा ग्राहिणी मादनी गुरुः ।

इति यवानी ( खुरासनीजवानी ) ।

## अथ वृष्यः ( पोस्तं )

वृष्यो बल्यः खरस्तीक्ष्णः श्लेष्मलो वातजिद्गुरुः ॥ २०० ॥
वल्कं खसतिलस्योक्तं रूक्षं ग्राहि विशोधनम् ।
शुक्रस्तम्भकरं शीतं गलपातिमदावहम् ।

इति वृष्यः ( पोस्त ) ।

---

१ ग. °र्घ्यः श्वासकफघ्नं° । २ क. °शोषणम् ।

अथ पातालगारुडी—

पातालगारुडी वृष्या श्लेष्मला पवनापहा ॥ २०१ ॥

इति पातालगारुडी ।

इति योगतरङ्गिण्यां हरीतक्यादिगुणागुणकथनं नाम चतुस्त्रिंशस्तरङ्गः ॥ ३४ ॥

---

अथ पञ्चत्रिंशस्तरङ्गः ।

---

अथ वटः—

वटः शीतो गुरुर्ग्राही कफपित्तव्रणापहः ।

इति वटः ।

अथ पिप्पलः—

पिप्पलो दुर्जरः शीतः पित्तश्लेष्मव्रणास्रजित् ॥ १ ॥

इति पिप्पलः ।

अथ पारिसपिप्पलः—

पारिशाश्वत्थको वृष्यः स्निग्धः श्लेष्मक्रिमिप्रदः ।

इति पारिशापिप्पलः ।

अथोदुम्बरः—

उदुम्बरो हिमो वर्ण्यो गुरुः पित्तकफास्रजित् ॥ २ ॥

इत्युदुम्बरः ।

अथ काकोदुम्बरी—

काकोदुम्बरिका तद्वद्विशेषाच्छ्वित्रनाशिनी ।

इति काकोदुम्बरी ।

अथ प्लक्षः ( पिम्परी )

प्लक्षः शीतो व्रणश्लेष्मपित्तशोफविसर्पजित् ॥ ३ ॥

इति प्लक्षः ( पिंपरी ) ।

---

१ क. कृमीहरः । २ ग. °स्तम्नुत् । ३ ग. °पाण्डुनाशिनी° ।

## अथ पञ्च क्षीरिवृक्षाः—

न्यग्रोधोदुम्बराश्वत्थपारिसप्लक्षपादपाः ।
पञ्चैते क्षीरिणः प्रोक्तास्तेषां त्वक्पञ्चकं स्मृतम् ॥ ४ ॥
त्वक्पञ्चकं हिमं ग्राहि व्रणशोथविसर्पजित् ।
केचित्तु पारिशः स्थाने शिरीषं वेतसं परे ॥ ५ ॥
क्षीरिवृक्षा हिमा वर्ण्या योनिदोषव्रणापहाः ।
शोफपित्तकफास्रघ्नास्तथा भग्नास्थियोगदाः ॥ ६ ॥
तेषां पत्रं हिमं ग्राहि कफवातास्रनुल्लघु ।
तत्फलं ग्राहि शिशिरं रक्तपित्तकफापहम् ॥ ७ ॥

इति पञ्च क्षीरिवृक्षाः ।

## अथ नन्दीवृक्षः—

नन्दीवृक्षोऽश्वत्थगुणो लघूष्णो गरनुत्पुनः ।

इति नन्दीवृक्षः ।

## अथ कदम्बः—

कदम्बः शीतलः श्लेष्मपित्तरक्तगदापहः ॥ ८ ॥

इति कदम्बः ।

## अथ ककुभः कौहा—

ककुभः शीतलो श्वासक्षतक्षयविषास्रनुत् ।
प्रमेहमेहपिटकाकुष्ठपाण्डुशिरोर्तिजित् ॥ ९ ॥

इति ककुभः ( कौहा ) ।

## अथ शिरीषः—

शिरीषः शीतलो वर्ण्यो विषवीसर्पशोथजित् ।

इति शिरीषः ।

## अथाऽऽर्तगलः—

अर्गदस्तुवरः शीतो व्रणशोधनरोपणः ॥ १० ॥

इत्यार्तगलः ।

---

१ ग. °ठो भग्नः क्षु° ।

## अथ पातालगारुडी-

पातालगारुडी वृष्या श्लेष्मला पवनापहा ॥ २०१ ॥

इति पातालगारुडी ।

इति योगतरङ्गिण्यां हरीतक्यादिगुणागुणकथनं नाम चतुस्त्रिंशस्तरङ्गः ॥ ३४ ॥

---

अथ पञ्चत्रिंशस्तरङ्गः ।

---

## अथ वटः-

वटः शीतो गुरुर्ग्राही कफपित्तव्रणापहः ।

इति वटः ।

## अथ पिप्पलः-

पिप्पलो दुर्जरः शीतः पित्तश्लेष्मव्रणास्रजित् ॥ १ ॥

इति पिप्पलः ।

## अथ पारिसपिप्पलः-

पारिशाश्वत्थको वृष्यः स्निग्धः श्लेष्मकृमिप्रदः ।

इति पारिशपिप्पलः ।

## अथोदुम्बरः-

उदुम्बरो हिमो वर्ण्यो गुरुः पित्तकफास्रजित् ॥ २ ॥

इत्युदुम्बरः ।

## अथ काकोदुम्बरी-

काकोदुम्बरिका तद्वद्विशेषाच्चित्रनाशिनी ।

इति काकोदुम्बरी ।

## अथ प्लक्षः ( पिम्परी )

प्लक्षः शीतो व्रणश्लेष्मपित्तशोफविसर्पजित् ॥ ३ ॥

इति प्लक्षः ( पिंपरी ) ।

---

१ क कृमीहरः । २ ग. °कृमुत् । ३ ग. 'पाश्चित्रनाशिनी' ।

## अथ पञ्च क्षीरिवृक्षाः—

न्यग्रोधोदुम्बराश्वत्थपारिसप्लक्षपादपाः ।
पञ्चैते क्षीरिणः प्रोक्तास्तेषां त्वक्पञ्चकं स्मृतम् ॥ ४ ॥
त्वक्पञ्चकं हिमं ग्राहि व्रणशोथविसर्पजित् ।
केचित्तु पारिशः स्थाने शिरीषं वेतसं परे ॥ ५ ॥
क्षीरिवृक्षा हिमा वर्ण्या योनिदोषव्रणापहाः ।
शोफपित्तकफास्रघ्नास्तथा भग्नास्थियोगदाः ॥ ६ ॥
तेषां पत्रं हिमं ग्राहि कफवातास्रनुल्लघु ।
तत्फलं ग्राहि शिशिरं रक्तपित्तकफापहम् ॥ ७ ॥

इति पञ्च क्षीरिवृक्षाः ।

## अथ नन्दीवृक्षः—

नन्दीवृक्षोऽश्वत्थगुणो लघूष्णो गरनुत्पुनः ।

इति नन्दीवृक्षः ।

## अथ कदम्बः—

कदम्बः शीतलः श्लेष्मपित्तरक्तगदापहः ॥ ८ ॥

इति कदम्बः ।

## अथ ककुभः कौहा—

ककुभः शीतलो श्वासक्षतक्षयविषास्रनुत् ।
प्रमेहमेहपिटकाकुष्ठपाण्डुशिरोर्तिजित् ॥ ९ ॥

इति ककुभः ( कौहा ) ।

## अथ शिरीषः—

शिरीषः शीतलो वर्ण्यो विषवीसर्पशोथजित् ।

इति शिरीषः ।

## अथाऽऽर्तगलः—

अर्गदस्तुवरः शीतो व्रणशोधनरोपणः ॥ १० ॥

इत्यार्तगलः ।

---

१ प. °लो भमः ध° ।

अथ वेतसः—

वेतसः शीतलो दाहशोफार्शोयोनिरुक्श्रमणुत् ।
हन्ति वीसर्पकृच्छ्राश्रपित्तास्मरिकफानलान् ॥ ११ ॥

इति वेतसः ।

अथ जलवेतसः—

जलजो वेतसः शीतः संग्राही वातकोपनः ।

इति जलवेतसः ।

अथ वञ्जुलः—

वञ्जुलो वेतसगुणो विशेषाद्विषनाशनः ॥ १२ ॥

इति वञ्जुलः ।

अथ श्लेष्मान्तकः ( ल्हसोडावेवहारः )

श्लेष्मान्तको विषस्फोटव्रणवीसर्पकुष्ठनुत् ।
केश्योष्णस्तत्फलं वृष्यं वातपित्तक्षयास्रजित् ॥ १३ ॥

इति श्लेष्मान्तकः ( ल्हसोडावेवहारः ) ।

अथ पीलु—

पीलूष्णं दीपनं भेदि रक्तपित्तकरं लघु ।
गुल्मार्शःप्लीहवातास्रकफहारि रसायनम् ॥ १४ ॥

इति पीलु ।

अथ शाकवृक्षः—

शाकः श्लेष्मानिलार्शोघ्नो गर्भसंधानदो हिमः ।

इति शाकवृक्षः ।

अथ शालवृक्षः—

शालो ग्राही व्रणश्लेष्मदग्धरुग्विषनुद्धिमः ॥ १५ ॥

इति शालवृक्षः ।

अथ तमालः—

तमालस्तद्गुणः शोथदाहविस्फोटहृद्धिमः ।

इति तमालः ।

---

१ ग. °लास्रजो ।

अथ खदिरः—

खदिरः शीतलो दन्त्यः कृमिमेहज्वरव्रणनुत् ॥ १६ ॥
चित्रशोथामपित्तास्रपाण्डुकुष्ठकफापहः।
निर्यासस्तस्य मधुरो बल्यः शुक्रविवर्धनः ॥ १७ ॥
सारस्तु खादिरो व्रण्यो मुखरोगकफास्रजित्।
शीतलो मेहपित्तास्रकुष्ठकण्डूविषापहः ॥ १८ ॥

इति खदिरः।

अथेरिमेदः—

इरिमेदः कषायोष्णो मुखदन्तगदास्रजित्।
हन्ति कण्डूविषश्लेष्मकृमीन्दुष्टगदापहः ॥ १९ ॥

इतीरिमेदः।

अथ बब्बूलः—

बब्बूलः कफनुद्ग्राही कृमिकुष्ठविषापहः।

इति बब्बूलः।

अथ बीजकः ( विजइसारः )।

बीजकः कुष्ठवीसर्पमेहश्वित्रगुडकृमीन् ॥ २० ॥
हन्ति श्लेष्मास्रपित्तानि हिमः केश्यो रसायनः।

इति बीजकः ( विजइसारः )।

अथ तिनिसः, अतिमुक्तकम्—

तिनिसः श्लेष्मपित्तास्रमेदोदुष्टप्रमेहजित् ॥ २१ ॥

इति तिनिसः, अतिमुक्तकम्।

अथ भूर्जः—

भूर्जो भूतग्रहश्लेष्मकर्णरुग्रक्तपित्तजित्।

इति भूर्जः।

अथ पलाशः—

पलाशो दीपनो वृष्यः सरोष्णव्रणगुल्मजित् ॥ २२ ॥
भग्नसंधानकृद्दोषग्रहण्यर्शःकृमिप्रणुत्।
तत्पुष्पं कफपित्तास्रकृच्छ्रजिद्ग्राहि शीतलम् ॥ २३ ॥

---

१ ग. °ज्वरास्र° ।

फलं कटूष्णं मेहार्शःक्रिमिवातकफापहम् ।

इति पलाशः ।

अथ धवः—

धवः शीतः प्रमेहार्शःपाण्डुपित्तकफापहः ॥ २४ ॥

इति धवः ।

अथ धन्वनः ( धामिनी )

धन्वनः कफपित्तास्रकासजित्तुवरो लघुः ।

इति धन्वनः ( धामिनी । )

अथ सर्जः—

सर्जो वर्ण्यः कफस्वेदमलपित्तकृमीञ्जयेत् ॥ २५ ॥

इति सर्जः ।

अथ वरणवृक्षः—

वरणः श्लेष्मलो मेदी पित्तलः कृच्छ्रमारुतान् ।
निहन्ति गुल्मवातास्रकृमीनुष्णोऽग्निदीपनः ॥ २६ ॥

इति वरणवृक्षः ।

अथ जिङ्गिणी—

जिङ्गिणी व्रणहृद्रोगवातातीसारहृत्कटुः ।
उष्णस्तस्यास्तु निर्यासो नस्याद्बाहुव्यथापहः ॥ २७ ॥

इति जिङ्गिणी ।

अथ शल्लकी ( सालइ )

शल्लकी व्रणपित्तास्रश्लेष्मपक्वातिसारजित् ।

इति शल्लकी ( सालइ ) ।

अथेङ्गुदी ( इंगुरा )

इङ्गुदी कुष्ठभूताद्विग्रहव्रणविषक्रिमीन् ॥ २८ ॥
हन्त्युष्णः श्वित्रशूलघ्नस्तत्फलं कफवातजित् ।

इतीङ्गुदी ( इंगुरा ) ।

अथ कदम्भरः ( करहरी )

कदम्भरः प्रमेहास्रनाडीव्रणविषक्रिमीन् ॥ २९ ॥

हन्त्युष्णः कफकुष्ठघ्नस्तत्फलं कटु शुक्रकृत् ।
निर्यासोऽस्य गुरुर्वृष्यो बलकृद्वातनाशनः ॥ ३० ॥

इति कटंभरः ( करहरी ) ।

### अथ मोपकः—

मोपकः कफवातघ्नो ग्राही गुल्मविपाक्रिमीन् ।
हन्त्युष्णो बस्तिहृत्कण्डूस्तत्पुष्पं कफपित्तजित् ॥ ३१ ॥
निर्यासोऽस्य गुरुर्वृष्यो बलकृत्पित्तनाशनः ।
क्षारोऽस्य वह्निकृद्गुल्मप्लीहानाहहरः परः ॥ ३२ ॥

इति मोपकः ।

### अथ पारिभद्रः—

पारिभद्रः कृमिश्लेष्ममेदःशोथानिलापहः ।

इति पारिभद्रः ।

### अथ शाल्मली—

शाल्मली शीतला वृष्या ग्राहिणी रक्तपित्तनुत् ॥ ३३ ॥
रसायनकरा स्निग्धा तत्पुष्पं ग्राहि पित्तजित् ।

इति शाल्मली ।

### अथ नन्दीवृक्षः—

तुणी ग्राही हिमो वृष्यो व्रणकुष्ठास्रपित्तहा ॥ ३४ ॥

इति नन्दीवृक्षः ।

### अथ सप्तपर्णः ( सातवण )—

सप्तपर्णो व्रणश्लेष्मवातकुष्ठहरः सरः ।

इति सप्तपर्णः ( सातवण ) ।

### अथ हारिद्रकः—

हारिद्रकः कफहरो व्रणशोधनरोपणः ॥ ३५ ॥

इति हारिद्रकः ।

### अथ करञ्जः—

करञ्जकः कटुस्तीक्ष्णो वीर्योष्णो योनिरोगजित् ।
कुष्ठोदावर्तगुल्मार्शोव्रणक्रिमिकफापहः ॥ ३६ ॥

---

१ ग. °ले वफशु° । २ ग. °स्य परं वृष्यः शोषपित्तानिलापहः । क्षा° ।

तत्फलं कृमिवातघ्नं मेहार्शःशूलकुष्ठनुत् ।
तत्पत्रं कफवातार्शःकृमिशोफहरं सरम् ॥ ३७ ॥
तन्मूलं कुष्ठवीसर्पदन्तशैथिल्यपाण्डुनुत् ।
तत्पुष्पं कृमिकण्डूघ्नं वमिशूलहृदर्तिजित् ॥ ३८ ॥

इति करञ्जः ।

अथ बृहत्करञ्जः—

बृहत्करञ्जो वातामकुष्ठदन्तरुजो जयेत् ।

इति बृहत्करञ्जः ।

अथ कराञ्जिका—

कराञ्जिकोष्णा वातार्शःकृमिकुष्ठप्रमेहनुत् ॥ ३९ ॥

इति कराञ्जिका ।

अथ तिरिगिच्छिः—

तिरिगिच्छिर्बलासार्शःपित्तशोथक्रिमीञ्जयेत् ।

इति तिरिगिच्छिः ।

अथ शमी—

शमी शीता लघुः श्वासकुष्ठार्शःकफहृत्सरा ॥ ४० ॥
तत्फलं पित्तलं रूक्षं मेध्यं केशविनाशनम् ।

इति शमी ।

अथ शिरीपिका—

ठिण्ठिणी कफकुष्ठार्शःसंनिपातविषापहा ॥ ४१ ॥

इति शिरीपिका ।

अथारिष्टकः ( रीठा )

अरिष्टकस्त्रिदोषघ्नो गर्भरोगग्रहापहः ।

इत्यरिष्टकः ( रीठा ) ।

अथ शिंशिपा ( सीसवा )

शिंशिपोष्णा हरेत्कुष्ठमेहाश्विन्नवमिक्रिमीन् ॥ ४२ ॥
वस्तिरुग्व्रणदाहास्रबलासान्गर्भपातिनी ।

इति शिंशिपा ( सीसवा ) ।

---

१ °ठं कफवा° । २ ग. °पत्र व्रणो गर्भग्न° । ३ हरत्युष्णं महार्श मु व° ।

## अथागस्त्यवृक्षः—

अगस्त्यः पित्तकफजिच्चातुर्थिकहरो मतः ।
तत्पुष्पं पीनसश्लेष्मपित्तरक्तविनाशनम् ॥ ४३ ॥

इत्यगस्त्यवृक्षः ।

इति योगतरङ्गिण्यां वटादिवनसंतिगुणकथनं नाम
पञ्चत्रिंशत्तरङ्गः ॥ ३५ ॥

---

अथ षट्त्रिंशत्तरङ्गः ।

---

## अथ शुण्ठ्यादिगुणकथनम्—

शुण्ठी वृष्याऽऽमवातघ्नी पाचनी कटुका लघुः ।
स्निग्धोष्णा मधुरा पाके कफवातविबन्धनुत् ॥ १ ॥
रुच्या स्वर्या वमिश्वासकासशूलहृदामयान् ।
हन्ति श्लीपदशोफार्शआनाहोदरमारुतान् ॥ २ ॥
सा भृष्टा सैन्धवोपेता त्रिदोषघ्नाऽऽमनुत्परम् ।
गुडेनार्शोविबन्धघ्नी शोफवातविकारजित् ॥ ३ ॥
तक्रेणाऽऽमं पाचयित्वा पयसा रेचयत्यपि ।

इति शुण्ठी ।

## अथाऽऽर्द्रकम्—

आर्द्रकं नागरगुणं भेदनं दीपनं गुरु ॥ ४ ॥
तदम्लसैन्धवोपेतं विशेषाद्दीपनं परम् ।

इत्यार्द्रकम् ।

## अथ मरिचगुणाः—

मरिचं कटुकं तीक्ष्णं दीपनं कफवातनुत् ॥ ५ ॥
उष्णं पित्तकरं रूक्षं श्वासशूलकृमीञ्जयेत् ।
विषवेगहरं छर्दिच्छेदि कुष्ठव्रणापहम् ॥ ६ ॥

---

१ गं, बन्धामशो° ।

तथार्द्रं मधुरं पाके नात्युष्णं कटुकं गुरु ।
किंचित्तीक्ष्णगुणं श्लेष्मप्रसेकि स्यादपित्तलम् ॥ ७ ॥
इति मरिचगुणाः ।

## अथ पिप्पली—

पिप्पली दीपनी वृष्या स्वादुपाका रसायनी ।
अनुष्णा कटुका स्निग्धा कफवातहरा लघुः ॥ ८ ॥
पित्तला रेचनी हन्ति श्वासकासोदरज्वरान् ।
कुष्ठप्रमेहगुल्मार्शःप्लीहशूलाममारुतान् ॥ ९ ॥
आर्द्रा कफप्रदा स्निग्धा शीतला मधुरा गुरुः ।
इति पिप्पली ।

## अथ त्र्यूषणम्—

विश्वोपकुल्यामरिचैस्त्र्यूषणं कथितं बुधैः ॥ १० ॥
त्र्यूषणं दीपनं हन्ति कासश्वासत्वगामयान् ।
गुल्ममेहकफस्थौल्यमेदःश्लीपदपीनसान् ॥ ११ ॥
इति त्र्यूषणम् ।

## अथ पिप्पलीमूलम्—

दीपनं पिप्पलीमूलं कटूष्णं पाचनं लघु ।
रूक्षं पित्तकरं भेदि कफवातोदरापहम् ॥ १२ ॥
इति पिप्पलीमूलम् ।

## अथ चतुरूषणम्—

त्र्यूषणं ग्रन्थिकयुतं जायते चतुरूषणम् ।
चतुरूषणमाख्यातं गुणैस्त्र्यूषणवद्बुधैः ॥ १३ ॥
कफाग्निमान्द्यविष्टम्भि रुचिपीनसकासनुत् ॥ १४ ॥
इति चतुरूषणम् ।

## अथ चव्यम्—

पिप्पलीमूलवच्चव्यं विशेषाद्गुदजापहम् ।
इति चव्यम् ।

अथ गजपिप्पली—

गजकृष्णा कटुर्वातश्लेष्मनुद्वह्निवर्धिनी ॥ १५ ॥
उष्णा निहन्त्यतीसारश्वासकण्ठामयक्रिमीन् ।

इति गजपिप्पली ।

अथ चित्रकद्वयम्—

चित्रकः कटुकः पाके वह्निकृत्पाचनो लघुः ॥ १६ ॥
रूक्षोष्णो ग्रहणीकुष्ठशोफार्शःक्रिमिकासजित् ।
श्लेष्मानिलहरो ग्राही तच्छाकं श्लेष्मपित्तनुत् ॥ १७ ॥
स कृष्णो हेमदः कायसिद्धिश्रीदो ग्रहापहः ।

इति चित्रकद्वयम् ।

अथ पञ्चकोलम्—

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ॥ १८ ॥
पञ्चकोलं कफानाहगुल्मशूलारुचीर्जयेत् ।

इति पञ्चकोलम् ।

अथ षडूषणम्—

पञ्चकोलं समरिचं षडूषणमुदीर्यते ॥ १९ ॥
पञ्चकोलगुणं तत्तु विशेषाद्वह्निवर्धनम् ।

इति षडूषणम् ।

अथ शतपुष्पा बृहच्छतपुष्पा च—

शतपुष्पा लघुस्तीक्ष्णा दीपनी पित्तकृत्कटुः ॥ २० ॥
उष्णा ज्वरानिलश्लेष्मव्रणशूलाक्षिरोगजित् ।
अपरा तद्गुणा प्रोक्ता विशेषाद्योनिशूलनुत् ॥ २१ ॥

इति शतपुष्पा बृहच्छतपुष्पा च ।

अथ मेथिका—

मेथिका दीपनी हृद्या बद्धविट्क्रिमिशुक्रनुत् ।
रूक्षोष्णा कफनुद्वान्तिहरी पित्तकरी गुरुः ॥ २२ ॥

---

१ ग. °मत्राकाय° । २ क. 'तद्दाकं° । ३ क. °कृता । रू° ।

तदार्द्रं मधुरं पाके नात्युष्णं कटुकं गुरु ।
किंचित्तीक्ष्णगुणं श्लेष्मप्रसेकि स्यादपित्तलम् ॥ ७ ॥

इति मरिचगुणाः ।

## अथ पिप्पली—

पिप्पली दीपनी वृष्या स्वादुपाका रसायनी ।
अनुष्णा कटुका स्निग्धा कफवातहरा लघुः ॥ ८ ॥
पित्तला रेचनी हन्ति श्वासकासोदरज्वरान् ।
कुष्ठप्रमेहगुल्मार्शःप्लीहशूलाममारुतान् ॥ ९ ॥
आर्द्रा कफप्रदा स्निग्धा शीतला मधुरा गुरुः ।

इति पिप्पली ।

## अथ त्र्यूषणम्—

विश्वोपकुल्यामरिचैस्त्र्यूषणं कथितं बुधैः ॥ १० ॥
त्र्यूषणं दीपनं हन्ति कासश्वासत्वगामयान् ।
गुल्ममेहकफस्थौल्यमेदश्लीपदपीनसान् ॥ ११ ॥

इति त्र्यूषणम् ।

## अथ पिप्पलीमूलम्—

दीपनं पिप्पलीमूलं कटूष्णं पाचनं लघु ।
रूक्षं पित्तकरं भेदि कफवातोदरापहम् ॥ १२ ॥

इति पिप्पलीमूलम् ।

## अथ चतुरूषणम्—

त्र्यूषणं ग्रन्थिकयुतं जायते चतुरूषणम् ।
चतुरूषणमाख्यातं गुणैस्त्र्यूषणवद्बुधैः ॥ १३ ॥
कफाग्निमान्द्यविष्टम्भि रुचिपीनसकासनुत् ॥ १४ ॥

इति चतुरूषणम् ।

## अथ चव्यम्—

पिप्पलीमूलवच्चव्यं विशेषाद्गुदजापहम् ।

इति चव्यम् ।

अथ गजपिप्पली—

गजकृष्णा कटुर्वातश्लेष्मनुद्वह्निवर्धिनी ॥ १५ ॥
उष्णा निहन्त्यतीसारश्वासकण्ठामयक्रिमीन् ।

इति गजपिप्पली ।

अथ चित्रकद्वयम्—

चित्रकः कटुकः पाके वह्निकृत्पाचनो लघुः ॥ १६ ॥
रूक्षोष्णो ग्रहणीकुष्ठशोफार्शःक्रिमिकासजित् ।
श्लेष्मानिलहरो ग्राही तच्छार्क श्लेष्मपित्तनुत् ॥ १७ ॥
स कृष्णो हेमदः कायसिद्धिश्रीदो ग्रहापहः ।

इति चित्रकद्वयम् ।

अथ पञ्चकोलम्—

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ॥ १८ ॥
पञ्चकोलं कफानाहगुल्मशूलारुचीर्जयेत् ।

इति पञ्चकोलम् ।

अथ षडूषणम्—

पञ्चकोलं समरिचं षडूषणमुदीर्यते ॥ १९ ॥
पञ्चकोलगुणं तत्तु विशेषाद्वह्निवर्धनम् ।

इति षडूषणम् ।

अथ शतपुष्पा बृहच्छतपुष्पा च—

शतपुष्पा लघुस्तीक्ष्णा दीपनी पित्तकृत्कटुः ॥ २० ॥
उष्णा ज्वरानिलश्लेष्मव्रणशूलाक्षिरोगजित् ।
अपरा तद्गुणा प्रोक्ता विशेषाद्योनिशूलनुत् ॥ २१ ॥

इति शतपुष्पा बृहच्छतपुष्पा च ।

अथ मेथिका—

मेथिका दीपनी हृद्या वद्धविट्क्रिमिशुक्रनुत् ।
रूक्षोष्णा कफनुद्वान्तिहरी पित्तकरी गुरुः ॥ २२ ॥

---

१ ग. °मयाक्राय°। २ क. 'तद्द्दक°। ३ क. °कला। रू°।

तत्फलं कटुकं पाके रसे च वमिकासजित् ।
श्लेष्मानिलविकारघ्नी जीर्णज्वरजिदग्निकृत् ॥ २३ ॥

इति मेथिका ।

## अथाहित्थः (चंदसूर—)

अहित्थोऽल्पगुणस्तस्माद्विशेषाद्वाजिनां हितः ।
वातशल्यरुगानाहकासदेहगुरुत्वजित् ॥ २४ ॥

इत्यहित्थः । चंदसूर इति कान्यकुब्जभाषा ।

## अथाजमोदा—

अजमोदा कटुस्तीक्ष्णा दीपनी कफवातजित् ।
उष्णा विदाहिनी हृद्या वृष्या बद्धमला लघुः ॥ २५ ॥
नेत्रामयकृमिच्छर्दिहिध्मावस्तिरुजो जयेत् ।

इत्यजमोदा ।

## अथ श्वेतकृष्णजीरकं बाष्पिका च—

जीरकत्रितयं रूक्षं कटूष्णं दीपनं लघु ॥ २६ ॥
संग्राहि पित्तलं मेध्यं गर्भाशयविशुद्धिकृत् ।
चक्षुष्यं पवनाध्मानगुल्मच्छर्दिमलासजित् ॥ २७ ॥

इति श्वेतकृष्णजीरकं बाष्पिका च ।

## अथ जवानी—

जवानी पाचनी रुच्या तीक्ष्णोष्णा कटुका लघुः ।
वातश्लेष्मोदरानाहगुल्मशूलकृमीञ्जयेत् ॥ २८ ॥

इति जवानी ।

## अथ वौहारः—

वौहारस्तद्गुणः प्रोक्तो विशेषात्कृमिनाशनः ।
इति वौहारः ' किरमिन ' ' अजवान ' ।

जवानीति भाषा ।

## अथाजगन्धा—

अजगन्धा कटुस्तीक्ष्णा रूक्षा हृद्याऽग्निदीपनी ॥ २९ ॥

---

१ ग. चौहा° । २ ग. चौहा° ।

दृष्टिमान्द्यप्रदा लघ्वी शुक्रवातकफापहा ।
ममरीति भाषा । इत्यजगन्धा ।

अथ वचा—

वचोष्णा कटुका तिक्ता वामनी स्वरवह्निकृत् ॥ ३० ॥
अपस्मारकफोन्मादभूतशूलानिलाञ्जयेत् ।
बुद्धिमेधास्मृतिप्रौढिवाक्पटुत्वप्रदायिनी ॥ ३१ ॥
इति वचा ।

अथ हपुषा—

हपुषा दीपनी तिक्ता कटूष्णा तुवरा लघुः ।
पित्तोदरसमीरार्शोग्रहणीगुल्मशूलनुत् ॥ ३२ ॥
इति हपुषा शेरणीति भाषा ।

अथ विडङ्गम्—

विडङ्गं कटु तीक्ष्णोष्णं रूक्षं वह्निकरं लघु ।
शूलाध्मानोदरश्लेष्मकृमिवातविबन्धनुत् ॥ ३३ ॥
इति विडङ्गम् ।

अथ धान्यकम्—

धान्याकं तुवरं स्निग्धमवृष्यं मूत्रलं लघु ।
हृद्यं रुच्यं बद्धविट्कं स्वादुपाकं त्रिदोषनुत् ॥ ३४ ॥
पाचनं श्वासकासघ्नं तृष्णार्शःकृमिदाहजित् ।
तदार्द्रं तद्गुणं स्वादु विशेषात्पित्तनाशनम् ॥ ३५ ॥
इति धान्यकम् ।

अथ हिङ्गुपत्री—

हिङ्गुपत्रीद्वयं हृद्यं तीक्ष्णोष्णं पाचनं कटु ।
हृद्बस्तिरुग्वि[ब]न्धार्शःश्लेष्मगुल्मानिलापहम् ॥ ३६ ॥
इति हिङ्गुपत्री ।

अथ हिङ्गु—

हिङ्गूक्तं पाचनं रुच्यं तीक्ष्णोष्णं कफवातनुत् ।
शूलगुल्मोदरानाहकृमिजित्पित्तवर्धनम् ॥ ३७ ॥
इति हिङ्गु ।

१ ग. °षा हौहवेरेतिभा° । २ ग. °कासासत्° ।

## अथ वंशरोचना—

वंशजा बृंहणी वृष्या शीतला मधुरा जयेत् ।
तृष्णां क्षयज्वरश्वासकासपित्तास्रकामलाः ॥ ३८ ॥

इति वंशरोचना ।

## अथ सैन्धवम्—

सैन्धवं मधुरं पाके दीपनं शीतलं लघु ।
चक्षुष्यं पाचनं स्निग्धं वृष्यं दोषत्रयापहम् ॥ ३९ ॥

इति सैन्धवम् ।

## अथ सौवर्चलम्—

सौवर्चलं वह्निकरं कटूष्णं विशदं लघु ।
उद्गारशुद्धिदं सूक्ष्मं विबन्धानाहशूलजित् ॥ ४० ॥

इति सौवर्चलम् ।

## अथ विडलवणम्—

विडं लघूष्णं विष्टम्भि शूलहृद्गौरवारुचीः ।
हन्त्यानाहकफौ सूक्ष्ममधोवातानुलोमनम् ॥ ४१ ॥

इति विडलवणम् ।

## अथ सामुद्रलवणम्—

सामुद्रं दीपनं स्वादु नात्युष्णं भेदनं लघु ।
श्लेष्मलं वातनुत्तिक्तमरूक्षं नातिपित्तलम् ॥ ४२ ॥

इति सामुद्रलवणम् ।

## अथ भूमिजलवणम्—

औद्भिदं रक्तलं सूक्ष्मं लघु वातानुलोमनम् ।

इति भूमिजलवणम् ।

## अथ गडलवणम्—

गडाख्यं लघु वातघ्नमत्युष्णं भेदि मूत्रलम् ॥ ४३ ॥

इति गडलवणम् ।

---

१ ग. °नं कटु । श्लें° । २ क. °मनुद्रातलं तिक्° ।

## अथौखरम् ( ओपम् )

औखं(पं) गुरु कटु स्निग्धं श्लेष्मलं वातनाशनम् ।
इत्यौखरम् ( औपम् ) खारीति भाषा ।

## अथ काचलवणम्—

काचं दीपनमत्युष्णं रक्तपित्तविवर्धनम् ॥ ४४ ॥
इति काचलवणम् ।

## अथ यवक्षारः—

यवक्षारोऽग्निकृद्वातश्लेष्मश्वासगलामयान् ।
आमार्शोग्रहणीगुल्मयकृत्प्लीहरुजो जयेत् ॥ ४५ ॥
इति यवक्षारः ।

## अथ स्वर्जिका—

स्वर्जिकाऽल्पगुणा तस्माद्विशेषाद्गुल्मशूलनुत् ।
इति स्वर्जिका ।

## अथ टङ्कणः ( सोहागा )

टङ्कणोऽग्निकरो रूक्षः कफघ्नो वातपित्तकृत् ॥ ४६ ॥
विषवीर्यहरो हेमद्रावको द्विविधोऽपि सः ।
इति टङ्कणः ( सोहागा ) ।

## अथ सोमक्षारः—

सोमक्षारो रजतकृद्व्रणघ्नश्च रसायनः ॥ ४७ ॥
क्लेदी विदारणः पाकी वह्निकृत्त्रिविधोऽपि सः ।
इति सोमक्षारः ।

## अथ लवणक्षारः ( लोणाखार )

लवणक्षार उदितः शूलगुल्मोदरापहः ॥ ४८ ॥
इति लवणक्षारः । ( लोणाक्षार ) ।

## अथ सर्वे क्षाराः—

पलाशतिलनालश्च(श्व)दंष्ट्राकदलिसंभवाः ।
अपामार्गार्कसेहुण्डमापैरण्डाटरूपजाः ॥ ४९ ॥

क्षारा वह्निकराः सर्वे पाचना भेदिदारणाः ।
लङ्घिताः क्लेदिनस्तीक्ष्णाः शुक्रौजोदृष्टिनाशनाः ॥ ५० ॥
रक्तपित्तकरा घ्नन्ति विबन्धानाहपीनसान् ।
यकृत्प्लीहबलासामगुल्मार्शोग्रहणीक्रिमीन् ॥ ५१ ॥

इति सर्वे क्षाराः ।

## अथ चिञ्चाक्षारः—

चिञ्चाक्षारो विशेषेण तीक्ष्णो वह्निकरो लघुः ।

इति चिञ्चाक्षारः ।

इति योगतरङ्गिण्यां शुण्ठ्यादिगुणकथनं नाम षट्त्रिंशस्तरङ्गः ॥ ३६ ॥

---

अथ सप्तत्रिंशस्तरङ्गः ।

---

## अथ कर्पूरादिगुणकथनम्—

### कर्पूरः—

कर्पूरः शीतलो वृष्यश्चक्षुष्यो लेखनो लघुः ।
कफदाहास्यवैरस्यमेदःशोषविषापहः ॥ १ ॥

इति कर्पूरः ।

## अथ कस्तूरीद्वयम्—

कस्तूरी शुक्ला गुर्वी कटुका कफशीतजित् ।
उष्णा हन्ति विषच्छर्दिशोषदौर्गन्ध्यमारुतान् ॥ २ ॥
लता कस्तूरिका तद्वन्नेत्र्या शीता लघुः कटुः ।

इति कस्तूरीद्वयम् ।

## अथ जवादिमार्जारी—

मार्जारी कान्तिमाधत्ते चक्षुष्या कफवातजित् ॥ ३ ॥
दौर्गन्ध्यनाशिनी चोष्णा सुगन्धिः शुक्ला लघुः ।

इति जवादिमार्जारी ।

## अथ श्वेतचन्दनम्—

चन्दनं शीतलं रूक्षं तिक्तमाह्लादनं लघु ॥ ४ ॥

हृद्यं वर्ण्यं विषश्लेष्मतृष्णादाहास्रपित्तनुत् ।
रसे तिक्तं सितं घृष्टं विदीर्णं रक्तदीधिति ॥ ५ ॥
सुकोटरं सुसौरभ्यं शुद्धं श्रीखण्डमुच्यते ।

इति श्वेतचन्दनम् ।

## अथ रक्तचन्दनम्—

रक्तसारं गुरु स्वादु च्छर्दितृष्णास्रपित्तजित् ॥ ६ ॥
रक्तनेत्रहितं वृष्यं ज्वरव्रणविषापहम् ।

इति रक्तचन्दनम् ।

## अथ मलयाद्रिचन्दनम्—

कालीयकं पीतसारं पीतं नारायणप्रियम् ॥ ७ ॥
कालीयकं रक्तगुणं विशेषाद्व्यङ्गनाशनम् ।

इति मलयाद्रिचन्दनम् ।

## अथागुरुः—

कृष्णागुरूष्णं कर्णाक्षिरोगनुत्पित्तलं लघु ॥ ८ ॥
वातश्लेष्महरं वर्ण्यं ह्लादनं शीतनाशनम् ।

इत्यगुरुः ।

## अथागरुसत्त्वम्—

तद्गुणस्त्वगुरुस्नेहो विशेषाच्छुक्रवर्धनः ॥ ९ ॥
अहर्षग्लानिदौर्गन्ध्यशैत्यालक्ष्मीरुजो जयेत् ।

इत्यगरुसत्त्वम् ।

## अथ कुङ्कुमं केसरम्—

कुङ्कुमं कटुकं हिध्माशिरोरुग्व्रणजन्तुजित् ॥ १० ॥
उष्णं हास्यकरं वर्ण्यं व्यङ्गदोषत्रयापहम् ।
काश्मीरदेशे संजातं कौङ्कुमं कुसुमं भवेत् ॥ ११ ॥
सूक्ष्मकेसरसंरक्तं पद्मगन्धि तदुत्तमम् ।

इति कुङ्कुमं केसरम् ।

---

१ ग. °ष्टं किंचिदार° । २ क. °द् । तिक्तं ने° । ३ क. पुस्तके कौसुम्भं कु° । इति पाठान्तरम् ।

### अथ सिह्लकः शिलारसः—

सिह्लकः कुष्ठकण्डूघ्नः स्निग्धोष्णः शुक्रकान्तिकृत् ॥ १२ ॥
वातश्लेष्महराह्लादी दौर्गन्ध्यापस्मृती जयेत् ।

इति सिह्लकः शिलारसः ।

### अथैलावालुकम्—

एलालु शीतलं हन्ति कण्डूकुष्ठविषक्रिमीन् ॥ १३ ॥
तृड्छर्दिकफपित्तास्रहृन्मूत्रगदजिल्लघु ।

इत्येलावालुकम् ।

### अथ जातीफलम् ( जाईफलम् )—

जातीफलं लघु स्वर्यं हृद्यं दीपनपाचनम् ॥ १४ ॥
उष्णं कफानिलच्छर्दिक्रिमिपीनसकासजित् ।

इति जातीफलम् ( जाईफलम् ) ।

### अथ जातीपत्री—

जातीपत्री लघूष्णा स्यात्कफक्रिमिविषापहा ॥ १५ ॥
सुस्निग्धा स्तम्भिनी शुक्रबलवर्णाग्निबोधिनी ।

इति जातीपत्री ।

### अथ लवङ्गम्—

लवङ्गं लघु चक्षुष्यं हृद्यं दीपनपाचनम् ॥ १६ ॥
शूलानाहकफश्वासकासच्छर्दिक्षयापहम् ।

इति लवङ्गम् ।

### अथ कङ्कोलम्—

कक्कोलमुष्णं हृद्रोगकफवाताग्निमान्द्यजित् ॥ १७ ॥

इति कक्कोलम् ।

### अथ स्थूलैला—

स्थूलैला रोचनी तीक्ष्णा लघूष्णा कफपित्तजित् ।
हृल्लासविषवस्त्यास्यशिरोरुग्वमिकासनुत् ॥ १८ ॥

इति स्थूलैला ।

अथ सूक्ष्मैला—

एला सूक्ष्मा कफश्वासकासार्शोमूत्रकृच्छ्रजित् ।
सूक्ष्मैला तु विशिष्टा स्यात्स्थूलैलातो रुचिप्रदा ॥ १९ ॥

इति सूक्ष्मैला ।

अथ त्वचम् ( तज )—

त्वचं लघूष्णं कटुकं विशदं स्वादु पित्तलम् ।
हृद्वस्तिरोगवातार्शःपीनसक्रिमिशुक्रनुत् ॥ २० ॥

इति त्वचम् ( तज ) ।

अथ पत्रम् ( पत्रज )—

पत्रमुष्णं लघु श्लेष्महृल्लासार्शोनिलापहम् ।

इति पत्रम् ( पत्रज ) ।

अथ नागकेसरम्—

नागकेसरकं रूक्षमुष्णं लघ्वामपाचनम् ॥ २१ ॥
दौर्गन्ध्यकुष्ठवीसर्पकफपित्तविषापहम् ।

इति नागकेसरम् ।

अथ त्रिजातचतुर्जाते—

एलादित्रयमुद्दिष्टं त्रिजातं श्लेष्मवातजित् ॥ २२ ॥
तन्नागकेसरयुतं चतुर्जातं त्रिदोषजित् ।

इति त्रिजातचतुर्जाते ।

अथ तालीसपत्रम्—

तालीसं लघु तच्छ्रेष्ठं श्वासकासकफानिलान् ॥ २३ ॥
निहन्ति रुच्यं गुल्मामवह्निमान्द्यक्षयामयान् ।

इति तालीसपत्रम् ।

अथ श्रीवासः—

श्रीवेष्टकः श्लेष्मवातमूर्धाक्षिगदनुत्सरः ॥ २४ ॥

इति श्रीवासः ।

---

१ म. °हमार्शोघ्न° ।

अथ चीडः—

सरलः कर्णकण्ठाक्षिगदघ्नोष्णो लघुः कटुः ।

इति चीडः ।

अथ वालकम् ( वाळा )—

वालकं शीतलं सूक्ष्मं लघु दीपनपाचनम् ॥ २५ ॥

रक्तपित्तज्वरश्लेष्मदाहतृष्णाव्रणापहम् ।

इति वालकम् ( वाळा ) ।

अथ मांसी ( जटामांसी )—

मांसी हिमा त्रिदोषघ्नी दाहवीसर्पकुष्ठनुत् ॥ २६ ॥

इति मांसी ( जटामांसी ) ।

अथोशीरम्—

उशीरं पाचनं शीतं स्तम्भनं कफपित्तजित् ।

तृष्णास्रविषवीसर्पदाहकृच्छ्रव्रणापहम् ॥ २७ ॥

इत्युशीरम् ।

अथ कौन्ती—

रेणुका पित्तला मेध्या वह्निकृद्गर्भपातिनी ।

इति कौन्ती ।

अथ प्रियङ्गुः—

प्रियङ्गुः शीतलो वान्तिदाहपित्तज्वरास्रजित् ॥ २८ ॥

इति प्रियङ्गुः ।

अथ परिपेलम् ( परिपेलनु )—

परिपेलं हिमं कण्डूकुष्ठास्रकफपित्तजित् ।

इति परिपेलम् ।

अथ शैलेयम्—

शैलेयं शीतलं हृद्यं कफपित्तहरं लघु ॥ २९ ॥

इति शैलेयम् ।

अथोशीरभेदः—

लामज्जकं कृच्छ्रदाहशोषदोषत्रयास्रजित् ।

इत्युशीरभेदः ।

---

१ ग. °कं हिमं क° । २ ग. °हरो° ।

## अथ कुन्दुरुः—

कुन्दुरुः स्वेदपवनश्लेष्मभग्नज्वरापहः ॥ ३० ॥

इति कुन्दुरुः ।

## अथ गुग्गुलुः—

महिषाक्षो महानीलः कुमुदः पद्म एव च ।
हिरण्यः पञ्चमो ज्ञेयो गुग्गुलोः पञ्च जातयः ॥ ३१ ॥
भृङ्गाञ्जनसवर्णस्तु महिषाख्य इति स्मृतः ।
महानीलस्तु विज्ञेयो नीलीरससमद्युतिः ॥ ३२ ॥
कुमुदः कुमुदाभः स्यात्पद्मस्त्वामिषसंनिभः ।
हिरण्याख्यस्तु हेमाभः पञ्चैते समुदाहृताः ॥ ३३ ॥
महिषाख्यो महानीलो गजेन्द्राणां हितावुभौ ।
हयानां पद्मकुमुदौ स्वस्थारोग्यकरौ मतौ ॥ ३४ ॥
विशेषेण मनुष्याणां कनकः परिकीर्तितः ।
महिषाख्योऽपि मुनिभिर्नृणां हित उदीरितः ॥ ३५ ॥
गुग्गुलुर्विशदस्तिक्तो वीर्योष्णः पित्तलः सरः ।
कषायकटुकः पाके किंचिदुष्णो लघुः परम् ॥ ३६ ॥
भग्नसंधानकृद्वृष्यः सूक्ष्मः स्वर्यो रसायनम् ।
दीपनः पिच्छिलो बल्यः कफवातव्रणापचीः ॥ ३७ ॥
मेदोमेहाश्मवातास्रक्लेदकुष्ठाममारुतान् ।
पिडिकाग्रन्थिशोफार्शोगण्डमालाक्रिमीञ्जयेत् ॥ ३८ ॥
माधुर्याच्छमयेद्वातं कषायत्वाच्च पित्तहा ।
तिक्तत्वात्कफजित्तेन गुग्गुलुस्तु त्रिदोषहा ॥ ३९ ॥
स नवो बृंहणो वृष्यः पुराणस्त्वतिलेखनः ।
स्निग्धः काञ्चनसंकाशः पक्वजम्बूफलोपमः ॥ ४० ॥
नूतनो गुग्गुलुः प्रोक्तः सुगन्धिर्यस्तु पिच्छिलः ।
शुष्को दुर्गन्धिकश्चैव त्यक्तप्रकृतवर्णकः ॥ ४१ ॥
पुराणः स तु विज्ञेयो गुग्गुलुर्वीर्यवर्जितः ।
अम्लं तीक्ष्णमजीर्णं च व्यवायं श्रममातपम् ॥ ४२ ॥
मद्यं रोषं त्यजेत्सम्यग्गुणार्थी पुरसेवकः ।

इति गुग्गुलुः ।

अथ राला—

राला हिमा गुरुस्तिक्ता कषाया ग्राहिणी जयेत् ॥ ४३ ॥
ग्रहास्रस्वेदवीसर्पज्वरव्रणविपादिकाः ।

इति राला ।

अथ स्थौणेयम् । ( थुणेरा )

स्थौणेयं शीतलं वृष्यं मेध्यं दोषत्रयास्रजित् ॥ ४४ ॥

इति स्थौणेयम् । ( थुणेरा )

अथ चोरकः—

चोरः स्वादुर्लघुः शीतः कुष्ठवातकफास्रजित् ।

इति चोरकः ।

अथ मुरा—

मुरा शीता लघुः कुष्ठग्रहपित्तानिलास्रजित् ।

इति मुरा ।

अथ कर्चूरः । ( एकाङ्गीमरुवा )

कर्चूरो दीपनो रुच्यः कुष्ठार्शोव्रणकासजित् ।
उष्णो लघुर्जयेच्छ्वासं गुल्मवातकफक्रिमीन् ॥ ४५ ॥

इति कर्चूरः । ( एकाङ्गीमरुवा )

अथ सटी—

सटी शीता ज्वरामास्रकासजिद्ग्राहिणी लघुः ।

इति सटी बृहत्कर्चूरः ।

अथ स्पृका—

स्पृका स्वाद्वी हिमा वृष्या कुष्ठालक्ष्मीत्रिदोषनुत् ॥ ४६ ॥

इति स्पृका । ( असबरक: )

अथ ग्रन्थिपर्णः । ( गांठिवन )

ग्रन्थिपर्णो लघुस्तिक्तो रूपोष्णः कफवातजित् ।

इति ग्रन्थिपर्णः । ( गांठिवन )

अथ नली—

नली पित्तास्रजिच्छीता चक्षुष्या कृच्छ्रकुष्ठनुत् ॥ ४७ ॥

इति नली ।

## अथ पद्माख्यम्—

पद्माख्यं दाहविस्फोटकुष्ठश्लेष्मास्रपित्तहृत् ।
गर्भसंस्थापने शीततृष्णावीसर्पदाहजित् ॥ ४८ ॥

इति पद्माख्यम् ।

## अथ प्रपौण्ड्रकम्—

पुण्ड्राह्वं शुक्लं शीतं चक्षुष्यं श्लेष्मपित्तनुत् ।

इति प्रपौण्ड्रकम् ।

## अथ तगरम्—

तगरं मधुरं स्निग्धं तिक्तोष्णं लघु पित्तजित् ॥ ४९ ॥
विषापस्मारमूर्धाक्षिरोगदोषत्रयापहम् ।

इति तगरम् ।

## अथ गोरोचना—

रोचना शीतला वश्या गर्भस्रावग्रहास्रजित् ॥ ५० ॥

इति गोरोचना ।

## अथ नखद्वयम्—

नखद्वयं ग्रहश्लेष्मवातास्रज्वरकुष्ठजित् ॥ ५१ ॥
लघूष्णं शुक्लं वर्ण्यं हृद्यं स्वादु विषापहम् ।

इति नखद्वयम् ।

## अथ पतङ्गगुणाः—

पतङ्गं मधुरं शीतं पित्तश्लेष्मव्रणास्रजित् ।

इति पतङ्गगुणाः ।

## अथ लाक्षालक्तकौ—

लाक्षा वर्ण्या हिमा स्निग्धा वातश्लेष्मास्रपित्तजित् ॥ ५२ ॥
व्रणोरःक्षतवीसर्पकृमिकुष्ठग्रहापहा ।
अलक्तको गुणैस्तद्वद्विशेषाद्व्यङ्गनाशनः ॥ ५३ ॥

इति लाक्षालक्तकौ ।

---

१ ग. °पु भूतजि° ।

अथ पर्पटीलाक्षा—

पर्पटी म्रणवा शीता कफवातास्रकोठजित् ।

इति पर्पटीलाक्षा ।

अथ पद्मिनीकुमुदिन्यौ—

पद्मिनी शीतला गुर्वी पित्तश्लेष्मविषास्रजित् ॥ ५४ ॥
रूक्षा विष्टम्भिनी स्वादुस्तद्वत्कुमुदिनी मता ।

इति पद्मिनीकुमुदिन्यौ ।

अथ पद्मचारिणी—

पद्मा हिमा लघुः श्लेष्मकृच्छ्रजित्स्तनवार्धयंकृत् ॥ ५५ ॥

इति पद्मचारिणी ।

अथ कमलादि—

कमलं शीतलं वर्ण्यं मधुरं कफपित्तजित् ।
तृष्णादाहास्रविस्फोटविषवीसर्पनाशनम् ॥ ५६ ॥
तस्मादल्पगुणं किंचिदन्यद्रक्तोत्पलादिकम् ।

इति कमलादि ।

अथ केसरः—

किंजल्कः शीतलो ग्राही रक्तार्शःकफपित्तजित् ॥ ५७ ॥

इति केसरः ।

अथ पद्मबीजम्—

पद्मबीजं हिमं स्वादु गर्भसंस्थापनं गुरु ।
कफवातकरं बल्यं ग्राहि पित्तास्रदाहजित् ॥ ५८ ॥

इति पद्मबीजम् ।

अथ मृणालशालूके—

मृणालं शीतलं वृष्यं पित्तदाहास्रजिद्गुरु ।
संग्राहि मधुरं रूक्षं शालूकमपि तद्गुणम् ॥ ५९ ॥

इति मृणालशालूके ।

१ प. 'कपित्तास्र°' ।

## अथ मालती—

जाती लघूष्णा मूर्धाक्षिदन्तार्तिव्रणरक्तजित् ।

इति मालती ।

## अथ मल्लिका ( मोगरा— )

मल्लिकोष्णा लघुर्वृष्या वातपित्तास्रदोषजित् ॥ ६० ॥

इति मल्लिका ( मोगरा ) ।

## अथ यूथिकाद्वितयम् । ( स्वर्णजूयी )

यूथिकाद्वितयं शीतं रक्तमूर्धाक्षिदोषजित् ।
कफवातकरं वृष्यं वर्ण्यं दौर्गन्ध्यनाशनम् ॥ ६१ ॥

इति यूथिकाद्वितयम् । ( स्वर्णजूयी । )

## अथ शतपर्णीत्रयम् । ( गुलाबसेवती )

शतपर्णीत्रयं शीतं ग्राहि शुक्रकरं लघु ।
दोषत्रयास्रजिद्वृष्यं तरिता चापि तद्गुणा ॥ ६२ ॥

इति शतपर्णीत्रयम् । ( गुलाबसेवतीकूजा । )

## अथ केतकी स्वर्णकेतक्यौ—

केतकीद्वितयं स्वादु कटु तिक्तं कफापहम् ।
लघु पित्तानिलच्छेदि सुगन्ध्यस्रप्रकोपनम् ॥ ६३ ॥

इति केतकीस्वर्णकेतक्यौ ।

## अथ नेवाली—

वासन्ती शीतला लघ्वी तिक्ता दोषत्रयापहा ।

इति नेवाली ।

## अथ वननेवाली ( त्रिपुटवेल )

नैपाली शीतला तिक्ता लघ्वी दोषत्रयापहा ॥ ६४ ॥
कर्णाक्षिमुखरोगघ्नी तद्गुणा वार्षिकी मता ।

इति वननेवाली ( त्रिपुटवेल )

---

१ ग. °तास्यरो° । २ क. तरीता च ऽपि । तद्गुणम् । ३ ग. नेमालि । शी° । ४ ग. ममालिः शी° ।

२९

अथ माधवी—

माधवी मधुरा शीता लघुर्दोषत्रयापहा ॥ ६५ ॥

इति माधवी ।

अथ लघुचम्पकबृहच्चम्पकौ—

चम्पकद्वितयं शीतं कृच्छ्रदोषत्रयास्रजित् ।

इति लघुचम्पकबृहच्चम्पकौ ।

अथ नागचम्पकः—

पुंनागो मधुरः शीतो रक्तपित्तकफापहः ॥ ६६ ॥

इति नागचम्पकः ।

अथ बकुलः—

बकुलः शीतलः श्लेष्मपित्तदन्तगदापहः ।
तत्फलं वातलं ग्राहि कफपित्तहरं हिमम् ॥ ६७ ॥

इति बकुलः ।

अथ बकपुष्पम्—

बकः शीतो विषश्लेष्मपित्तकृच्छ्राश्मदाहजित् ।

इति बकपुष्पम् ।

अथ कुन्दः—

कुन्दः शीतो लघुः श्लेष्मशिरोरुग्विषनाशनः ॥ ६८ ॥

इति कुन्दः ।

अथ विचकिलः—

शीतो लघुर्विचकिलः कफपित्तविषापहः ।

इति विचकिलः ।

अथ मुचुकुन्दः—

मुचुकुन्दः शिरःपीडापित्तास्रविषनाशनः ॥ ६९ ॥

इति मुचुकुन्दः ।

अथ तिलकः—

तिलकः कफहृत्कुष्ठहरोऽत्युष्णो रसायनः ।

इति तिलकः ।

अथ गणेरुका कर्णिकारः—

गणेरुः शोधनी शोफश्लेष्मास्रव्रणकुष्ठजित् ॥ ७० ॥

इति गणेरुका कर्णिकारः ।

अथ बन्धूकः ( बांधोजा )—

बन्धूकः कफहृद्ग्राही वातपित्तहरो लघुः ।

इति बन्धूकः ( बांधोजा ) ।

अथ जपा—

जपा संग्राहिणी केश्या त्रिसंध्या कफपित्तनुत् ॥ ७१ ॥

इति जपा ।

अथ सिन्दूरी—

सिन्दूरी विषपित्तास्रतृष्णावान्तिहरा हिमा ।

इति सिन्दूरी ।

अथ तुलसी—

तुलसी कटुका तिक्ता हृद्योष्णा दाहपित्तकृत् ॥ ७२ ॥
दीपनी वृष्यकुष्ठास्रपार्श्वरुक्कफवातजित् ।

इति तुलसी ।

अथ फणिज्जकः ( मरुवा )—

फणिज्जको वह्निकरस्तीक्ष्णोष्णः पित्तलो लघुः ।
वृश्चिकादिविषश्लेष्मवातकुष्ठक्रिमीञ्जयेत् ॥ ७३ ॥

इति फणिज्जकः ( मरुवा )

अथ दमनः । ( दवणा )

दमनो विषकुष्ठास्रक्लेदकण्डूत्रिदोषजित् ॥ ७४ ॥

इति दमनः । ( दवणा )

अथ वर्वरी—

वर्वरीत्रितयं रूक्षं शीतं कटु विदाहि च ।
पित्तलं कफवातास्रदद्रुक्रिमिविषापहम् ॥
कुठारकः, वर्वरी, कटिञ्जलः, कालमालः, ( ममरीति भाषा )

---

१ ग. °नी कटुकश्च्चास्र° । २ ग. °सकण्डूक्रि° ।

## अथ बाणपुष्पत्रयम्—

बाणत्रयं सरं वृष्यं श्लेष्मपित्तकरं हिमम् ॥ ७५ ॥

इति बाणपुष्पत्रयम् ।

इति योगतरङ्गिण्यां कर्पूरादिगुणकथनं नाम सप्तत्रिंश-
स्तरङ्गः ॥ ३७ ॥

---

अथाष्टात्रिंशस्तरङ्गः ।

---

## अथ पाचनम्—

पचेन्नाऽऽमं वह्निकृच्च दीपनं तद्यथा मिशिः ।
पचत्यामं न वह्निं च कुर्याद्यत्तद्धि पाचनम् ॥ १ ॥
नागकेशरवद्विद्याच्चित्रो दीपनपाचनः ।
न शोधयति न द्वेष्टि समान्दोषांस्तथोद्धतान् ॥ २ ॥
शमीकरोति यज्ज्ञेयं शमनं तद्यथाऽमृता ।
कृत्वा पाकं मलानां यद्भित्त्वा बन्धमधो नयेत् ॥ ३ ॥
तच्चानुलोमनं ज्ञेयं यथा प्रोक्ता हरीतकी ।
पक्तव्यं यदपक्त्वैव श्लिष्टं कोष्ठे मलादिकम् ॥ ४ ॥
नयत्यधः स्रंसनं तद्यथा स्यात्कृतमालकः ।
मलादिकमबद्धं यद्बद्धं वा पिण्डितं मलैः ॥ ५ ॥
भित्त्वाऽधः पातयति तद्भेदनं कटुकी यथा ।
विपक्वं यदपक्वं वा मलादि द्रवतां नयेत् ॥ ६ ॥
रेचयत्यपि तज्ज्ञेयं रेचनं त्रिवृता यथा ।
अपक्वपित्तश्लेष्माणचयमूर्ध्वं नयेत्तु यत् ॥ ७ ॥
वमनं तद्धि विज्ञेयं मदनस्य फलं यथा ।
स्थानाद्बहिर्नयेदूर्ध्वमधो वा मलसंचयम् ॥ ८ ॥
देहे संशोधनं तत्स्याद्देवदालीफलं यथा ।
श्लिष्टान्कफादिकान्दोषानुन्मूलयति यद्बलात् ॥ ९ ॥
छेदनं तद्यथा क्षारमरीचानि शिलाजतु ।
धातून्मलान्वा देहस्थान्विशोष्योल्लेखयेच्च यत् ॥ १० ॥
लेखनं तद्यथा क्षौद्रं नीरमुष्णं वचा यवाः ।
दीपनं पाचनं यत्स्यादुष्णत्वाद्द्रवशोषकम् ॥ ११ ॥

---

१ ग. °ष्टिं न स्वंदो° । २ क. °ति तद्ध° ।

ग्राहि तत्र यथा शुण्ठी जीरकं गजपिप्पली ।
रौक्ष्याच्छैत्यात्कषायत्वाल्लघुपाकाच्च यद्भवेत् ॥ १२ ॥
वातकृत्स्तम्भनं तत्स्याद्यथा वत्सककुण्टुकौ ।
रसायनं च तज्ज्ञेयं जराव्याधिविनाशनम् ॥ १३ ॥
यथाऽमृता रुदन्ती च गुग्गुलुश्च हरीतकी ।
सद्यः शुक्रकरं यच्च तद्वृष्यं स्याद्यथा पयः ॥ १४ ॥
देहस्थौल्यकरं यत्तु बृंहणं तद्यथाऽऽमिषम् ।
यस्माद्द्रव्याद्भवेत्स्त्रीषु हर्षो वाजिकरं तु तत् ॥ १५ ॥
यथा नागबलाद्याः स्युर्बीजं च कपिकच्छुकम् ।
यस्माच्छुक्रस्य वृद्धिः स्याच्छुक्रलं हि तदुच्यते ॥ १६ ॥
यथाऽश्वगन्धा मुसली शर्करा च शतावरी ।
दुग्धं माषाश्च भल्लातफलमज्जामलानि च ॥ १७ ॥
प्रवर्तकानि कथ्यन्ते जनकानि च रेतसः ।
प्रवर्तनी स्त्री शुक्रस्य रेचनं बृहतीफलम् ॥ १८ ॥
जातीफलं स्तम्भकं स्यात्कालिङ्गं क्षयकारि च ।
देहस्य सूक्ष्मच्छिद्रेषु विशेद्यत्सूक्ष्ममुच्यते ॥ १९ ॥
तद्यथा सैन्धवं क्षौद्रं निम्बस्तैलं रुबूद्भवम् ।
पूर्वं व्याप्याखिलं कायं ततः पाकं च गच्छति ॥ २० ॥
व्यवायि तद्यथा भङ्गा फेणं चाहिसमुद्भवम् ।
संधिबन्धांस्तु शिथिलान्यत्करोति विकाशि तत् ॥ २१ ॥
विश्लेष्यौजश्च धातुभ्यो यथा क्रमुककोद्रवाः ।
बुद्धिं लुम्पति यद्द्रव्यं मदकारि तदुच्यते ॥ २२ ॥
तमोगुणप्रधानं च यथा मद्यं सुरादिकम् ।
व्यवायि च विकाशि स्यात्सूक्ष्मं छेदि मदावहम् ॥ २३ ॥
आग्नेयं जीवितहरं योगवाहि विषं स्मृतम् ।
निजवीर्येण यद्द्रव्यं स्रोतोभ्यो दोषसंचयम् ॥ २४ ॥
निरस्यति प्रमाथि स्यात्तद्यथा मरिचं वचा ।
पैच्छिल्याद्गौरवाद्द्रव्यं रुद्ध्वा रसवहाः शिराः ॥
धत्ते यद्गौरवं तत्स्यादभिष्यन्दि यथा दधि ॥ २५ ॥

इति योगतरङ्गिण्यां दीपनादिकथनं नामाष्टाविंशस्तरङ्गः ॥ २८ ॥

अथैकोनचत्वारिंशत्तरङ्गः ।

## अथ विरुद्धाहारकथनम्—

विरुद्धमपि चाऽऽहारं विन्द्याद्गरविषोपमम् ।
तद्बोधाय भिषक्श्रेष्ठो भोजनावसरे नृपैः ॥ १ ॥
कालक्रमेण सद्यो वा विरुद्धाहारसेवनम् ।
निहन्ति मानवं तस्माद्विरुद्धमशनं त्यजेत् ॥ २ ॥
व्याधिमिन्द्रियदौर्बल्यं मरणं वा प्रयच्छति ।
विरुद्धमशनं तस्माद्वर्जयेदात्मवान्नरः ॥ ३ ॥
दुग्धं शाककुलित्थमीनमदिरावल्लीफलक्षारप-
द्वम्लैर्मांसकरीरजाम्बवदधिक्षौद्रैः पृथग्वाऽपृथक् ।
दुष्टं स्याद्दधि तुम्बिकाकुचपयस्तैलासवाद्व्याघुधे-
र्तीलेनाप्यथ तक्रमाज्यकदलीधानापयःसक्तुभिः ॥ ४ ॥
मुहूर्तात्पञ्चकादूर्ध्वं क्षीरं भजति विक्रियाम् ।
तदेव द्विगुणे काले विषवद्धन्ति मानवम् ॥ ५ ॥
अक्वथितं दशघटिकाः क्वथितं द्विगुणाश्च ताः पयः पथ्यम् ।
अथवा मधुरसाढ्यं यावत्तावत्पयः पथ्यम् ॥ ६ ॥
मत्स्यमांसगुडमुद्गमूलकैः कुष्ठमावहति सेवितं पयः ।
शाकजाम्बवसुराविसेवितं मारयत्यबुधमाशु सर्पवत् ॥ ७ ॥
एणैर्मृगैर्मयूरैश्च तित्तिरैर्लावकादिभिः ।
सर्वैर्जाङ्गलमांसैश्च क्षीरं न प्रतिषिध्यते ॥ ८ ॥
अम्लेष्वाऽऽमलकं शस्तं लवणेषु च सैन्धवम् ।
कषायेष्वभया शस्ता कटुवर्गेषु नागरम् ॥ ९ ॥
पटोलं शाकवर्गेषु मधुरेषु च शर्करा ।
एतैः सह हितं दुग्धमेतदन्यैर्विकारकृत् ॥ १० ॥
उष्णेन दिव्यसलिलेन वराहगोधा-
मांसेन याति विकृतिं मधुमूलकैश्च ।
तक्रेण चोष्णमपि तुल्यघृतं घृतं च
कांस्ये दशाहमुषितं च तथा घृतं च ॥ ११ ॥
गोधातित्तिरिलावबर्हिपललान्यैरण्डतैलाग्निना
मत्स्यास्त्विक्षवमाधवैरथ पृथग्द्राक्षामिपान्यासवैः ।

१ ग. °ष्णटाकु° । २ क. °मा लक° । ३ ग. °रासवैः पुनरो° । ४ क. °रैवा बकादि° ५ क. र प्रतिनिषि° । ६ ग. लं तिक्तव ।

तैलैः सर्षपजैः कपोतपललं सिद्धं विरुद्धं तथा
नानैकत्र तु पाचितानि तरसा व्यापादयन्त्यङ्गिनम् ॥१२॥
हारीतस्य पल हि दारुरजनीशूलेन विद्ध्वा निशा
वह्नौ पाचितमत्ति मानवमथो कौसुम्भतैलैरपि ।
प्रोतं केनचिदेव मासपललं शूलेन दुष्ट मतं
धारुण्या विसकण्ठिका सह तथा कुल्माषकैर्थ्याहिता॥१३॥
दुष्टं पायसमन्वितं कृशरया चन्द्रस्तु निम्बूरसै-
स्तैलैः सार्धमफेनकं किटिवसाविद्धो विरुद्धो बकः ।
सर्पिःक्षौद्रवसाम्बुतैलमपृथक्कृत्वा द्विशो वा त्रिशो
भिःसा पर्युषिता तथा मुहुरनुष्णोष्णीकृता नो हिता॥१४॥
अत्युष्णं वमिरेककृन्निगदितं वृन्ताकमापाचितं
पिण्याके ननु साधिता मवविरेकाय स्मृतोपोदका ।
सूपो माषमवस्तु मूलकयुतः शूलामगुल्मप्रदो
दुष्टं लाकुचमाज्यदुग्धगुडकैर्धान्यं समाषं पृथक् ॥ १५ ॥
सक्तुर्भक्तपयःपलैः समथितैर्दुष्टं पृथग्वाऽपृथक्
तीक्ष्णं क्षौद्रकणागुडैः सह तथा स्यात्काकमाची भृशम् ।
स्नेहे निस्तलने क्षपस्य तलिता किं वोषिता यामिनी
काम्पिल्लस्तु सतक्र एव महिमैर्मल्लातमज्जादिभिः ॥ १६ ॥

इति योगतरङ्गिण्यां विरुद्धाहारकथनं नामैकोनचत्वारिंश-
त्तरङ्गः ॥ ३९ ॥

---

अथ चत्वारिंशत्तरङ्गः ।

---

## अथ रास्नादिगुणकथनम्

रास्नात्रिकण्टकगुहातिगुहाश्वगन्धा
गन्धर्वहस्तकपिकच्छुपुनर्नवाभिः ।
छिन्नाबलाद्विपबलातिबलावरीभिः
प्रोक्तो भिषग्भिरनिलामयहृद्गणोऽयम् ॥ १ ॥

---

१ ग. °तारिभो । २ क. °ता भोदिता । ३ ग. ता यदि वि° । ४ ग. ° तोऽन्दुका ।

काकोलीद्वयमृद्धिवृद्धिमधुकं मेदाद्वयं पद्मकं
शृङ्गीकीचकरोचनामृतलता द्वौ मुद्गमाषच्छेदौ ।
जीवन्ती वरजीवका सऋषभा स्यात्पुण्डरीकान्विता
काकोल्यादिरुदीरितोऽयमृषिभिः पित्तापहस्तर्पणः ॥ २ ॥
कृष्णाग्रन्थिकचव्यचित्रकविषाविश्वौषधाजाजिभिः
पाठारामठरेणुकामधुरसासिद्धार्थतिक्तोषणैः ।
उग्राशक्रयवाजमोदत्रुटिभिर्भार्ङ्गीविडङ्गान्वितै-
रेभिर्दीप्तिकरः कफामयहरः कृष्णादिरुक्तो गणः ॥ ३ ॥
स्थिरापृथक्पर्णिपुनर्नवाभिस्त्रिकण्टकैरण्डजटोच्चटाभिः ।
विदारिकानागबलावरीभिरयं गणः पित्तसमीरणघ्नः ॥ ४ ॥
कट्फलाम्बुधरधान्यकभार्गीशृङ्गिपर्पटकविश्ववचाभिः ।
सामयामरसुगन्धितृणाभिर्वर्ग एष कफवातगदघ्नः ॥ ५ ॥
त्रायन्तिकाकुटजबीजवृषामृताभि-
स्तिक्तापटोलपिचुमन्ददुरालभाभिः ।
भूनिम्बसर्जतरुपद्मकपर्पटाद्यै-
रेभिर्गणोऽयमिति पित्तकफामयघ्नः ॥ ६ ॥
बिभीतकामलकहरीतकीभिः फलत्रयं कथितमिदं भिषग्भिः ।
सकुष्ठिनां मुखनयनामयानां प्रमेहिणां व्रणगलगण्डिनां च ॥ ७ ॥
विश्वोपकुल्यामरिचैरमीभिर्द्रव्यैस्त्रिभिरूषणमुक्तमेतत् ।
भिषग्भिराद्यैर्मतिबोधनाय ससंनिपातस्य जडस्य जन्तोः ॥ ८ ॥
सपिप्पलीग्रन्थिकचव्यचित्रकैः सनागरैः पञ्चभिरेभिरौषधैः ।
उदीरितं तत्फलपञ्चकोलकं प्रनष्टवह्नेरतिदीप्तिकारकम् ॥ ९ ॥
वटप्लवोदुम्बरवेतसानामश्वत्थवृक्षेण समन्वितानाम् ।
त्वक्पञ्चकं पञ्चमहीरुहाणामिति व्रणघ्नं श्वयथुघ्नमेतत् ॥ १० ॥
एलागुग्गुलदारुकुन्दुरुमुराथौणेयकान्तीनतै-
श्चण्डाचोरकचोचचन्दननखश्रीवेष्टकध्यामकैः ।
स्पृक्काकुङ्कुमरुक्तुरुष्कफलिनीमांसीलवङ्गागुरु-
त्वक्पत्रोरगकेसरैरिति विषश्लेष्मानिलघ्नो गणः ॥ ११ ॥
काकोल्यौ द्वे जीवकः सर्षभः स्यान्मेदायुग्मं सार्धमृद्ध्याथ वृद्ध्या ।
इत्युद्दिष्टैरष्टवर्गः प्रदिष्टः सद्भिः पित्तव्याधिजिद्बृंहणश्च ॥ १२ ॥

---

१ क. °च्छदौ । जी° २ ग. °न्ती च सर्जी° । ३ ग. °णैः । ईकार° । ४ क. °भिः किरातक° । ५ ग. °त्पटो° । ६ क. °दजवी° । ७ क. समन्वितं दस्य । ८ ग. वटवटोदु° ।

त्वक्पत्रकैलं त्रिसुगन्धि चैतत्प्रकीर्तितं वातकफापहारि ।
वर्ण्यं विषघ्नं च सनागपुष्पं ज्ञेयं चतुर्जातकमेतदेव ॥ १३ ॥
वरणः कुरण्टकशिग्रुबृहतीद्वयदर्भवरी
ककुभः करञ्जचिरबिल्वरणीशिखिभिः ।
द्वयवलयाग्निमन्थयुतया सममेरटया
भवति गणः सकर्कटमेषविषाणिकया ॥ १४ ॥
गुल्मेषु विद्रधिषु वातबलासजेषु
कोष्ठान्तरस्थितिषु शूलरुगातुरेषु ।
प्रायः कफानिलविकारनिपीडिताना-
मुक्तो नृणां वरणकादिरयं भिषग्भिः ॥ १५ ॥
श्रीपर्णिनीज्वलनमन्थयसन्तवृन्तौ
टेण्टूकबिल्वमिति तत्पृथु पञ्चमूलम् ।
श्लेष्मानिलामयहरं हितमेतदेव
मेदस्विनामलसकोपहतात्मनां हि ॥ १६ ॥
व्याघ्री बृहत्यतिगुहा सगुहा श्वदंष्ट्रा
संसक्तमेभिरिति तत्कथितं कनीयः ।
पित्तानिलोल्बणविकारहरं नराणा-
मार्म्यां भवेदिति गणो दशमूलसंज्ञः ॥ १७ ॥
प्रायस्त्रिदोषशमनं पवनामयेषु
श्लेष्मोल्बणेषु च गदेषु भिषग्भिरुक्तम् ।
श्वासेषु संनिपातितेषु शिरोरुजायां
कासेषु हिक्किषु हितं दशमूलमेतत् ॥ १८ ॥
इत्यष्टादशभिरमी भिषग्गणैर्वीक्ष्य वातपित्तकफान् ।
योगा रोगार्तानां विभज्य भिषजा प्रकल्प्यन्ते ॥ १९ ॥
इति योगतरङ्गिण्यां राश्यादिगणकथनं नाम चत्वारिंशत्तरङ्गः ॥ ४० ॥

---

अथैकचत्वारिंशत्तरङ्गः ।

---

अथाधुना धात्वादीनां लक्षणशोधनमारणगुणानाह—
स्वर्णताराारताम्राणि नागवङ्गौ च तीक्ष्णकम् ।
धातवः सप्त विज्ञेया अष्टमः क्वापि पारदः ॥ १ ॥

---

१ क. °शिखिभिः । २ क. °द्वात्मगु° ।

एकीयमानमाह—

स्वर्णं तारं च ताम्रं च वङ्गो नागस्तु पञ्चमः ।
रीतिका च तथा घोषो लोहं चेत्यष्ट धातवः ॥ २ ॥

तत्र प्रथमं स्वर्णम्—

पुरा निजाश्रमस्थानां सप्तर्षीणां जितात्मनाम् ।
पत्नीं विलोक्य लावण्यलक्ष्मीसंपन्नयौवनाम् ॥ ३ ॥
कन्दर्पदर्पविभ्रान्तचेतसो जातवेदसः ।
पतितं पङ्कराष्ट्रे रेतस्तद्धेमतामियात् ॥ ४ ॥
कृत्रिमं चापि भवति सिद्धसूतस्य योगतः ।
मेरुसानुपतज्जम्बूफलाम्भोयोगतः परम् ॥ ५ ॥
दिव्यौषधीमणिस्पर्शादन्यद्भवति काञ्चनम् ।
एवं नानाविधान्यत्र जायन्ते काञ्चनानि वै ॥ ६ ॥
तत्र यद्ग्रहणार्हं स्याद्धेम तल्लक्षणं शृणु ।
दाहे रक्तं सितं छेदे निकषे कुङ्कुमप्रभम् ॥ ७ ॥
तारं शुल्बोज्झितं स्निग्धं मृदु हेम गुरूत्तमम् ।
श्वेताङ्गं कठिनं रूक्षं विवर्णं समलं दले ॥ ८ ॥
दाहे छेदे सितं श्वेतं कषे लघु च तत्यजेत् ।

अथ हेमशोधनम्—

मृत्तिका मातुलुङ्गाद्यैः पञ्चवासरभाविता ॥ ९ ॥
समस्मलवणा हेम शोधयेत्पुटपाकतः ।

अन्यच्च—

सुवर्णमुत्तमं वह्नौ विद्रुतं निक्षिपेत्त्रिशः ॥ १० ॥
काञ्चनारद्रवैः शुद्धं काञ्चनं जायते भृशम् ।

अथ हेममारणम्—

शुद्धसूतसमं स्वर्णं खल्वे कृत्वा तु गोलकम् ॥ ११ ॥
ऊर्ध्वाधो मृत्तिकां दत्त्वा सर्वतुल्यं निरुध्य च ।
त्रिंशद्वनोत्पलैर्देयं पुटमेवं चतुर्दश ॥ १२ ॥
निरुत्थं हेम भस्म स्याद्गन्धो देयः पुनः पुनः ।

---

१ क. °रगुल्मोपि° । २ क. दलम् । दा° । ३ ग. °भो गन्धकं द° ।

अथान्यप्रकारः—

सुवर्णे विद्रुते वह्नौ दद्यात्सीसं कलांशकम् ॥ १३ ॥
अम्लेन मर्दयेत्तत्तु चूर्णयित्वा शनैः शनैः ।
पश्चात्तद्गोलकं कृत्वा तुल्यं गन्धरजोत्तरैः ॥ १४ ॥
शरावसंपुटे दत्त्वा संधिरोधं विधाय च ।
त्रिंशद्वनोत्पलैः पच्यात्सप्तधैवं मृतिर्भवेत् ॥ १५ ॥

अथान्यप्रकारः—

रसस्य भस्मना वाऽथ रसेनाऽऽलिप्य तद्दलम् ।
हिङ्गुहिङ्गुलसिन्दूरशिलासाम्येन मेलयेत् ॥ १६ ॥
संमर्द्य काञ्चनद्रावैर्दिनं कृत्वाऽथ गोलकम् ।
तं भाण्डस्य तले दत्त्वा भस्मना पूरयेद्दृढम् ॥ १७ ॥
अग्निं प्रज्वालयेद्गाढं द्विनिशं स्वाङ्गशीतलम् ।
उद्धृत्य सावशेषं चेत्पुनर्देयं पुटद्वयम् ॥
अनेन विधिना स्वर्णं निरुत्थं जायते मृतम् ॥ १८ ॥

स्वर्णं शीतं पवित्रं क्षयवमिकसनश्वासमेहास्रपित्त-
क्षैण्यक्ष्वेडक्षतास्रप्रदरगदहरं स्वादुतिक्तं कषायम् ।
वृष्यं मेधाग्निकान्तिप्रदमगुरुसरं कार्श्यहारि त्रिदोषो-
न्मादापस्मारशूलज्वरजयि वपुषो बृंहणं नेत्रपथ्यम् ॥ १९ ॥
बलं च वीर्यं हरते नराणां रोगव्रजं पुष्यति भूरि काये ।
अशुद्धमष्टापदमप्यपक्वदोषत्रयं वाऽपि मृतिं विधत्ते ॥ २० ॥

इति हेमोत्पत्तिशोधनमारणगुणाः ।

अथ रूप्यम्—

त्रिपुरस्य वधार्थाय निर्निमेषैर्विलोचनैः ।
निरीक्षयामास शिवः क्रोधेन परिपूरितः ॥ २१ ॥
अग्निस्तत्कालमपतत्तस्यैकस्माद्विलोचनात् ।
मद्रोऽपरस्मात्संभूतो वैश्वानर इव ज्वलन् ॥ २२ ॥

---

१ क. मधूरस° । २ ग. °तः । ततः रतूमप° ।

तृतीयादश्रुबिन्दुस्तु लोचनादपतद्भुवि ।
तस्माद्रजतमुत्पन्नं नानाभूमिषु संस्थितम् ॥ २३ ॥
कृत्रिमं चापि तत्प्रोक्तं वङ्गादेः सूतयोगतः ।
गुरु स्निग्धं मृदु श्वेतं दाहे छेदे घनक्षमम् ॥ २४ ॥
वर्णाढ्यं चन्द्रवत्स्वच्छं तारमत्र गुणा नव ।

दश दोषानाह—

कृत्रिमं कठिनं रूक्षं रक्तं पीतं दलं लघु ॥ २५ ॥
दाहच्छेदघनैर्नष्टं रूप्ये दोषा दश स्मृताः ।

अथ शोधनम्—

तैले तक्रे च गोमूत्रे काञ्जिके च कुलित्थके ॥ २६ ॥
त्रिफलाक्वाथमध्ये तु संशोध्याः सर्वधातवः ।
इति सामान्यसर्वधातुशोधनम् ।

विशिष्टं तद्यथा—

पत्रीकृतं तु रजतं संतप्तं जातवेदसि ॥ २७ ॥
निर्वापितमगस्त्यस्य रसे वारत्रयं शुचि ।
इति रजतशोधनम् ।

अथ रजतमारणगुणाः—

तारपत्रं चतुर्भागं भागैकं शुद्धतालकम् ॥ २८ ॥
एतज्जम्बीरजद्रावैः कल्कीकृत्यालकं भिषक् ।
एतेन तारपत्राणि लेपयेच्छोषयेत्ततः ॥ २९ ॥
शरावसंपुटे तेषामूर्ध्वाधो गन्धकं क्षिपेत् ।
तारतुल्यं ततस्तानि रुद्ध्वा गजपुटे पचेत् ॥ ३० ॥
त्रिंशद्वनोत्पलैरेव स्वाङ्गशीतं समुद्धरेत् ।

अथान्यप्रकारः—

तारपत्राणि सूक्ष्माणि कृत्वा तत्तुल्ययोः पृथक् ॥ ३१ ॥
सूतगन्धकयोस्तुल्यं तालयोः खल्वसंस्थयोः ।
कल्कं कृत्वा कुमार्यद्भिस्तेन तानि प्रलेपयेत् ॥ ३२ ॥

---

१ क. छत्र भा° ।

शरावसंपुटे रुद्ध्वा त्रिंशद्वन्योत्पलैः पुटेत् ।
एवं रजतमाप्नोति मृतिं वारद्वयेन वै ॥ ३३ ॥

अथान्यप्रकारः—

विधाय पिष्टिं सूतेन रजतस्याथ मेलयेत् ।
तालं गन्धं समं पश्चान्मर्दयेन्निम्बुकद्रवैः ।
द्वित्रैः पुटैर्भवेद्भस्म योज्यमेतद्रसादिषु ॥ ३४ ॥
तारं शीतकषायमम्लमधुरं दोषत्रयच्छेदनं
स्निग्धं दीपनमक्षिकुक्षिगदजिद्दाहप्रमेहप्रणुत् ।
मेदोमेदि मदात्ययात्ययकरं कान्त्यायुरारोग्यकृ-
द्यक्ष्मापस्मृतिशूलपाण्डुपलितप्लीहज्वरघ्नं सरम् ॥ ३५ ॥
अशुद्धं रजतं कुर्यात्पाण्डुकण्डूगलग्रहान् ।
विबन्धवीर्यनाशं च बलहानिं शिरोरुजम् ॥ ३६ ॥

इति रजतमारणगुणाः ।

अथ ताम्रम्—

शुक्रं यत्कार्तिकेयस्य पतितं धरणीतले ।
तस्मादेतत्समुत्पन्नं ताम्रमाहुः पुराविदः ॥ ३७ ॥
कृष्णं सूक्ष्ममतिस्तब्धं श्वेतं वाऽपि घनासहम् ।
लोहनागयुतं वाऽपि न शुद्धं ताम्रमुच्यते ॥ ३८ ॥

सदोषत्वमाह—

न विषं विषमित्याहुस्ताम्रं तु विषमुच्यते ।
एको दोषो विषे ताम्रे त्वष्टौ दोषाः प्रकीर्तिताः ॥ ३९ ॥
भ्रमो मूर्छा विदाहश्च स्वेदक्लेदनवान्तयः ।
अरुचिश्चित्तसंताप एते दोषा विषोपमाः ॥ ४० ॥

तस्य शोधनम्—

तस्मात्संशोधयेत्ताम्रं तद्दोषविनिवृत्तये ।
सलोणवज्रीदुग्धेन ताम्रपात्रं विलेपयेत् ॥ ४१ ॥
अग्नौ संताप्य निर्गुण्डीरसं संसेचयेत्त्रिशः ।
स्नुह्यर्कक्षीरसेकैर्वा शुल्बशुद्धिः प्रजायते ॥ ४२ ॥

---

१ ख. पूतस्य द° । २ ग. °जतस्या° । ३ क. °दाहे विषादिष° ।

अन्यच्च—

गोमूत्रेण पचेद्यामं ताम्रपत्रं वृढाग्निना ।
साम्लक्षारेण संशुद्धिं ताम्रमाप्नोति सर्वथा ॥ ४३ ॥

इति ताम्रशोधनम् ।

अथ मारणम्—

सूतगन्धौ कुमार्यद्भिर्मर्दयित्वा प्रलेपयेत् ।
ताम्रपात्रं तेन पश्चात्स्थाल्या गर्भं निरोधयेत् ॥ ४४ ॥
शरावेणाथ संयुक्ता तत्र मुद्राम्बुभस्मतः ।
भस्मना पूरयेत्स्थालीमाकण्ठं तां पिधाय च ॥ ४५ ॥
चुल्ल्यामारोप्य तदधो वह्निं प्रज्वालयेद्दृढम् ।
चतुर्यामं पचेत्पश्चात्स्वाङ्गशीतं समुद्धरेत् ॥ ४६ ॥
गोक्षीरे स्वेदयेद्यामं दोलया स्यात्तदुत्तमम् ।

अथान्यप्रकारः—

चतुर्थांशेन सूतेन ताम्रपत्राणि लेपयेत् ॥ ४७ ॥
अम्लपिष्टं द्विगुणितमूर्ध्वाधो दापयेद्बलिम् ।
चाङ्गेरीकल्कगर्भस्थं भाण्डे यामं पचेद्दृढे ॥ ४८ ॥
भस्मीभूतं ताम्रपत्रं सर्वयोगेषु योजयेत् ।

अथान्यप्रकारः—

जम्बीररससंपिष्टं रसगन्धकलेपितम् ॥ ४९ ॥
ताम्रपत्रं शरावस्थं त्रिपुटैर्याति भस्मताम् ।

अथान्यप्रकारः—

चूर्णं शुद्धस्य ताम्रस्य समसूतं विमर्दयेत् ॥ ५० ॥
खल्वे जम्बीरनीरेण तयोस्तुल्यं तु गन्धकम् ।
दत्त्वा संमर्द्य तत्सर्वं शरावयुगमध्यगम् ।
दिनं गजपुटे पच्यात्ताम्रभस्म प्रजायते ॥ ५१ ॥

ताम्रगुणानाह—

ताम्रं शीतं निहन्याद्व्रणकृमिजठरानाहसंप्लीहपाण्डु-
श्वासश्लेष्मास्रवातक्षयपवनगरं शूलयुग्मं च गुल्मम् ।

१ क. रसं न° ।

कुष्ठान्यष्टावशावि स्मरबलरुचिकृद्रक्तमेदोऽग्लपित्त-
च्छेदि प्रोक्तं त्वशुद्धं क्रमिदरणरुगाध्मानकुष्ठाविकारि॥ ५२ ॥
इति ताम्रम् ।

अथ रीतिकांस्ये—

रीतिका द्विविधा ज्ञेया तत्राऽऽद्या राजरीतिका ।
काकतुण्डी द्वितीया सा तयोराद्या गुणाधिका ॥ ५३ ॥
संतप्ता काञ्जिके क्षिप्ता ताम्रा स्याद्राजरीतिका ।
काकतुण्डी तु कृष्णा स्यान्नासौ सेव्या विजानता॥ ५४ ॥
कांस्यं च द्विविधं प्रोक्तं पुष्पतैलिकभेदतः ।
पुष्पं श्वेततमं तत्र तैलिकं कपिशप्रभम् ॥ ५५ ॥
एतयोः प्रथमं श्रेष्ठं सेव्यं रोगप्रशान्तये ।
राजरीतिस्तथा घोषं ताम्रवच्छोधयेद्भिषक् ॥ ५६ ॥
ताम्रवन्मारणं चापि तयोरुक्तं भिषग्वरैः ।
रीतिकायुगलं रूक्षं सतिक्तं लवणं रसे ॥ ५७ ॥
शोधनं पाण्डुरोगघ्नं क्रमिघ्नं लेखनं हिमम् ।
कांस्यं कषायं तिक्तोष्णं लेखनं विशदं सरम् ॥ ५८ ॥
रूक्षं गुरु च चक्षुष्यं कफपित्तहरं परम् ॥ ५९ ॥
इति रीतिकांस्यमारणगुणाः ।

अथ लोहविधिः—

पुरा लोमिलदैत्यस्य निहतस्य सुरैर्युधि ।
उत्पन्नानि शरीरेभ्यो लोहानि विविधानि वै ॥ ६० ॥
मुण्डं तीक्ष्णं तथा कान्तमिति लोहं त्रिधा स्मृतम् ।
मुण्डाच्छताधिकं तीक्ष्णं तीक्ष्णात्कान्तं शताधिकम् ॥६१॥
मुण्डं तु वर्तुलं भूमौ पर्वतेषु च जायते ।
गजवल्यादितीक्ष्णं स्यात्कान्तं चुम्बकसंभवम् ॥ ६२ ॥
यत्राङ्कं दृश्यते लोहे तीक्ष्णं लोहं तदुत्तमम् ।
कासीसामलकल्काक्ते लोहेऽङ्कं दृश्यते सुखम् ॥ ६३ ॥

अथ कान्तलक्षणम्—

पात्रे यस्य स्थितवति जले तैलबिन्दुर्न सर्पे-
द्गन्धं हिङ्गु त्यजति न निजं तिक्ततां निम्बकल्कः ।

---

१ ग. °मक°।

पाके दुग्धं भजति शिखराकारकं नैति भूमौ
कान्तं लोहं तदिदमुदितं लक्षणैरेभिरत्र ॥ ६४ ॥

अथैषां शोधनमारणे यथा—

शशरक्तेन संलिप्तं किं चार्कपयसाऽयसः ।
दलं हुताशने ध्मातं सिक्तं त्रिफलवारिणा ॥ ६५ ॥
एवं त्रिशः कृते लोहं शुद्धिमाप्नोत्यसंशयम् ।

अथान्यप्रकारः—

त्रिफलाष्टगुणे तोये त्रिफला षोडशोन्मिका ॥ ६६ ॥
तत्क्वाथे पादशेषे तु लोहस्य पलपञ्चकम् ।
कृत्वा पत्राणि तप्तानि सप्तवारं निषेचयेत् ॥ ६७ ॥
एवं प्रलीयते दोषो गिरिजो लोहसंभवः ।

इति लोहशुद्धिः ।

अथ लोहमारणगुणाः—

शुद्धस्य सूतराजस्य भागो भागद्वयं बलेः ॥ ६८ ॥
द्वयोः समं सारचूर्णं मर्दयेत्कन्यकाम्बुना ।
यामद्वयं तस्य गोलं संवेष्टयेरण्डजैर्दलैः ॥ ६९ ॥
ततः सूत्रेण संबध्य स्थापयेत्ताम्रसंपुटे ।
संमुद्र्य वदनं तस्य मृदा संशोष्य तत्पुनः ॥ ७० ॥
त्रिदिनं धान्यराशिस्थं तत उध्दृत्य मर्दयेत् ।
रजस्तद्वस्त्रगलितं नीरे तरति हंसवत् ॥ ७१ ॥
सोमामृताभिधमिदं लोहभस्म प्रकीर्तितम् ।

अथान्यप्रकारः—

द्वादशांशेन दरदं तीक्ष्णचूर्णस्य मेलयेत् ॥ ७२ ॥
कन्यानीरेण संमर्द्य यामयुग्मं तु तत्पुनः ।
शरावसंपुटे कृत्वा पुटेद्गजपुटेन वै ॥ ७३ ॥
सप्तधैवं कृतं लोहरजो वारितरं भवेत् ।

अथान्यप्रकारः—

काकोदुम्बरिकानीरैर्लोहपत्राणि सेचयेत् ॥ ७४ ॥

---

१ क. चार्कैम् ।

वह्नितप्तानि पञ्चवारं कुट्टयेत्तदुलूखले ।
तत्पञ्चमांशं दरदं क्षिप्त्वा सर्वं विमर्दयेत् ॥ ७५ ॥
कुमारीनीरतः श्लक्ष्णं पुटेद्गजपुटेन तु ।
त्रिवारं त्रिफलाक्वाथैस्तत्संख्यैरपि तत्त्ववित् ॥ ७६ ॥
निरुत्थं जायते लोहं त्रिधाऽप्यत्र न संशयः ।

अथान्यप्रकारः—

निम्बूफलस्य पानीयैः सकासीसैः प्रपूरिते ॥ ७७ ॥
कांस्यपात्रे क्षिपेत्खड्गखण्डांश्चण्डातपे स्थिते ।
दिनैकेन स्फुटन्त्येते दिनान्ते तांस्तु पेषयेत् ॥ ७८ ॥
त्रिफलाक्वाथपिष्टं तच्चूर्णं गजपुटे पचेत् ।
पुनः पिष्टेन यावत्स्यात्तद्वारितरमुत्तमम् ॥ ७९ ॥
ततः पारदगन्धाभ्यां तत्समाभ्यां समर्दयेत् ।
पूर्ववद्धान्यराशिस्थं तीक्ष्णं सर्वोत्तमं भवेत् ॥ ८० ॥

अथान्यप्रकारः—

लोहं पत्रमतीव तप्तमसकृत्क्वाथे क्षिपेत्त्रैफले
चूर्णीभूतमिदं पुनस्त्रिफलजे क्वाथे पचेद्गोजले ।
मत्स्याक्षीत्रिफलारसेन पुटयेद्यावन्निरुत्थं भवेत्
पश्चादाज्यमधुप्लुतं सुपुटितं सिद्धं भवेदायसम् ॥ ८१ ॥

अथान्यप्रकारः—

लोहचूर्णं पलं खल्वे सोरकस्य पलं तथा ।
अश्वगन्धपलं चापि सर्वमेकत्र मर्दयेत् ॥ ८२ ॥
कुमार्यद्भिर्दिनं पश्चाद्गोलकं रुबुपत्रकैः ।
संवेष्ट्य च मृदा लिप्त्वा पुटेद्गजपुटे[1] भिषक् ॥ ८३ ॥
स्वाङ्गशीतं समुद्धृत्य सिन्दूराभमयोरजः ।
मृतं वारितरं ग्राह्यं सर्वकार्यकरं परम् ॥ ८४ ॥
सर्वमेतन्मृतं लोहं ध्मातव्यं मित्रपञ्चकैः ।
यद्येवं स्यान्निरुत्थानं सेव्यं वारितरं भवेत् ॥ ८५ ॥
गन्धकं चोत्थितं लोहं तुल्यं खल्वे विमर्दयेत् ।
दिनैकं कन्यकाद्रावै रुद्ध्वा गजपुटे पचेत् ॥ ८६ ॥

---

१ क. °टे पचेत् । स्वा° ।

इत्येवं सर्वलोहानां कर्तव्येयं निरुत्थितिः ।
पाण्डुं पीडयति क्षयं क्षपयति क्षैण्यं क्षिणोति क्षणा-
त्कासं नाशयति भ्रमं नमयति श्लेष्मामयान्खादति ।
अर्शोगुल्मसशूलपीनसवमिश्वासप्रमेहारुची-
राशून्मूलयति प्रकम्पनहरं लौहं हिमं चाक्षुषम् ॥ ८७ ॥
शुद्धं पित्तकफानिलमोहं हन्ति हितं शिवशक्त्या लोहम् ।
पाण्डुदृगामयशूलविनाशि प्रोक्तमशुद्धं रोगविकाशि ॥ ८८ ॥
ये गुणा मृतरूप्यस्य ते गुणाः कान्तभस्मनः ।
कान्ताभावे प्रदातव्यं रूप्यमित्याह भैरवः ॥ ८९ ॥

निषेधः—

कूष्माण्डं तिलतैलं च माषान्नं राजिकां तथा ।
मद्यमम्लं रसं चैव त्यजेल्लोहस्य सेवकः ॥ ९० ॥

इति लोहमारणगुणाः ।

अथ किट्टम्—

ध्मायमानमयो वह्नौ परित्यजति यं मलम् ।
स किट्टसंज्ञां लभते तदनेकविधं मतम् ॥ ९१ ॥

तथोक्तं पीयूषसागरे—

यस्य लोहस्य यत्किट्टं तत्किट्टं तद्गुणं मतम् ।

तल्लक्षणानि यथा—

ईषच्छीर्णं गुरु स्निग्धं मुण्डकिट्टं जगुर्बुधाः ॥ ९२ ॥
भिन्नाञ्जनसमं किंचिद्विशेषाद्गुरु निर्व्रणम् ।
निष्कोटरं च विज्ञेयं तीक्ष्णकिट्टं मनीषिभिः ॥ ९३ ॥
पिङ्गं रूक्षं गुरुतमं मन्ददीर्घमकोटरम् ।
छिन्नेऽत्र रजतच्छाया स्यात्तत्किट्टं तु कान्तजम् ॥ ९४ ॥

इदं विशिष्टम् ।

एतदभावे सामान्यकिट्टं ग्राह्यम्—

आकोटरं गुरु स्निग्धं दृढं शतसमाधिकम् ।
चिरोज्झटजनस्थानसंस्थितं किट्टमाहरेत् ॥ ९५ ॥

---

१ क. 'भेन र°' ।

यथोक्तं रसार्णवे—

शताब्दमुत्तमं किट्टं मध्यं चाशीतिवार्षिकम् ।
अधमं षष्टिवर्षीयं ततो हीनं विषोपमम् ॥ ९६ ॥
अक्षाङ्गारे धमेत्किट्टमक्षपात्रस्थगोजले ।
निर्वापयेदष्टवारं ततः सूक्ष्मं विचूर्णयेत् ॥ ९७ ॥
तच्चूर्णं मधुना लीढं पाण्डुं हन्ति सकामलम् ।
किट्टाद्दशगुणं मुण्डं मुण्डात्तीक्ष्णं शताधिकम् ॥ ९८ ॥
तीक्ष्णाल्लक्षगुणं कान्तं भक्षणात्कुरुते गुणम् ।

अथ किट्टगुणाः—

किट्टं कषायं शिशिरं पाण्डुश्वयथुशोषजित् ॥ ९९ ॥
हलीमकं कामलां च हरते कुम्भकामलाम् ।

इति किट्टम् ।

अथ वङ्गम्—

खुरकं मिश्रकं चेति द्विधा वङ्गं जगुर्बुधाः ॥ १०० ॥
खुरकं श्रेष्ठमुदितं मिश्रकं त्ववरं मतम् ।
खुरकं चन्द्ररूप्याभं खुराकारं च कीर्त्यते ॥ १ ॥
एतल्लक्षणभिन्नं तु वङ्गं मिश्राभिधं मतम् ।

शोधनम्—

वङ्गं संशोधयेत्तत्र तप्ततैलादिके गणे ॥ २ ॥
ततः क्षिपेद्भ्रण्डिकायां चुल्लीस्थायां शनैः शनैः ।
तदधो ज्वालयेद्वह्निं द्रुते वङ्गे क्षिपेत्पुनः ॥ ३ ॥
अपामार्गचतुर्थांशं चूर्णं संचालयेदिदम् ।
स्थूलाग्रया लोहदर्व्या यावत्तद्भस्म जायते ॥ ४ ॥
ततः शरावपिहितं स्थापयेत्तत्र तद्भिषक् ।
स्वाङ्गशीतलमादाय शुद्धतालेन मेलयेत् ॥ ५ ॥
समेन निम्बुजद्रावैर्मर्दयेत्तत्पुनर्दृढम् ।
तदपूर्व घर्मशुष्कं पिप्पलस्य त्वगन्तरे ॥ ६ ॥
संस्थाप्यं पच्यादेवं तत्सप्तधा विपचेद्भिषक् ।
सर्वोत्तमं वङ्गभस्म सर्वकार्यकरं भवेत् ॥ ७ ॥

१ क. त्वाहितं म° । २ क. प्यमायसादेवं स° ।

अथान्यप्रकारः—

शुद्धं सतालमर्कस्य पिष्ट्वा दुग्धेन तत्पुटेत् ।
शुष्काश्वत्थभवैर्वल्कैः सप्तधा भस्मतां व्रजेत् ॥ ८ ॥

अथान्यप्रकारः—

रजनीरजसा वह्निस्थायां हण्ड्यां तु पूर्ववत् ।
वङ्गभस्म विधायाथ सोरकं तत्र निक्षिपेत् ॥ ९ ॥
वङ्गं तुर्यांशमथ तच्छरावेण पिधापयेत् ।
मन्दमग्निं घटीमेकां दत्त्वाऽथ स्वाङ्गशीतलम् ॥ ११० ॥
कुन्देन्दुधवलं वङ्गभस्म ग्राह्यं स्वकार्यकृत् ।

अथान्यप्रकारः—

वन्योत्पलोपरिस्थे तु गोणीखण्डे क्षिपेद्रजः ॥ ११ ॥
तिन्तिणीवल्कलस्याथ तिलांस्तत्र विनिक्षिपेत् ।
अङ्गुलार्धप्रमाणेन तत्र वङ्गदलं न्यसेत् ॥ १२ ॥
खण्डीकृतं पुनस्तेन क्रमेणैवात्र विन्यसेत् ।
तिलं तिन्तिणिवल्कं च गोमयांश्चाग्निना दहेत् ।
स्वाङ्गशीतं ततो ग्राह्यं युक्त्या वङ्गस्य भस्म तत् ॥ १३ ॥

तस्य गुणाः—

वङ्गं तिक्तोष्णरूक्षं कफकृमिवमिजिन्मेहमेदोनिलघ्नं
कासश्वासक्षयार्तिप्रशमितहुतभुग्मान्द्यमाध्मानदारि ।
बल्यं वृष्याङ्गभाक्तन्मनसिजजनकं स्वप्नमेहप्रणाशि
प्रज्ञाकृद्वीर्यमुच्चैरलघुरतिरसस्याऽऽस्पदं बृंहणं च ॥ १४ ॥
अशुद्धममृतं वङ्गं प्रमेहादिगदप्रदम् ।
गुल्महृद्रोगशूलार्शःकासश्वासवमिप्रदम् ॥ ११५ ॥

इति वङ्गम् ।

अथ सीसकम्—

नागो द्रुतोऽग्निसंयोगाद्वाविदुग्धे निपातितः ।
सच्छिद्रहण्डिकासंस्थे त्रिवारं शुद्धिमाप्नुयात् ॥ १६ ॥

---

१ क. °त पूर्वकेन ।

त्रिभिः कुम्भपुटैर्नागो वासारसविमर्दितः ।
सशिलो भस्मतामेति तद्रजः सर्वमेहनुत् ॥ १७ ॥

अथान्यप्रकारः—

नागे खर्परके निधाय कुनटीचूर्णं ददीत द्रुते
निम्बूकद्रवगन्धकेन पुटितं भस्मी भवत्याशु सः ।
एवं तालकवापतस्तु कुटिलं चूर्णीकृतं तं पुटे-
द्गन्धाम्लेन समस्तदोषरहितं योगेषु योज्यं भवेत् ॥ १८ ॥

अथान्यप्रकारः—

भूभुजङ्गममचिरं पिष्ट्वा पत्रं प्रलेपयेत् ।
हण्ड्यामग्नौ द्रुतं तत्र वासापामार्गसंभवम् ॥ १९ ॥
क्षारं विमिश्रयेत्तत्र चतुर्थांशं गुरूक्तितः ।
प्रहरं पाचयेच्चुल्ल्यां वासादर्व्या विघट्टयन् ॥ १२० ॥
तत उद्धृत्य तच्चूर्णं वासानीरैर्विमर्दयेत् ।
पुटेत्पुनः समुद्धृत्य तैरेव परिमर्दयेत् ।
एवं सप्तपुटैर्नागः सिन्दूराभः प्रजायते ॥ २१ ॥
नागः समीरकफपित्तविकारहन्ता
सर्वप्रमेहवनराजिकृपीटयोनिः ।
उष्णः सरो रजतरञ्जनकृद्व्रणार्शो-
गुल्मग्रहण्यतिसृतिक्षणदांशुमाली ॥ २२ ॥
अशुद्धः कुरुते नागः प्रमेहक्षयकामलाः ।
तस्मात्संशुद्ध एवायं मारणीयो भिषग्वरैः ॥ २३ ॥

इति नागः ।

अथोपधातवः—

अभ्रकं माक्षिकं तालं शिला नीलाञ्जनं तथा ।
तुत्थकं रसकं चैव प्रोक्ताः सप्तोपधातवः ॥ २४ ॥

अथाभ्रकोत्पत्तिः—

पुरा वधाय वृत्रस्य वज्रिणा वज्रमुद्धृतम् ।
विस्फुलिङ्गास्ततस्तस्य गगने परिसर्पिताः ॥ १२५ ॥

---

१ ग. °द्रवाद्दैः पञ्चसादिहेत् । २ क. °सादर्व्या विमर्दयेत् । स° ।

ते निपेतुर्घनध्वानाच्छिखरेषु महीभृताम् ।
तेभ्य एव समुत्पन्नं तत्तद्गिरिषु चाभ्रकम् ॥ २६ ॥
तत्र दक्षिणशैलेऽर्कशोषादल्पगुणं हि तत् ।
अल्पसत्त्वं तदा धत्ते तस्य सत्त्वं गुणप्रदम् ॥ २७ ॥
अतस्तूत्तरशैलोत्थं बहुसत्त्वं गुणाधिकम् ।
तद्वज्रं वज्रजातत्वादभ्रमभ्ररवोद्भवात् ।
गगनच्युतिजातत्वाद्गगनं च जगुः सुराः ॥ २८ ॥
विप्रक्षत्रियविट्शूद्रभेदात्तत्स्याच्चतुर्विधम् ।
क्रमेणैव सितं रक्तं पीतं कृष्णं च वर्णतः ॥ २९ ॥
प्रशस्यते सितं तारे रक्तं चैव रसायने ।
पीतं हेमनि कृष्णाभं गदेषु द्रुतयेऽपि च ॥ १३० ॥
पिनाकं दर्दुरं नागं वज्रं चेति चतुर्विधम् ।
मुञ्चत्यग्नौ विनिक्षिप्तं पिनाकं दलसंचयम् ॥ ३१ ॥
अज्ञानाद्भक्षणं तस्य महाकुष्ठप्रदायकम् ।
दर्दुरं त्वग्निगं चाति कुरुते दर्दुरध्वनिम् ॥ ३२ ॥
गोलकान्बहुशः कृत्वा स स्यान्मृत्युप्रदायकः ।
नागं वह्निस्थितं शश्वत्फूत्कारं परिमुञ्चति ॥ ३३ ॥
तच्छरीरगतं नित्यं व्याधिं कुर्याद्भगंदरम् ।
वज्रं तु वज्रवत्तिष्ठेत्तन्नाग्नौ विकृतिं व्रजेत् ॥ ३४ ॥
यत्नतो वर्जयेद्धीमानभ्रकत्रितयं भिषक् ।
चतुर्थं पीवरं वज्रं व्याधिवार्धक्यमृत्युजित् ॥ ३५ ॥

अथाभ्रशोधनम्—

कृष्णाभ्रकं धमेद्वह्नौ ततः क्षीरे विनिक्षिपेत् ।
भिन्नपत्रं तु तत्कृत्वा तण्डुलीयाम्लयोर्द्रवैः ॥ ३६ ॥
भावयेदष्टयामं तदेवमभ्रं विशुध्यति ।

अथान्यप्रकारः—

अथ वा बदरीक्वाथे ध्मातमभ्रं विनिक्षिपेत् ॥ ३७ ॥
मर्दितं पाणिना शुष्कं धान्याभ्राद‍तिरिच्यते ।



१ क. त्वग्निनिक्षिप्तं भावप्रकाशपाठः । २ क. भिद्रे चाग्नित कु° । ३ क. °थ पतावरी°

अथाभ्रमारणम्—

कृत्वा धान्याभ्रकं तच्च शोषयित्वाऽथ मर्दयेत् ॥ ३८ ॥
अर्कक्षीरैर्दिनं खल्वे चक्राकारं च कारयेत् ।
वेष्टयेदर्कपत्रैश्च सम्यग्गजपुटे पचेत् ॥ ३९ ॥
पुनर्मर्द्यं पुनः पाच्यं सप्तवारान्पुनः पुनः ।
ततो वटजटाक्वाथैस्तद्वद्दद्यात्पुटत्रयम् ॥ ४० ॥
म्रियते नात्र संदेहः प्रयोज्यं सर्वकर्मसु ।
तुल्यं घृतं मृताभ्रेण लोहपात्रे विपाचयेत् ।
घृते जीर्णे तदभ्रं तु सर्वयो(रो)गेषु योजयेत् ॥ ४१ ॥

तत्र धान्याभ्रकस्य विधिः—

पादांशशालिसंयुक्तमभ्रं बद्ध्वाऽथ कम्बले ।
त्रिरात्रं स्थापयेन्नीरे तत्क्लिन्नं मर्दयेत्करैः ॥ ४२ ॥
कम्बलाद्गलितं सूक्ष्मं वालुकारहितं च यत् ।
तद्धान्याभ्रमिति प्रोक्तमभ्रमारणसिद्धये ॥ ४३ ॥

अथान्यप्रकारः—

धान्याभ्रकस्य भागैकं द्वौ भागौ टङ्कणस्य च ।
पिष्ट्वा तदन्धमूषायां रुद्ध्वा तीव्राग्निना पचेत् ॥ ४४ ॥
स्वभावशीतलं चूर्णं सर्वरोगेषु योजयेत् ।

अथान्यप्रकारः—

धान्याभ्रकं समादाय मुस्तक्वाथैः पुटत्रयम् ॥ ४५ ॥
तद्वत्पुनर्नवानीरैः कासमर्दरसैस्तथा ।
नागवल्लीदलैः सूर्यक्षीरैर्देयं पृथक्पृथक् ॥ ४६ ॥
दिनं दिनं मर्दयित्वा क्वाथैर्वटजटोद्भवैः ।
दत्त्वा पुटत्रयं पश्चात्त्रिपुटं मुसलीद्रवैः ॥ ४७ ॥
त्रिर्गोक्षुरकषायेण त्रिः पुटेद्वानरीरसैः ।
मोचकन्दरसैः पाच्यं त्रिवारं कोकिलाक्षजैः ॥ ४८ ॥
रसैः पुटेत्ततो धेनुक्षीरादेकं पुटं मृदु ।
दध्ना घृतेन मधुना स्वच्छया सितया तथा ।
एकमेकं पुटं दद्यादभ्रस्यैवं मृतिर्भवेत् ॥ ४९ ॥

---

१ क. °मथ मा° । २ क. °र्वयोगे° । ३ ग. पुटतटोत्थैः स्नुक्क्षी° । ४ ग. °टं मुहुः ।

अथान्यप्रकारः—

धान्याभ्रं मेघनादैः कदलिघनजलैष्टङ्कणाङ्कोलतोयैः
खल्वे संमर्द्य गाढं तदनु गजपुटाद्द्वादशैवं प्रदद्यात् ।
मीनाक्षीभृङ्गतोयैस्त्रिफलजलयुतैर्मर्दयेत्सप्तवारं
गन्धं तुल्यं च दत्त्वा प्रवरगजपुटात्पञ्चतां याति मेघः ॥ ५० ॥

अथान्यप्रकारः—

दुग्धत्रयं कुमार्यम्बु गजमूत्रं नृमूत्रकम् ।
वटभृङ्गमजारक्तमेभिरभ्रं सुमर्दितम् ॥ ५१ ॥
शतधा पुटितं भस्म जायते पद्मरागवत् ।
निश्चन्द्रिकं भजेत्तत्तु शुद्धदेहे रसायनम् ॥ ५२ ॥
मृतं निश्चन्द्रितां यातमरुणं चामृतोपमम् ।
सचन्द्रं विषवज्ज्ञेयं मृत्युकृद्व्याघ्ररोमवत् ॥ ५३ ॥
पीडां विधत्ते विविधां नराणां कुष्ठं क्षयं पाण्डुगदं च कुर्यात् ।
हृत्पार्श्वपीडां च करोत्यसह्यामशुद्धमभ्रं गुरुवह्निहृच्च ॥ ५४ ॥

अथामृतीकरणम्—

वराम्बुगोघृतं चाभ्रं कलाषड्दिक्समांशकम् ।
मृद्वग्निना पचेल्लौह्यामभृतीकरणं त्विदम् ॥ ५५ ॥

निषेधः—

क्षाराम्लविदलं कोलं कर्कटीकारवेलकम् ।
वृन्ताकं च करीरं च तैलं चाभ्रे विवर्जयेत् ॥ ५६ ॥

तस्य गुणाः—

अभ्रं कषायं मधुरं सुशीतमायुष्करं धातुविवर्धनं च ।
हन्यात्त्रिदोषं व्रणमेहकुष्ठं प्लीहोदरग्रन्थिविषक्रिमींश्च ॥ ५७ ॥
रोगान्हन्ति द्रढयति वपुर्वीर्यवृद्धिं विधत्ते
तारुण्याढ्यं रमयति शतं योषितां नित्यमेव ।
दीर्घायुष्काञ्जनयति सुतान्सिंहतुल्यप्रभावान्
मृत्योर्भीतिं हरति च सदा सेव्यमानो मृताभ्रम् ॥ ५८ ॥

---

१ °टङ्कण° ।

वयःस्तम्भकारी जरामृत्युहारी
बलारोग्यधारी महाकुष्ठवारी ।
नृणां मेघ एषः सं योगेषु योज्यः
सदा सूतराजस्य तुल्यो गुणेन ॥ ५९ ॥

इत्यभ्रकम् ।

अथ स्वर्णमाक्षिकम्—

स्वर्णवर्णं गुरु स्निग्धमीषन्नीलच्छविच्छटम् ।
कषे कनकवद्घृष्टं तद्धरं हेममाक्षिकम् ॥ १६० ॥

इति स्वर्णमाक्षिकलक्षणम् ।

अशुद्धत्वमाह—

अशुद्धं माक्षिकं कुर्यादान्ध्यं कुष्ठं क्षयं कृमीन् ।
शोधनीयं प्रयत्नेन तस्मात्कनकमाक्षिकम् ॥ ६१ ॥

शुद्धिमाह—

माक्षिकस्य त्रयो भागा भागैकं सैन्धवस्य च ।
मातुलुङ्गद्रवैर्वाऽथ जम्बीरस्य द्रवैः पचेत् ॥ ६२ ॥
चालयेल्लोहजे पात्रे यावत्पात्रं तु लोहितम् ।
भवेत्ततस्तु संशुद्धिं स्वर्णमाक्षिकमृच्छति ॥ ६३ ॥

अथैतन्मारणविधिः—

माक्षिकस्य चतुर्थांशं दत्त्वा गन्धं विमर्दयेत् ।
उरुबूकस्य तैलेन ततः कार्या सुचक्रिका ॥ ६४ ॥
शरावसंपुटे कृत्वा पुटेद्गजपुटेन च ।
धान्यस्य तुषमूर्ध्वाधो दत्त्वा शीतं समुद्धरेत् ॥ ६५ ॥
सिन्दूराभं भवेद्भस्म माक्षिकस्य न संशयः ।

अथान्यप्रकारः—

कुलित्थस्य कषायेण घृष्ट्वा तैलेन वा पुटेत् ॥ ६६ ॥
अजामूत्रेण वा हेममाक्षिकं भस्म जायते ।

गुणाः—

माक्षिकं तिक्तमधुरं मेहार्शःक्षयकुष्ठनुत् ॥ ६७ ॥
कफपित्तहरं शीतं योगवाहि रसायनम् ।

इति स्वर्णमाक्षिकम् ।

## अथ तारमाक्षिकम्—

कांस्यवच्चाकचक्याढ्यं कषे घृष्टं तु रूप्यवत् ॥ ६८ ॥
गुरु स्निग्धं सितं यत्तच्छ्रेष्ठं स्यात्तारमाक्षिकम् ।
स्वर्णमाक्षिकवद्दोषा विज्ञेयास्तारमाक्षिके ॥ ६९ ॥
अतस्तद्दोषशान्त्यर्थं शोधनं कथ्यते यथा ।
कर्कोटीमेषशृङ्ग्युत्थद्रवैर्जम्बीरजैर्दिनम् ॥ १७० ॥
भावयेदातपे तीव्रे विमला शुध्यति ध्रुवम् ।

## अथैतन्मारणम्—

स्वर्णमाक्षिकवज्ज्ञेयं कांस्यमाक्षिकमारणम् ॥ ७१ ॥
विमलाया गुणाः किंचिद्धीनाः कनकमाक्षिकात् ।

इति कांस्यमाक्षिकम् ।

## अथ तालकविधिः—

अशुद्धं तालमायुर्हृत्कफमारुतमेहकृत् ॥ ७२ ॥
तापस्फोटाङ्गसंकोचान्कुरुते तेन शोधयेत् ।

## अथ तालकस्य शोधनविधिः—

तालकं कणशः कृत्वा तच्चूर्णं काञ्जिके क्षिपेत् ॥ ७३ ॥
दोलायन्त्रेण यामैकं ततः कूष्माण्डजद्रवे ।
तिलतैले पचेद्यामं यामं च त्रिफलाजले ॥ ७४ ॥
चूर्णोदके च यामैकं पक्वं शुध्यति तालकम् ।

## अथ तालकस्य मारणविधिः—

सदलं तालकं शुद्धं पौनर्नवरसेन तु ॥ ७५ ॥
खल्वे विमर्दयेदेकं दिनं पश्चाद्धि शोषयेत् ।
संशोष्य गोलकं तस्य कुर्यात्तच्च विशोषयेत् ॥ ७६ ॥
ततः पुनर्नवाक्षारैः स्थाल्यर्धं तु प्रपूरयेत् ।
तत्र तद्गोलकं धृत्वा पुनस्तेनैव पूरयेत् ॥ ७७ ॥
आकण्ठं पिठरं तस्य पिधानं धारयेन्मुखे ।
स्थालीं चुल्ल्यां समारोप्य क्रमाद्वह्निं विवर्धयेत् ॥ ७८ ॥

---

१ क. शोभय° । २ क. °लोत्थ गो° । ३ क. तस्य वि° । ४ ग. स्थाल्यर्धं म° ।

दिनान्यन्तरशून्यानि पञ्च वह्निं प्रदीपयेत् ।
एवं तु म्रियते तालं मात्रा तस्यैव रक्तिका ।
अनुपानान्यनेकानि यथायोग्यं प्रयोजयेत् ॥ ७९ ॥

अथ तालकगुणाः—

हरितालं कटु स्निग्धं कषायोष्णं हरेद्विषम् ।
कण्डूकुष्ठास्यरोगास्रवातपित्तकफव्रणान् ॥ १८० ॥

अन्यच्च—

तालकं हरते रोगान्कुष्ठमृत्युजरापहम् ।
शोधितं कुरुते वीर्यं कान्तिं वृद्धिं तथाऽऽयुषः ॥ ८१ ॥

अथ मनःशिला—

मनःशिला मन्दबलं करोति जन्तुन्ध्रुवं शोधनमन्तरेण ।
मलस्य बन्धं किल मूत्ररोधं सशर्करं कृच्छ्रगदं च कुर्यात् ॥८२॥

अथ तच्छोधनविधिः—

पचेत्र्यहमजामूत्रे दोलायन्त्रे मनःशिलाम् ।
भावयेत्सप्तधा पित्तैरजायाः सा विशुध्यति ॥ ८३ ॥

अथान्यप्रकारः—

अगस्तिपत्रतोयेन भाविता सप्तवारकम् ।
शृङ्गवेररसैर्वाऽपि विशुध्यति मनःशिला ॥ ८४ ॥

अथ गुणाः—

मनःशिला गुरुर्वर्ण्या सरोष्णा लेखनी कटुः ।
तिक्ता स्निग्धा विषश्वासकासभूतकफास्रनुत् ॥ ८५ ॥

इति मनःशिला ।

अथ खर्परम्—

नृमूत्रे वाऽथ गोमूत्रे सप्ताहं रसकं पचेत् ।
दोलायन्त्रेण शुद्धं स्यात्ततः कार्येषु योजयेत् ॥ ८६ ॥

---

१ ग. °गस्रप°।

अथ गुणाः—

खर्परं कटुकं क्षारं कषायं वामनं लघु ।
लेखनं भेदनं शीतं चक्षुष्यं कफपित्तनुत् ॥
विषास्रकुष्ठकण्डूनां नाशनं परमं मतम् ॥ ८७ ॥

इति खर्परम् ।

अथ तुत्थम्—

विष्ठया मर्दयेत्तुत्थं मार्जारककपोतयोः ।
दशांशं टङ्कणं दत्त्वा पचेल्लघुपुटे ततः ॥ ८८ ॥
पुटं पुञ्ञा पुटं क्षौद्रैरेवं तुत्थं विशुध्यति ।

अथान्यप्रकारः—

ओतोर्विशा समं तुत्थं सक्षौद्रं टङ्कणाद्धियुक् ॥ ८९ ॥
त्रिपेदं पुटितं शुद्धं वान्तिभ्रान्तिविवर्जितम् ॥ ९० ॥

अथ गुणाः—

तुत्थकं कटुकं क्षारं कषायं विशदं लघु ।
लेखनं भेदि चक्षुष्यं कण्डूकृमिविषापहम् ॥
कफास्रपित्तकुष्ठघ्नं श्लेष्ममेदोविनाशनम् ॥ ९१ ॥

इति तुत्थकम् ।

अथ स्रोतोऽञ्जनम्—

स्रोतोऽञ्जनं च द्विविधं श्वेतकृष्णप्रभेदतः ।
त्रिफलावारिणा स्विन्नं तद्द्वयं शुद्धिमृच्छति ॥ ९२ ॥

अथ तद्गुणाः—

सौवीरं ग्राहि मधुरं चक्षुष्यं कफपित्तजित् ।
हिध्माक्षयास्रनुच्छीतं स्रोतोऽञ्जनमपीदृशम् ॥ ९३ ॥

इत्युपधातवः ।

इति योगतरङ्गिण्यां धातूपधातूत्पत्तिशोधनमारणगुणकथनं नामैकचत्वारिंशस्तरङ्गः ॥ ४१ ॥

अथ द्विचत्वारिंशस्तरङ्गः ।

अथ रसः—

गिरीशगिरिजात्मको चपलगन्धकौ सेवितौ
जवाज्जगति जन्मिनामतुलभुक्तिमुक्तिप्रदौ ।
प्रणम्य कथयत्यहो रसविधिं त्रिमल्लो द्विजः
प्रदर्शितविधेर्गुरोर्भृशमधीत्य तन्त्राण्यपि ॥ १ ॥
रस्यतेऽमर्त्यमर्त्याद्यैर्भुक्तिमुक्तिप्रलिप्सुभिः ।
यतस्ततो रस इति प्रोच्यते पारदो बुधैः ॥ २ ॥

रसार्णवात्—

स्कन्दात्तारकहिंसायै कैलासे प्रार्थितोऽमरैः ।
रते शंभोश्च्युतं रेतः गृहीतं वह्निना मुख ॥ ३ ॥
क्षिप्तं तेन चतुर्दिक्षु क्ष्मायां तत्पृथक्पृथक् ।
सौम्यादिदिक्त्रयस्थं तद्गौरीशापाच्च कायकृत् ॥ ४ ॥
पश्चिमायां तु यत्क्षिप्तं दिशि तत्कार्यकारकम् ।
एषोत्पत्तिः समाख्याता पारदस्य मनीषिभिः ॥ ५ ॥
मूर्छित्वा हरति रुजं बन्धनमुपलभ्य खे गतिं धत्ते ।
अमरी करोति सुमृतः कोऽन्यः करुणाकरः सूतात् ॥ ६ ॥
श्वेतारुणहरिद्भामकृष्णसूता द्विजादयः ।
देहे लोहे गदे विद्धाः योज्याश्चैव स्वजातिषु ॥ ७ ॥
तेषु नैसर्गिकाः दोषाः पञ्च तौ द्वावुपाधिजौ ।

( *अथ गोरक्षमतात्— )

इति दोषाः सप्त सूते कञ्चुका अपि सप्त च ॥ ८ ॥
मलो विषं वह्निगिरी चापल्यं च स्वभावजाः ।
दोषाः पञ्चाथ विज्ञेयौ नागवङ्गावुपाधिजौ ॥ ९ ॥

उक्तं च सिद्धमते—

मिलितौ नागवङ्गाभ्यां क्षेत्रयोर्नागवङ्गयोः ।
स्खलनादथ वाऽपायैर्वणिग्भिर्मेलितो रसः ॥ १० ॥
ताभ्यां ततो रसे दोषौ द्वौ स्यातां नागवङ्गजौ ।

* चतुश्चिह्नान्तर्गतो ग्रन्थः क. पुस्तकस्थः ।

१ क. 'योः । रसभेलनपापाय वाणे' ।

अथ तद्दोषविकाराः कथ्यन्ते—

मलेन मूर्छा मरणं विषेण दाहोऽग्निना भूमिभृता तु जाड्यम् ।
वीर्यक्षयश्चापलतोऽथ वङ्गात्कुष्ठानि नागान्मलगण्डरोगाः ॥ ११ ॥

विशेषमाह—

वह्निर्विषं मलश्चेति मुख्या दोषास्त्रयो रसे ।
एते कुर्वन्ति संतापं मृतिं मूर्छां नृणां क्रमात् ॥ १२ ॥

( इति *गोरक्षमतात् । )

अथ कञ्चुकाः कथ्यन्ते—

मृत्पाषाणजलाख्याश्च कालिका पालिका तथा ।
श्यामा कपालिका चेति पारदे सप्त कञ्चुकाः ॥ १३ ॥

अथ तद्विकारानाह—

पाण्डुर्मृदोऽश्मनो जाड्यं खालित्यं जलकञ्चुकात् ।
कापाल्या गजचर्माणि कालिकाया कदो(जो)वरे ॥ १४ ॥
श्यामायास्तु प्रमेहाः स्युः कपाल्या जठराणि वै ।

इति बौद्धसर्वस्वात् ।

अतो विंशतिसंस्कारा दोषशैर्दोषमुक्तये ॥ १५ ॥
सूतराजस्य कर्तव्या भुक्तिमुक्तिप्रकाङ्क्षिभिः ।
योऽशुद्धं घातयेत्सूतं निर्वीर्यं वाऽथ मानवः ।
ब्रह्महा स दुराचारी मम द्रोही महेश्वरि ॥ १६ ॥

इति शिवागमात् ।

तथोक्तं रसेन्द्रचिन्तामणौ—

तस्मात्सर्वप्रयत्नेन सूतः शोध्यो विजानता ।
तत्साधकाः प्रकथ्यन्ते संस्काराः किल विंशतिः ॥ १७ ॥

ते यथा शिवागमे—

पटसारण१संमर्दन२मूर्छन३मुत्थापन४स्वेद५पातन६बोधन७नियमन८
दीपन ९ मुखकरण १०जारण ११ सविडा १२ मान १३ गर्भद्रुतयो १४

---

* भनुविद्दान्तर्गतोऽयं ग्रन्थः क. पुस्तकस्थः ।

---

१ क. °क्षयं आपते चाथ । २ क. कालिकाया° । ३ क. °द कण° । ४ क. °कायाऽथेद° । ५ ग. °मर्दी° ।

रञ्जन१५मथ वेधन१६बहिर्द्रुतयः १७ सारणमपि१८ च क्रामण१९ मारण २०मिति सूतसंस्काराः ॥ १८ ॥

पलाद्दूनस्य सूतस्य शतपलाधिकस्य च ।
न संस्कारः प्रकर्तव्यः संस्कार्यः स्यात्ततोऽपरः ॥ १९ ॥
शुभेऽहनि प्रकर्तव्य आरम्भो रसशोधने ।
एकान्ते सद्मनि शुभे गुराऽभ्यर्च्यो हि भैरवः ॥ २० ॥

## अथ पटसारणम्—

चतुर्गुणेन वस्त्रेण बद्ध्वा संगालितो रसः ।
विमुक्तो नागवङ्गाभ्यां जायते पटसारितः ॥ २१ ॥

इति पटसारणम् ।

## अथ मर्दनम्—

रक्तेष्टकानिशाधूमसारोर्णा*वह्निभस्मकैः ।
सजंबीरद्रवैर्मर्द्यो नाना + दोषस्य शान्तये ॥ २२ ॥
राजवृक्षस्य मूलस्य चूर्णेन सह कन्यया ।
मलदोषापनुत्त्यर्थं मर्दयेत्पारदं भिषक् ॥ २३ ॥
कृष्णाधत्तूरजद्रावैश्चाञ्चल्यविनिवृत्तये ।
त्रिफलाकन्यकातोयैर्विषदोषोपशान्तये ॥ २४ ॥
मर्द्यस्त्रिकटुकन्याभिर्गिरिदोषापनुत्तये ।
चित्रकस्य तु चूर्णेन सकान्येनाग्निशान्तये ॥ २५ ॥
आरनालेन चोष्णेन क्षालयेत्प्रतिमर्दनम् ।
रसं तत्र प्रयातं तु शोषयित्वोर्ध्वपातनात् ॥ २६ ॥
गृहीत्वा प्रक्षिपेत्सूते स्यादेवं पारदः शुचिः ।
पारदात्षोडशांशं तु मिलित्वा सकलैर्भिषक् ॥ २७ ॥
चूर्णं प्रदेयं च पलं मर्दने तप्तखल्वके ।
अजाशकृत्तुषाग्निं च खनित्वा भूमिगावपेत् ॥ २८ ॥
तस्योपरि स्थितं खल्वं तप्तखल्वं जगुर्बुधाः ।
एतन्मर्दनमाख्यातं रससंशुद्धये बुधैः ॥ २९ ॥

इति मर्दनम् ।

---

* क. भस्मचूर्णकैः इति योगरत्नपाठः । + क. नागदो° । इति योगरत्नपाठः ।

---

१ ग. °नि पुरोऽभ्यर्च्याऽऽर्याद्युग्भैरवान् । २ ग. °मर्दीर° । ३ ग. नागवङ्गोपरा° ।

## अथ मूर्छनम्—

ऊषणं त्रिफला वन्ध्या कन्दक्षुद्राद्वयान्वितैः ।
चित्रकोर्णानिशाक्षारकन्याकनकद्वयैः ॥ ३० ॥
सूतं कृतेन क्वाथेन वारान्सप्त विमूर्छयेत् ।
इत्थं संमूर्छितः सूतो मुञ्चत्सप्तापि कञ्चुकान् ॥ ३१ ॥

इति मूर्छनम् ।

## अथोत्थापनम्—

तत उत्थापयेत्सूतमातपे निम्बुकार्दितम् ।
उत्थापनविशिष्टं तु चूर्णपातनयन्त्रके ॥ ३२ ॥
धृत्वाऽग्निं ऊर्ध्वभाण्डान्तं संग्रहेत्पारदं सुधीः ।

इत्युत्थापनम् ।

## अथ स्वेदनम्—

रसं चतुर्गुणे वस्त्रे सरसोनशरावके ॥ ३३ ॥
निबध्य दोलायन्त्रं तु प्रकल्प्य दिवसं पचेत् ।
सव्योषत्रिफलावह्निकन्याकल्के तुषाम्बुनि ॥ ३४ ॥
शेषदोषापनुत्त्यर्थमिदं स्वेदनमीरितम् ।
नानाधान्यैर्यथाप्राप्तैस्तुषवर्जैर्जलप्लुतैः ॥ ३५ ॥
मृद्भाण्डं पूरितं रक्षेद्यावदम्लत्वमाप्नुयात् ।
तन्मध्ये पाचनं यन्त्रे विष्णुक्रान्तां पुनर्नवाम् ॥ ३६ ॥
मीनाक्षीं चैव सर्पाक्षीं सहदेवीं शतावरीम् ।
त्रिफलां गिरिकर्णीं च हंसपादीं च चित्रकम् ॥ ३७ ॥
समूलकाण्डं संपेष्य यथालाभं निवेशयेत् ।
पूर्वाम्लभाण्डमध्ये तु धान्याम्लकमिदं भवेत् ॥ ३८ ॥
स्वेदनादिषु सर्वत्र रसराजस्य योजयेत् ।
अत्यम्लमारनालं वा तदभावे नियोजयेत् ॥ ३९ ॥

इति स्वेदनम् ।

## अथोर्ध्वपातनम्—

भागास्त्रयो रसस्यार्कचूर्णमंशं सनिम्बुकम् ।
एतत्संमर्दयेत्तावद्यावदायाति पिण्डताम् ॥ ४० ॥

---

१ क. 'त्रकोण नि' । २ क. 'दः शुचिः । ३ ग. 'ध्वे धनवाडमध्यो नि' ।

तं पिण्डं तलभाण्डस्थमूर्ध्वभाण्डे जलं क्षिपेत् ।
संमुद्र्याग्निमधस्तस्य चतुर्यामं प्रबोधयेत् ॥ ४१ ॥
युक्त्योर्ध्वभाण्डसंलग्नं गृह्णीयात्पारदं शुभम् ।

इत्यूर्ध्वपातनम् ।

## अथाधः पातनम्—

नवनी*ताभ्रकं सूतं घृष्ट्वा जम्माम्भसा दिनम् ॥ ४२ ॥
वानरीशिग्रुशिखिभिर्लवणासुरिसंयुतैः ।
नष्टपिष्टं रसं कृत्वा लेपयेदूर्ध्वभाण्डकम् ॥ ४३ ॥
ऊर्ध्वभाण्डोदरं लिप्त्वाऽधोभाण्डं जलसंभृतम् ।
संधिलेपं द्वयोः कृत्वा तद्यन्त्रं भुवि पूरयेत् ॥ ४४ ॥
उपरिष्टात्पुटे दत्ते जले पतति पारदः ।
अधः पातनमित्युक्तं सिद्धाद्यैः सूतकर्मणि ॥ ४५ ॥

इत्यधःपातनम् ।

## अथ तिर्यक्पातनम्—

घटे रसं विनिक्षिप्य सजलं घटमन्यकम् ।
+तिर्यङ्मुखं विधायैतन्मुखं संमुद्रयेत्सुधीः ॥ ४६ ॥
रसाधो ज्वालयेदग्निं यावत्सूतो जलं विशेत् ।
तिर्यक्पातनमित्युक्तं सिद्धैर्नागार्जुनादिभिः ॥ ४७ ॥

इति तिर्यक्पातनम् ।

## अथ पातनम्—

पातनत्रितयाद्देवि दोषकञ्चुकवर्जितः ।
पारदो जायते भूरिप्रभावो भासुरप्रभः ॥ ४८ ॥

इति पातनम् ।

## अथ बोधनम्—

एवं कदर्थितः सूतः षण्ढत्वमधिगच्छति ।
तन्मुक्तयेऽस्य कर्तव्यं बोधनं तद्यथोच्यते ॥ ४९ ॥

---

* क. °तार्द्रकमिति रसेन्द्रचिन्तामणिपाठः । + क. तिर्यङ्मुखं द्वयं कृत्वा तन्मुखं रोधयेत्सुधीः इति रसेन्द्र° पाठः ।

विश्वामित्रकपाले वा काचकूप्यामथापि वा ।
मृष्टाम्बुजं विनिक्षिप्य तत्र तन्मज्जनावधि ॥ ५० ॥
पूरयेत्त्रिदिने भूर्यो गजहस्तप्रमाणतः ।
एवं कृतः सूतराजः षण्ढभावं विमुञ्चति ॥ ५१ ॥

मतान्तरं यथा—

लवणेनाम्लपिष्टेन द्रविडकान्तर्गतं रसम् ।
आच्छाद्याथ जलं किंचित्क्षिप्त्वा यत्नेन रोधयेत् ।
ऊर्ध्वं लघुपुटं देयं प्राप्तपुंस्त्वो रसो भवेत् ॥ ५२ ॥

अन्यमतम्—

कदर्थनेनैव नपुंसकत्वमेवं भवेदस्य रसस्य तस्मात् ।
वीर्यप्रकर्षाय च भूर्जपत्रे स्वेद्यो जले सैन्धवचूर्णगर्भे ॥ ५३ ॥
इति बोधनम् ।

अथ नियमनम्—

सर्पाक्षीचिञ्चिकावन्ध्यामृङ्गाब्जकनकाम्बुभिः ।
दिनं संस्वेदितः सूतो नियमात्स्थिरतां व्रजेत् ॥ ५४ ॥

मतान्तरं यथा—

उत्तराशाभवस्थूलरक्तसैन्धवलोधकैः ।
तद्गर्भे रन्ध्रकं कृत्वा सूतं तत्र विनिक्षिपेत् ॥ ५५ ॥
ततस्तु चणकक्षारं दत्त्वा चोपरि नेम्बुकम् ।
रसं प्रक्षिप्य दातव्यं तादृक्सैन्धवरोटकम् ॥ ५६ ॥
गर्तं कृत्वा धरागर्भे दत्त्वा सैन्धवसंपुटम् ।
धूलिमष्टाङ्गुलिं दत्त्वा करीषं दिनसप्तकम् ॥ ५७ ॥
वह्निं प्रज्वाल्य तद्ग्राह्यं क्षालयेत्काञ्जिकेन च ।
अयं नियमनो नाम संस्कारो गदितो बुधैः ॥ ५८ ॥
अभावे चणकक्षारसार्षपेण च सादरम् ।
स्वाजिका वा प्रदातव्या नूनमित्याह भास्करः ॥ ५९ ॥
इति नियमनम् ।

---

१ ग. सृष्टपम्बू° । २ ग. °म्यां राज° । ३ क. °वपूर्णे° । ४ ग. °वरोट° ।

## अथ दीपनम्—

कासीसं पञ्चलवणराजिकामरिचानि च ।
मूशिग्रुबीजमेकत्र टङ्कणेन समन्वितम् ॥ ६० ॥
आलोड्य काञ्जिके दोलायन्त्रे पच्याद्दिनत्रयम् ।
दीपनं जायते सम्यग्रसराजस्य जारणम् ।
अथ वा चित्रकद्रावैः काञ्जिके त्रिदिनं पचेत् ॥ ६१ ॥

इति दीपनम् ।

अथ षड्बिन्दुकीटैश्च रसो मर्द्यस्त्रियासरम् ।
लवणाम्लैर्मुखं तस्य जायते धातुभक्षकम् ॥ ६२ ॥

## अन्यमतम्—

सास्थो रसः स्यात्पटु शिग्रुतुल्यैः सराजिकैः शोषणकैस्त्रिरात्रम् ।
पिष्टस्ततः स्विन्नतनुः सुवर्णमुख्यानयं खादति सर्वधातून् ॥ ६३ ॥

इति मुखकरणम् ।

## अथ जारणम्—

## रसेन्द्रचिन्तामणौ—

जारणं हि नाम पातनगालनव्यतिरेकेण घनहेमादिग्रासपूर्वकपूर्वावस्थापन्नत्वम् । किंच घनहेमादिलोहजीर्णस्य रसस्य भक्षणे कृतक्षेत्रीकरणानामेव शरीरिणामधिकार इत्यभिहितमीश्वरेण । फलमप्यस्य तेनैवावादि । यथा—

सर्वपापक्षये जाते प्राप्यते रसजारणा ।
तत्प्राप्तौ प्राप्तमेव स्याद्विज्ञानं मुक्तिलक्षणम् ॥ ६४ ॥
यावद्दिनानि वह्निस्थो जारणे धार्यते रसः ।
तावद्वर्षसहस्राणि शिवलोके महीयते ॥ ६५ ॥
दिनमेकं रसेन्द्रस्य यो ददाति हुताशनम् ।
द्रवन्ति तस्य पापानि कुर्वन्नपि न लिप्यते ॥ ६६ ॥

इत्यादि ।

अजारयन्तः पविहेमगन्धं वाञ्छन्ति सूतात्फलमप्युदारम् ।
क्षेत्रादनुप्तादपि सस्यजातं कृषीवलास्ते भिषजश्च मन्दाः ॥ ६७ ॥

---

१ क. °क्षणकृत° । २ क. °रिणो भक्षणेऽधि° ।

तत्र प्रथमं गन्धकजारणं यथोक्तं शिवागमे—

तुल्ये तु गन्धके जीर्णे शुद्धाच्छतगुणो रसः ।
द्विगुणे गन्धके जीर्णे सर्वथा सर्वकुष्ठहा ॥ ६८ ॥
त्रिगुणे गन्धके जीर्णे सर्वपाण्ड्यविनाशनः ।
चतुर्गुणे तत्र जीर्णे वलीपलितनाशनः ॥ ६९ ॥
गन्धे पञ्चगुणे जीर्णे क्षयक्षयकरो रसः ।
षड्गुणे गन्धके जीर्णे सर्वरोगहरो भवेत् ॥ ७० ॥
अवश्यमित्युवाचेदं देवीं श्रीभैरवः स्वयम् ।

इदं गन्धकजारणफलं रसेन्द्रचिन्तामणावन्यथा पठन्ति यथा—

समे गन्धे तु रोगघ्नो द्विगुणे राजयक्ष्मनुत् ॥ ७१ ॥
जीर्णे तु त्रिगुणे गन्धे कामिनीदर्पनाशनः ।
चतुर्गुणे तु तेजस्वी सर्वशास्त्रविशारदः ॥ ७२ ॥
भवेत्पञ्चगुणे सिद्धः षड्गुणे मृत्युनाशनः ॥ ७३ ॥
षड्गुणे रोगहेति यदुक्तं तन्मूर्छायामेवावगन्तव्यम् ॥

उक्तं च—

रसगुणबलिजारणं विना यन्न खलुरुजाहरणक्षमो रसेन्द्रः ।
न जलदकलधौतपाकहीनः स्पृशति रसायनतामिति प्रतिज्ञा ॥७४॥

गन्धकजारणायां गण्डूकायन्त्रं यथा—

आकण्ठं कलशं भूमौ निखाय जलसंभृतम् ।
शरावस्तन्मुखे स्थाप्यो मध्ये छिद्रसमन्वितः ॥ ७५ ॥
नीरावियोगिनीं तत्र च्छिद्रे काचविलेपिताम् ।
मृन्मूषां स्थापयेत्तस्यामूर्ध्वाधस्तुल्यगन्धकम् ॥ ७६ ॥
रसं निक्षिप्य तस्योर्ध्वं शरावेण विमुद्रयेत् ।
वन्योपलाग्निं तस्योर्ध्वं ज्वालयेद्गुरुमार्गतः ॥ ७७ ॥
स्वाङ्गशीतं समुद्धृत्य पुनस्तुर्यांशगन्धकम् ।
दत्त्वा पूर्वक्रमेणैव जारयेत्षड्गुणं बलिम् ॥ ७८ ॥
षड्गुणे गन्धके जीर्णे स्याद्रसः सर्वरोगहा ।

अथान्यप्रकारः—

गुरुशास्त्रं परित्यज्य विना गन्धकजारणात् ॥ ७९ ॥

रसं निर्माति दुर्मेधाः शपेत्तं परमेश्वरः ।
सूते गन्धरसैकांशं निक्षिप्य मृदुखल्वके ॥ ८० ॥
तावत्संकुट्टयेत्पिण्डं भवेद्वा ताम्रपात्रगे ।
तत्तुल्यं गन्धकं दत्त्वा रुद्ध्वा तल्लोहसंपुटे ॥ ८१ ॥
पुटयेद्भूधरे यन्त्रे यावज्जीर्यति गन्धकः ।
एवं पुनः पुनः कुर्याद्यावज्जीर्यति षड्गुणः ॥ ८२ ॥

अथान्यप्रकारः—

सूतप्रमाणं सिकताख्ययन्त्रे दत्त्वा बलिं मृद्घटितेऽल्पभाण्डे ।
तैलावशेषेऽत्र रसं नियुज्यान्मग्नार्धकायं प्रविलोक्य भूयः ॥ ८३ ॥
आषड्गुणं गन्धकमल्पमल्पं क्षिपेदसौ जीर्णबलिर्बली स्यात् ।
रसेषु सर्वेषु नियोजितोऽयमसंशयं हन्ति गदं जवेन ॥ ८४ ॥

अथान्यप्रकारो रसेन्द्रचिन्तामणौ—

निरवधिनिपीडितमृदम्बरादिपरिलिप्तामतिकठिनकाचघटीमग्रे वक्ष्यमाणप्रकारां रसगन्धकगर्भिणीमधस्तर्जनीप्रमाणितच्छिद्रायामनुरूपस्थाल्यामारोप्य परितस्तां द्वित्र्यङ्गुलिद्वयसेन लवणेन निरन्तरालीकरणपुरःसरं सिकताभिरापूर्य वर्धमानकमारोपयेदिति क्रमतश्च त्रिचतुराणि पञ्चषाणि वा वासराणि ज्वलनज्वालया पाचनीयमित्येकं वालुकायन्त्रम् ।

भूधरयन्त्रमाह—

हस्तमात्रमितभूधरान्तर्निखातां प्राग्वत्काचघटीं नातिचिपिटमुखीं नात्युच्चमुखीं मषीभाजनप्रायां खर्परचक्रिकया काचचक्रिकया वा निरुद्धवदनां मृन्मयीं वा विधाय करीषाग्निभिरुपरिपुटो देय इति भूधरयन्त्रम् ।

अत्र कज्जलीमन्तरेण केवलं गन्धकं जारयन्ति ।
कूपीकोटरमागतं रसगुणैर्गन्धं तुलायां विभुं
विज्ञाय ज्वलने क्रमेण सिकतायन्त्रे शनैः पाचयेत् ।
वारंवारमनेन वह्निविधिना गन्धक्षयं साधये-
त्सिन्दूराद्युचितोऽनुभूय भणितः कर्मक्षमोऽयं मया ॥ ८५ ॥

---

१ क.° त्संकुट्टये° । २ क. बलिं प्रदद्यात् । ३ ग. °र्भवेत्तुल्यं° । ४ क. °द्युतितोऽ ।

त्रिगुणमिह रसेन्द्रमेकशं कनकपयोधरतारपङ्कजेशम् ।
रसगुणबलिभिर्विधाय पिष्टिं रचय निरन्तरमम्बुभिः कुमार्याः॥८६॥
अनया गन्धको जार्यो भूधरे यन्त्रनायके ।
यथायथा जीर्णगन्ध उत्तमस्तु तथा तथा ॥ ८७ ॥
अनेन यन्त्रद्वितयेन भूरिहेमाभ्रसत्त्वाद्यपि जारयन्ति ।
यथेष्टमन्यैः स्वमनोविकारैर्विचक्षणाः पल्लवयन्तु भूयः ॥ ८८ ॥
अन्तर्धूमं विपाचितः शतगुणगन्धेन जारितः सूतः ।
स भवेत्सहस्रवेधास्तारे ताम्रे भुजङ्गे वा ॥ ८९ ॥
इति गन्धकजारणम् ।

अथ स्वर्णजारणम् । उक्तं च—

गन्धकजारणमादौ कुर्यादथ जारणं सुवर्णस्य ।
जलधरसत्त्वस्य ततो जारणमथ सर्वलोहानाम् ॥ ९० ॥

काञ्चनादिग्रसनतीव्रबुभुक्षाकराणि द्रव्याणि बिडानि तानि कथ्यन्ते—

स तुत्थटङ्कणस्वर्जिपटुताम्रे त्र्यहोषितम् ।
*काञ्जिकं भावितं तेन गन्धाढ्यं चरति क्षणात् ॥ ९१ ॥
बिडे सकाञ्जिके क्षिप्तो रसः स्याद्ग्रासलालसः ।
ग्रसते सर्वलोहानि सर्वसत्त्वानि वज्रकम् ॥ ९२ ॥
शङ्खचूर्णं रविक्षीरैरातपे भावयेद्दिनम् ।
तद्वज्जम्बीरजद्रावैर्दिनैकं धूमसारकम् ॥ ९३ ॥
सौवर्चलमजामूत्रैर्भाव्यं यामचतुष्टयम् ।
कण्टकारी च संक्षाल्या दिनैकं नरमूत्रके ॥ ९४ ॥
स्वर्जिक्षारं तिन्तिडिकं कासीसं च शिलाजतु ।
जम्बीरोत्थद्रवैर्भाव्यं पृथग्यामचतुष्टयम् ॥ ९५ ॥
निस्तुषं जयपालं च मूलकानां द्रवैर्दिनम् ।
सौधं च टङ्कणं गुञ्जां दिनं शिग्रुजटाम्भसा ॥ ९६ ॥
एतत्सर्वं समांशं तु मर्द्यं जम्बीरजद्रवैः ।
तद्गोलं रक्षयेद्यत्नाद्बिडोऽयं वडवानलः ॥ ९७ ॥

---

* क. भावितं गन्धकं तेन इति रसेन्द्रपाठः ।

---

१ ग. सैन्धवं ट° ।

अनेन मर्दितः सूतः संस्थितस्तप्तखल्वके ।
स्वर्णादिसर्वलोहानि सत्त्वानि ग्रसते क्षणात् ॥ ९८ ॥
मूलकार्द्रकवह्नीनां क्षारं गोमूत्रलोडितम् ।
वस्त्रपूतं द्रवं हृत्वा गन्धकं तेन भावयेत् ।
शतवारं खरे घर्मे बिडोऽयं हेमजारणः ॥ ९९ ॥

इति सिद्धलक्ष्मीश्वरतन्त्रे ।

एवं बिडान्तराण्यपि तन्त्रान्तरादनुस्मर्तव्यानि ।

इति बिडकथनम् ।

चतुःषष्ट्यंशकं हेमपत्रं मायूरमायुना ।
विलिप्तं तप्तखल्वस्थे रसे दत्वा विमर्दयेत् ॥ १०० ॥
दिनं जम्बीरतोयेन ग्रासे ग्रासे त्वयं विधिः ।
शनैः संस्वेदयेद्भूर्जे बद्ध्वा सपटुकाञ्जिके ॥ १ ॥
भाण्डे त्रिदिवसं सूतं जीर्णस्वर्णं समुद्धरेत् ।
अधिकस्तोलितश्चेत्स्यात्पुनः स्वेद्यः समावधिः ॥ २ ॥
द्वात्रिंशत्षोडशाष्टांशं क्रमेण वसु जारयेत् ।
रूप्यादिषु च सर्वेषु विधिरेवंविधः स्मृतः ।
चुल्लिका लवणं गन्धमभावे शिखिपित्ततः ॥ ३ ॥

अथ दोलायन्त्रे हेमजारणम्—

संग्रासं पञ्चषड्भागैर्यवक्षारैर्विमर्दयेत् ।
सूतं तत्षोडशांशेन गन्धेनाष्टांशकेन वा ॥ ४ ॥
ततो विमर्द्य जम्बीररसे वा काञ्जिकेऽथ वा ।
दोलापाको विधातव्यो दोलायन्त्रमिदं स्मृतम् ॥ ५ ॥

अथ कच्छपयन्त्रेण हेमजारणं यथा—

शश्वद्भृताम्बुपात्रस्थः शरावच्छिद्रसंस्थितः ।
पंक्तो मूषाजले तस्मिन् रसोऽष्टांशबिडावृतः ॥ ६ ॥
स रुद्धो लोहपात्र्याऽथ मुद्रितो दृढमुद्रया ॥
वालुकां तदुपर्यष्टाङ्गुलमानां विनिक्षिपेत् ॥ ७ ॥
हठात्तदुपरि ध्मातो रसस्तद्गर्भसंस्थितः ॥

---

१ क. °वं सर्वे ग° । २ क. °शङ्खादरा° । ३ ग. °त्रस्परा° । ४ ग. °रिपता प° । ५ ग. पक्वप्° । ६ ग. तस्यां ।

मापूरमाणुना छिन्नं काञ्चनं ग्रसति क्षणात् ॥ ८ ॥
इति कच्छपयन्त्रम् । उक्तं च—

सच्छिद्रं सलिलापूर्णभाण्डयन्त्रे शरावकम् ॥
दत्त्वा छिद्रे पक्वमूषा देया नीरा वियोगिनी ॥ ९ ॥
तस्यां विडावृतः सूतो देयो लोहावृते मुखे ॥
शनैर्ध्मातो ग्रसत्येव काञ्चनं सूक्ष्मतां गतम् ॥ १० ॥
स्वल्पं सचित्ततयाप्युक्तं शनैर्द्वयं शमायपि ।
देहार्थं धातुवादार्थं प्रयच्छन्त्यल्पबुद्धयः ॥ ११ ॥

मतान्तरं यथा—

कृष्णाभ्रासि लोहमये रुधिरं सग्रासमीशजं पात्रे ।
अतिचिपिटलोहपात्र्या पिधाय संलिप्य वह्निना योज्यम् ॥ १२ ॥
इयतैव रसायनतारपर्यवसानं निरूपितं किं तु ।
न प्राधान्यं धातुस्पर्शमप्राधान्यजारणा तु यथा ॥ १३ ॥
इति हेमजारणम् ।

अथ घनसत्त्वजारणम्—

घनरहितबीजजारणसंप्राप्तदलादिसिद्धिकृतकृत्याः ।
कृपणाः प्राप्य समुद्रं वराटिकालाभसंतुष्टाः ॥ १४ ॥
मुक्त्वैकमभ्रसत्त्वं नान्यो रसपक्षकर्तनसमर्थः ।
तेन निरुद्धप्रसरो नियम्यते बध्यते च सुखम् ॥ १५ ॥
रक्तं पीतं च हेमार्थे कृष्णं हेमशरीरयोः ।
तारकर्माणि तच्छुक्लं* काचकिट्टं सदा त्यजेत् ॥ १६ ॥
त्रुटिशो दत्त्वा मृदितं सोष्णे खल्वेऽभ्रसत्त्वहेमादि ।
चरति रसेन्द्रः क्षितिखगवेतसजम्बीरबीजपूराम्लैः ॥ १७ ॥
पूर्वसाधितकाञ्जिकेनापि ज्ञेयम् ।

अथाभ्रकस्य सत्त्वजारणम्—

अभ्रकजारणमादौ गर्भद्रुतिजारणं च हेम्नोऽन्ते ।
यो जानाति स वाऽऽदी वृथैव नार्थक्षयं कुरुते ॥ १८ ॥
इत्यभ्रकस्य सत्त्वजारणम् ।

---

* क. °क्लं बाधने तु सं° इति रसेन्द्रपाठः ।

---

१ क. लोहे वृतो मु° । २ क. तद्वक्तं काचिकि° । ३ ग. °वादी° ।

## अथ गर्भद्रुतिः—

व्योमसत्त्वं समांशेन ताप्यसत्त्वेन संयुतम् ।
साकल्येन चरेद्देवि गर्भस्रावी भवेद्रसः ॥ १८ ॥

एवं हेमताराभ्रादयः स्वस्वरिपुणा निर्व्यूढाः प्रयोजनमवलोक्य योज्याः । गर्भद्रुतिमन्तरेण जारणैव न स्यात् ।

## अथ तल्लक्षणमाह—

वह्निव्यतिरेकेऽपि रसग्रासीकृतानां लोहानां द्रवत्वं गर्भद्रुतिः ।
बीजानां संस्कारः कर्तव्यस्ताप्यसत्त्वसंयोगात् ।
तेन द्रवन्ति गर्भा रसराजस्याम्लवर्गयोगेन ॥ १९ ॥

शिलायां निहतं नागं ताप्यं वा सिन्धुना हतम् ।
ताभ्यां तु मारितं बीजं सूतको द्रवति क्षणात् ॥ १२० ॥

## अथ दोलायन्त्रजारणम्—

पट्वम्लक्षारगोमूत्रस्नुहीक्षीरमलेपिते ।
वहिश्च बद्धवस्त्रेण भूर्जे ग्रासं निवेशितम् ॥ २१ ॥
क्षारारनालमूत्रेषु स्वेदयेच्चिदिनं भिषक् ।
क्रमेणानेन दोलायां कार्यं ग्रासचतुष्टयम् ॥ २२ ॥
ततः कच्छपयन्त्रेण ज्वलने जारयेद्रसम् ।

इति गर्भद्रुतिः ।

## अथ प्रमाणजारणम्—

चतुःषष्ट्यंशकः पूर्वो द्वात्रिंशांशो द्वितीयकः ॥ २३ ॥
तृतीयः षोडशांशस्तु चतुर्थोऽष्टांश एव च ।
चतुःषष्ट्यंशकग्रासाद्दण्डधारी भवेद्रसः ॥ २४ ॥
जलौकावद्द्वितीये तु ग्रासयोगे सुरेश्वरि ।
ग्रासेन तु तृतीयेन काकविष्ठासमो भवेत् ।
ग्रासेन तु चतुर्थेन दधिपिण्डसमो भवेत् ॥ १२५ ॥

---

१ ग. °र्भद्रावी । २ क. निर्मूढः प्र° । ३ ग. आर्चे । ४ क. °का च द्वितीये तु मा° ।

अथान्यद्दुर्जरत्वान्न लिखितम् । भगवद्गोविन्द-
पादास्तु कलांशमेव ग्रासं लिखन्ति । यथा—

पञ्चभिरेवं ग्रासैर्घनसत्त्वं जारयित्वाऽऽदौ ।
गर्भद्रावी निपुणो जरयति बीजं कलांशेन ॥ २६ ॥

तन्मते चतुःषष्टिचत्वारिंशत्त्रिंशद्विंशतिषोडशांशाः पञ्च ग्रासाः ।

अथाञ्जनवेधने—

तारकर्मण्यस्य न तथा प्रयोगो दृश्यते ।
केवलं निर्मलं ताम्रं वापितं दरदेन तु ।
कुरुते त्रिगुणे जीर्णं लाक्षारसनिभं रसम् ॥ २७ ॥
गन्धकेन हतं नागं जारयेत्कमलोदरे ।
एतस्य त्रिगुणे जीर्णे लाक्षाभो जायते रसः ॥ २८ ॥
एतत्तु नागसंबन्धान्न रसायनकर्मणि ।

किं वा यथोक्तसिद्धबीजोपरि त्रिगुणताम्रोत्तारणादनु तद्बीजं सम॰
जीर्णं सत्तन्त्रेणैव रञ्जयति ।

कुनटीहतकरिणा वा रविणा वा ताप्यगन्धकहतेन ।
दरदनिहतांसिना वा निर्व्यूढं हेमतद्बीजम् ॥ २९ ॥

वालिना व्यूढं केवलार्कमपि ।

अथ तारबीजम्—

कुटिलं विमला तीक्ष्णं समं चूर्णं प्रकल्पयेत् ।
पुटितं पञ्चवारं तु तारं वाह्यं शनैर्धमेत् ॥ १३० ॥
यावद्दशगुणं तत्तु तारबीजं भवेदुत्तमम् ।
सत्त्वं तालोद्भवं वङ्गं समं कृत्वा तु धामयेत् ॥ ३१ ॥
तच्चूर्णं वाहयेत्तारे गुणान्येवं तु षोडश ।
प्रतिबीजमिदं श्रेष्ठं सूतकस्य तु बन्धनम् ॥ ३२ ॥
चारणात्सारणाच्चैव सहस्रांशेन विध्यति ।
वङ्गाभ्रं वाहयेत्तारे गुणानि द्वादशैव तु ॥ ३३ ॥
एतद्बीजे समे जीर्णे शतवेधी भवेद्रसः ।

---

१ क. अन्यद्धाद्विलन्त्रान्ते लि॰ । २ क. °गुणं जी° । ३ क. मोत्तरेणान्यद्वी° । ४ क. °वा शिलाया वा । ५ ग. °रणैव । ६ क. °बीजं समे जीर्णं वा° ।

अथ हेमबीजम्—

नागाभ्रं वाहयेद्वह्नौ द्वादशैव गुणानि च ॥ ३४ ॥
माक्षिकेण हतं ताम्रं नागं तारं जयेन्मुहुः ।
तं नागं वाहयेद्बीजे द्विषोडशगुणानि च ॥ ३५ ॥
बीजमेतद्वरं श्रेष्ठं नागबीजं प्रकीर्तितम् ।
समयारितमात्रेण सहस्रांशेन विध्यति ॥ ३६ ॥

अथ रञ्जनसारणार्थं वा तैलम्—

मञ्जिष्ठा किंशुकं चैव खदिरं रक्तचन्दनम् ।
करवीरं देवदारु सरलो रजनीद्वयम् ॥ ३७ ॥
अन्यानि रक्तपुष्पाणि पिष्ट्वा लाक्षारसेन तु ।
तैलं विपाचयेत्तेन कुर्याद्बीजादिरञ्जनम् ॥ ३८ ॥
द्विगुणे रक्तपुष्पाणां रक्तपीतगणस्य च ।
क्वाथे चतुर्गुणं क्षीरं तैलमेकं सुरेश्वरि ॥ ३९ ॥
ज्योतिष्मतीकरञ्जाक्षकटुतुम्बीसमुद्भवम् ।
पाटलाकाकतुण्ड्यम्बुमाहाराष्ट्रीरसैः पृथक् ॥ ४० ॥
भेकसूकरमेषाहिमत्स्यकूर्मजलौकसाम् ।
वसया चैकया युक्तं षोडशांशैः सुपेषितैः ॥ ४१ ॥
मूलतामलमाक्षीकद्वन्द्वमेलापकौषधैः ।
पाचितं गालितं चैव सारणात्तैलमुच्यते ॥ ४२ ॥

अत्र गन्धकतैलमपि रसहृदयस्वरसात् । ऊर्णाटङ्कणगिरिजतुमहिषीकर्णाक्षिमलशक्रगोपकर्कटका इति द्वन्द्वमेलापकौषधानि ।

अथापरम्—

यथा प्रोक्तैः श्वेतपुष्पैर्नानावृक्षसमुद्भवैः ।
रसं चतुर्गुणं योज्यं कङ्गुणीतैलमध्यतः ॥ ४३ ॥
पचेत्तैलावशेषं तु तस्मिंस्तैले निषेचयेत् ।
द्रावितं तारबीजं तदेकविंशतिवारकम् ।
रञ्जितं जायते सम्यग्रसराजस्य रञ्जनम् ॥ ४४ ॥

---

१ ग. °यं वा तै° । २ ग. °कपित्थग° । ३ क. तुण्ड्याहमाहा । ४ क. °क्षीकं द्व° । ५ क. °न्यवैते° । ६ ग. °द्विश° ।

अथान्यद्दुर्जरत्वान्न लिखितम् । भगवद्गोविन्द-
पादास्तु कलांशमेव ग्रासं लिखन्ति । यथा—

पञ्चभिरेव ग्रासैर्घनसत्त्वं जारयित्वाऽऽद्यौ ।
गर्भद्रावी निपुणो जरयति बीजं कलांशेन ॥ २६ ॥

तन्मते चतुःषष्टिचत्वारिंशत्त्रिंशद्विंशतिषोडशांशाः पञ्च ग्रासाः ।

अथाञ्जनवेधने—

तारकर्मण्यस्य न तथा प्रयोगो दृश्यते ।
केवलं निर्मलं ताम्रं वापितं दरदेन तु ।
कुरुते त्रिगुणे जीर्णं लाक्षारसनिभं रसम् ॥ २७ ॥
गन्धकेन हृतं नागं जारयेत्कमलोदरे ।
एतस्य त्रिगुणे जीर्णे लाक्षाभो जायते रसः ॥ २८ ॥
एतत्तु नागसंबन्धान्न रसायनकर्मणि ।

किं वा यथोक्तसिद्धबीजोपरि त्रिगुणताम्रोत्तारणादनु तद्बीजं सम-
जीर्णं सत्ताम्रेणैव रञ्जयति ।

कुनटीहतकरिणा वा रविणा वा ताप्यगन्धकहृतेन ।
दरदनिहतासिना वा निर्व्यूढं हेमतद्बीजम् ॥ २९ ॥

वलिना व्यूढं केवलार्कमपि ।

अथ तारबीजम्—

कुटिलं विमला तीक्ष्णं समं चूर्णं प्रकल्पयेत् ।
पुटितं पञ्चवारं तु तारं वाह्यं शनैर्धमेत् ॥ १३० ॥
यावद्दशगुणं तत्तु तारबीजं भवेच्छुभम् ।
सत्त्वं तालोद्भवं वङ्गं समं कृत्वा तु धामयेत् ॥ ३१ ॥
तच्चूर्णं वाहयेत्तारे गुणान्येवं तु षोडश ।
प्रतिबीजमिदं श्रेष्ठं सूतकस्य तु बन्धनम् ॥ ३२ ॥
चारणात्सारणाच्चैव सहस्रांशेन विध्यति ।
वङ्गाभ्रं वाहयेत्तारे गुणानि द्वादशैव तु ॥ ३३ ॥
एतद्बीजे समे जीर्णे शतवेधी भवेद्रसः ।

---

१ क. अन्यद्धादिकस्मान्ते लि° । २ क. °गुणं जी° । ३ क. °ग्रोत्तरेणान्यद्बी° । ४ क. °वा शिलाया वा । ५ ग. °रणैनैव । ६ क. °बीजं समे जीर्णे श°।

अथ हेमबीजम्—

नागाभ्रं वाहयेद्धेम्नि द्वादशैव गुणानि च ॥ ३४ ॥
माक्षिकेण हतं ताम्रं नागं तारं जयेन्मुहुः ।
तं नागं वाहयेद्बीजे द्विषोडशगुणानि च ॥ ३५ ॥
बीजमेतद्वरं श्रेष्ठं नागबीजं प्रकीर्तितम् ।
सप्तवारितमात्रेण सहस्रांशेन विध्यति ॥ ३६ ॥

अथ रञ्जनसारणार्थं वा तैलम्—

मञ्जिष्ठा किंशुकं चैव खदिरं रक्तचन्दनम् ।
करवीरं देवदारु सरलो रजनीद्वयम् ॥ ३७ ॥
अन्यानि रक्तपुष्पाणि पिष्ट्वा लाक्षारसेन तु ।
तैलं विपाचयेत्तेन कुर्याद्बीजादिरञ्जनम् ॥ ३८ ॥
द्विगुणे रक्तपुष्पाणां रक्तपीतगणस्य च ।
क्वाथे चतुर्गुणं क्षीरं तैलमेकं सुरेश्वरि ॥ ३९ ॥
ज्योतिष्मतीकरञ्जाक्षकटुतुम्बीसमुद्भवम् ।
पाटलाकाकतुण्डयम्बुमाहाराष्ट्रीरसैः पृथक् ॥ ४० ॥
भेकसूकरमेषाहिमत्स्यकूर्मजलौकसाम् ।
वसया चैकया युक्तं षोडशांशैः सुपेषितैः ॥ ४१ ॥
भूलतामलमाक्षीकद्वन्द्वमेलापकौषधैः ।
पाचितं गालितं चैव सारणात्तैलमुच्यते ॥ ४२ ॥

अत्र गन्धकतैलमपि रसहृदयस्वरसात् । कर्णाटकुणगिरिजतुमहिषी कर्णाक्षिमलशक्रगोपकर्कटका इति द्वन्द्वमेलापकौषधानि ।

अथापरम्—

यथा प्रोक्तैः श्वेतपुष्पैर्नानावृक्षसमुद्भवैः ।
रसं चतुर्गुणं योज्यं कङ्गुणीतैलपलतः ॥ ४३ ॥
पचेत्तैलावशेषं तु तस्मिंस्तैले निषेचयेत् ।
द्रावितं तारबीजं तदेकविंशतिवारकम् ।
रञ्जितं जायते सम्यग्रसराजस्य रञ्जनम् ॥ ४४ ॥

---

१ ग. °षं या तै° । २ ग. °कपित्तग° । ३ क. पुष्पाहमादा । ४ क. °क्षीकं द्व° । ५ क. °न्यवंतै° । ६ ग. °धिश° ।

कुटिले बलमत्यधिकं रागस्तीक्ष्णे च पन्नगे स्नेहः ।
रागस्नेहबलानि तु कमले नित्यं प्रशंसन्ति ॥ ४५ ॥
बलमास्तेऽभ्रकसत्त्वे जारणरागाः प्रतिष्ठितास्तीक्ष्णे ।
बन्धस्तु सारलोहे क्रामणमथ नागवङ्गगतम् ॥ ४६ ॥
क्रामति तीक्ष्णेन रसस्तीक्ष्णेन च जीर्यते ग्रासः ।
हेम्नो योनिस्तीक्ष्णं रागान्गृह्णाति तीक्ष्णेन ॥४७ ॥
तदपि च दरदेन हतं कृत्वा वा माक्षिकेण रविसहितम् ।
वासितमपि वासनया घनवेद्यार्थं च जार्यं च ॥ ४८ ॥
सर्वैरेभिर्लोहैर्माक्षिकमृदितैर्हुतैस्तथा गर्भे ।
बिडयोगेन च जीर्णे रसराजो बन्धमुपयाति ।
निर्बीजे समजीर्णे पादोनषोडशांशेन ॥ ४९ ॥
अर्धेन पादकनकं पादेनैकेन तुल्यकनकं च ॥ ५० ॥

समजीर्णस्य सारणयोग्यत्वं शतादिवेधनकत्वं च । इतो न्यूनजीर्णस्य पत्रलेपाधिकार एव । यथा—

अत्यम्लितमुद्वर्तिततारारिष्टादिपत्रमतिशुद्धम् ।
आलिप्य रसेन ततः क्रमेण लिप्तं पुटेषु विश्रान्तम् ॥५१॥

पुटः प्रायेण चुल्लिकाधस्तादस्य देयः ।

अर्धेन मिश्रयित्वा हेम्ना श्रेष्ठेन तद्दलं पुटितम् ।
क्षितिखगपटुरक्तमृदा वर्णपुटोऽयं ततो देयः ॥ ५२ ॥

अर्धेनेत्युपलक्षणम् । रज्जुभिर्भेकेरङ्गाभैः स्तम्भयोः सारलोहयोः ।
बध्यते रसवेतण्डो युक्त्या श्रीगुरुदत्तया ॥ ५३ ॥

शिलाचतुष्कं गन्धेशौ काचकूप्यां सुवर्णकृत् ।
कीलालायःकृतो योगः पट्टिकालेपनाधिकः ॥ ५४ ॥
मण्डूकपारदशिलावलयः समाताः
संमर्दिताः क्षितिबिलेशयमन्त्रजिह्वैः ।
यन्त्रोत्तमेन गुरुभिः प्रतिपादितेन
स्वल्पैर्दिनैरिह पतन्ति न विस्मयध्वम् ॥ ५५ ॥

---

१ क. °बन्मार्थं । २ ग. समा.दि.री° । ३ ग. °रणायो° । ४ ग. °कत्रह्नैः । ५ क. °भयो स्थलो° । ६ घ. °कूप्या सु° । ७ घ. °गः खटिका° । क, ग. °डिकालवणाधिक इति रसेन्द्रपाठः । ८ क. °नाडकः । ९ क. हैः । अत्रोप° ।

लोहं गन्धं टङ्कणं भ्रामयित्वा
तेनोन्मिश्रं भेकमावर्तयेत्तत् ।
तालं कृत्वा तुर्यवङ्गान्तराले
रूप्य*स्यान्तस्तन्धसिद्धोक्तबीजे ॥ ५६ ॥

लोहभेकी तारतालभेकी सिद्धमते बीजद्वयम् ।
द्रुतदर्दुरपूतिलोहसेकः कुरुते हिङ्गुलखण्डपक्षखण्डम् ॥
शशिहेलि हिरण्यमूषिकाऽपि ध्रुवमक्षीणधियामनेन लक्ष्मीः ॥

## अथ सिद्धमतखोटः—

गन्धतैलयुगलायसि मध्ये पूतिवारिवशमेष्यति पिष्टी ।
नैकभेकवलिकल्पितपिष्टी संयमः प्लवगपूत्यभिषेकैः ॥ ५८

दरदस्यापि पिष्टित्वेन गृहीतत्वात्पूर्वत्र कर्मणि संबन्धः ।
इति सिद्धमतखोटः ।

अधोऽष्टाङ्गुलतश्चुल्ल्याः सिध्यन्ति सिकतावृताः ।
रसगन्धशिलाः सर्पाः पाकाद्यग्निविपक्रियाः ॥ ५९ ॥

## खोटान्तरम्—

सालूककुटिलार्कास्थिरम्भापामार्गभस्मना ।
हस्तीव बध्यते वक्त्रलोहखण्डिकया रसः ॥ ६० ॥

खोटान्तरम्—

भेकभास्करगन्धायोवङ्गस्य क्षारभस्मना ।
हस्तीव बध्यते लोहवक्त्रचक्रिकया रसः ॥ ६१ ॥

युक्त्या पिष्ट्यपि खोटान्तरम् ।
इति रञ्जनवेधने ।

## अथ बाह्यद्रुतयः—

एतास्तु केवलमारो(खो)टकमेव मिलिता निबध्नन्ति । कलमस्य कल्पमितमायुः । किं वा पूर्वोक्तग्रासक्रमजारिताः पूर्वोक्तफलदा भवन्ति । उच्यते समजीर्णश्चायं शतवेधी द्विगुणजीर्णः सहस्रवेधी । एवं लक्षायुतकोटिवेधी समनुस्मर्तव्यः । चतुःषष्टिगुणजीर्णस्तु धूमस्पर्शावलोकशब्दतो विध्यति ।

* क. °स्यायं तच्च सिद्धोक्तबीजमिति रसेन्द्र पाठः ।

१ क. °त्वा तदर्थं° । २ क. °भावेट° ।

अथ सारणोच्यते—

अन्धमूषा तु कर्तव्या गोस्तनाकारसंनिभा ।
सैव च्छिद्रान्वि*ता मन्दगम्भीरा सारणोचिता ॥ ६२ ॥

अस्यामेवान्धमूषायां तत्तैलमपगतकल्कं विमलमापूर्य तस्मिन्नधि+कमूषात्मनि द्रुतबीजप्रक्षेपसमकालमेव समावर्तनीयः सूतवरः । तदनु सद्यो मूषाननमाच्छादनीयम् । एतत्तैलाक्तपटखण्डग्रन्थिबन्धनेनारुणा[1]सितबीजाभ्याममुना सारणकर्मणा मिलितश्चेत्सारितः सम्यक्संयमितश्च विज्ञेयः प्रतिसारितस्तु द्विगुणबीजेन । तद्वदनुसारितस्तु त्रिगुणबीजेन[2] त्रिविधायामेव सारणायामरुणासितकर्मणोः क्रामणार्थमीषद्दीप्तत्पन्न[3] गंवङ्गौ विश्राणनीयाविति ।

सारितो जारितश्चैव पुनः सारितजारितैः[4] ।
सप्तककलिकायोगात्कोटिवेधी भवेद्रसः ॥ ६३ ॥

इत्यादीनि कर्माणि पुनः केवलमीश्वरानुग्रहसाध्यत्वान्न प्रपञ्चितानि ।

अथ क्रामणम्—

शिलया निहतो नागो वङ्गं वा तालकेन शुद्धेन ।
क्रमशः पीते शुक्ले क्रामणमेतत्समुद्दिष्टम् ॥ ६४ ॥

अथ खोटमार्गेण जारणम्—

रञ्जनवेधनानि—

खोटकं स्वर्णसंतुल्यं समावर्तं तु कारयेत् ।
माक्षिकं कान्तपाषाणं शिलागन्धं समं समम् ॥ ६५ ॥
भूनागैर्मर्दयेद्यामं वल्लमात्रं वटीकृतम् ।
एषा विडवटी ख्याता योज्या सर्वत्र जारणे ॥ ६६ ॥
दरदं माक्षिकं गन्धं राजावर्तं प्रवालकम् ।
शिलातुत्थं च कङ्कुष्ठं समं चूर्णं प्रकल्पयेत् ॥ ६७ ॥

* क. °वा मध्ये च° इति पाठान्तरम् । + क. °कमधस्ताद्द्रुत° इति पाठान्तरम् ।

1 क. °तविलाभ्या° । 2 ग. °न अत्र वि° । 3 क. °त्पन्नौ वि° । 4 क. °तः । सप्तकक्कितायो° । सप्तशृङ्खलिकायो° इति रसेन्द्र° पाठः ।

घर्माभ्यां पीतरक्ताभ्यां कङ्गुणीतैलकैः सह ।
भावयेद्दिवसान्पञ्च सूर्यतापे पुनः पुनः ॥ ६८ ॥
जारितं सूतखोटं च कल्केनानेन संयुतम् ।
वालुकाहण्डिमध्यस्थं शरावपुटमध्यगम् ॥ ६९ ॥
त्रिदिनं पाचयेच्चुल्ल्यां कल्को देयः पुनः पुनः ।
रञ्जितो जायते सूतः शतवेधी न संशयः ॥ १७० ॥

लोहं गन्धं टङ्कणं ध्मातमेतत्तुल्यं चूर्णैर्भानुमेका*द्विवङ्गैः ।
सूतं गन्धं सर्वसाम्येन कुर्यामीप्सस्याध्यं चित्त नो विस्मयस्व ॥

इति सिद्धसूतकल्कः ।

## अथ सिद्धचूर्णकल्कः—

रसदरदताप्यगन्धकमनःशिलाभिः क्रमेण वृद्धाभिः ।
पुटमृतशुल्बं तारं त्रिर्व्यूढं हेमकृष्टिरियम् ॥ ७२ ॥
अष्टानवतिभागं च रूप्यमेकं च हाटकम् ।
सूतकेन च वेधः स्याच्छतांशविधिरीरितः ॥ ७३ ॥
चन्द्रस्यैकोनपञ्चाशत्तथा शुद्धस्य भास्वतः ।
वह्निरेकः शंभुरेकः शतांशविधिरीरितः ॥ ७४ ॥

द्वावेव रजतयोनिताम्रयोनित्वेनोपचर्येते । एवं सहस्रवेधादयो जारणबीजवशादनुस्मर्तव्याः ।

चत्वारः प्रतिवापाः सलाक्षया मत्स्यपित्तभावितया ।
तारे वा शुल्बे वा तारारिष्टेऽथ वा कृष्टौ ॥ १७५ ॥
तदनुक्रमेण मृदितः सिक्थकपरिवेष्टितो देयः ।
अतिविद्रुते च तस्मिन्वेध्योऽसौ कुम्भवेधेन ॥ ७६ ॥

तदनु सिद्धतैलेनाऽऽप्लाव्य भस्मावच्छादनपूर्वकमवतार्य स्वाङ्गशीतपर्यन्तमपेक्षितव्यं इति ।

विद्धं रसेन यद्द्रव्यं पक्षार्धं स्थापयेद्भुवि ।
तत आनीय नगरे विक्रीणाति विचक्षणः ॥ ७७ ॥

* क. °द्विरङ्गैः इति रसेन्द्रपाठः ।

१ ग. °र्ध मृत° । २ क. चूर्ण भा° । ३ क. °न्वेधोऽसौ दण्डवे° । ४ क. °व्यमिति ।

समर्पितः सैन्धवखण्डकोठरे विधाय पिष्टिं सिकताख्यंतस्थुपि ।
विशुद्धगन्धादिभिरीपदग्निना समस्तमश्नात्यशनीयमीशजः ॥
कर्पाष्टङ्कणकज्जली हरिरथो गन्धस्य च द्वौरजः
सिद्धाख्यं सकलैः कृतं पलमथ द्वित्रैरहोभिः शृतम् ॥
भूयो गन्धभृतं चतुर्दशपुटैः स्यादिन्द्रगोपारुणं
तत्तारे मधुना पुटेन धमनेनार्कच्छवीमीहते ॥ ७९ ॥

कर्पा इति बहुवचनात्त्रयस्त्रिधा पत्रलेपेनेति ज्ञेयम् ।

इति सिद्धचूर्णकल्कः ।

## अथ रसचिन्तामणेः कियन्तः सिद्धयोगाः—

चत्वारः स्वर्जिकाभागा यवक्षारस्तथा पुनः ।
क्षारिकालवणं देयात्तथाविधमेव च ॥ १८० ॥
काकमाचीरसस्यान्ते दीयते सर्वमेव तत् ।
नष्टपित्तलपत्राणि सूक्ष्माणि पलयोर्द्वयोः ॥ ८१ ॥
तप्ततप्तानि तान्यस्मिन्काचमाचीरसे भृशम् ।
एकविंशतिवाराणि तारतां प्रतियान्ति च ॥ ८२ ॥
एवं शुभ्राणि जायन्ते रूप्याद्न्यूनानि किंचन ।
आरतारसमं कृत्वा मृतवङ्गं नियोजयेत् ॥ ८३ ॥
एकादशविभागेन भवेत्तारं न संशयः ।
एषा राजवती विद्या पुत्रस्यापि न कथ्यते ॥ ८४ ॥

इति राजवती विद्या ।

## अथ हेमकरणप्रयोगः—

त्रिवारं गन्धकहतं ताम्रं हेमद्वयोरिदम् ।
सत्त्वं तालस्य मापैकं योजयेत्सर्वकामदम् ॥ ८५ ॥
अष्टवर्णं भवेद्धेम ताम्रगन्धकमारितम् ।
एतयोर्दीयते रम्यं जायते काञ्चनं शुभम् ॥ ८६ ॥

---

१ क °र्पितं सै° । २ क. ख्ययन्त्रे । ३ क. रसैर्गन्ध । ग. रसैर्गोधस्य । ४ क. पुस्तके तु °ति वैद्यत्वमात्रविश्रान्ततया अथ इति यावत् कर्मास्य त्रिधा क्षिठेपै° इति पाठान्तरम् । ५ क. °रः सर्ज° । ६ क. °शारात्तथा । ७ क. °त् । तप्त° ।

भागं द्वादशकं तीक्ष्णं चूर्णं वङ्गस्य वै त्रयम् ।
तथा नागस्य कर्तव्यं त्रयं सत्त्वं च तालकम् ॥ ८७ ॥
तण्डुलीयरसेनैव मर्दनीयं द्रवेद्यथा ।
अन्धमूषागतं ध्मातं दत्त्वा टङ्कणमंशकम् ॥ ८८ ॥
प्रकुर्याच्च पुनर्मूषा मृतं च चलमेधते ।
समं तारेण योक्तव्यं रजतं स्यान्मनोहरम् ॥ ८९ ॥
पारदः पलमेकः स्याद्द्विपलं पीतखर्परम् ।
संमर्दयेद्दृढं तावद्रसो यावत्प्रलीयते ॥ ९० ॥
पुनर्जम्बीरनीरेण गुडेन च समन्वितम् ।
शोषयेच्चाऽऽतपे पिष्ट्या श्लक्ष्णं कृत्वा च धार्यते ॥ ९१ ॥
अर्कदुग्धस्य दातव्या भावनास्ता यथा तथा ।
अस्य कल्कस्य सिद्धस्य भाग एकस्य(?)टङ्कणः ॥ ९२ ॥
ताम्रं भागत्रयं दत्त्वा धास्यतामन्धमूषया ।
सुवर्णं दिव्यतेजः स्यात्कुङ्कुमादतिरिच्यते ॥ ९३ ॥
पारदं सीसकं गन्धं कुनटीं तच्चतुष्टयम् ।
बीजपूराम्भसा पिष्ट्वा बाढं दिनचतुष्टयम् ॥ ९४ ॥
अथ सूक्ष्माणि पत्राणि तानि तारस्य लेपयेत् ।
बीजपूररसेनैव तानि मात्राऽपि तावती ॥ ९५ ॥
एकाधिका भवत्यत्र भावनाश्चास्य विंशतिः ।
विशोष्याऽऽवर्तितं तारं भवेत्तारस्य काञ्चनम् ॥ ९६ ॥
हेमभागद्वयं तारं तथा ताम्रं चतुष्टयम् ।
एकतः क्रियते पत्रमतिसूक्ष्मं निरामयम् ॥ ९७ ॥
जम्बीरनीरसंपिष्टं खर्परस्याष्टटङ्कणम् ।
तेन तान्यथ पत्राणि लेपनीयानि वै बहु ॥ ९८ ॥
आवर्तयेत्पुनर्दत्त्वा मूषके गलितानि च ।
तदा तानि भवन्त्यत्र हेमरूपाणि नान्यथा ॥ ९९

१ ग. °र्क भृशम् । २ क. °ना सा प° । ३ क. °म्बीर रसपिष्टं च द° । ४ ग. °र्पर स्या° ।

इति हेमकरणप्रयोगः ।

अथ तारकृष्णी—

शाकवृक्षस्य निर्यासं पलमात्रं समानयेत् ।
शिग्रुबीजस्य चूर्णेन रसेन परिमर्दयेत् ॥ २०० ॥
पलमात्रं च शुल्बस्य पत्रं सूक्ष्मं विधापयेत् ।
बहुशो लेपितं कृत्वा धर्मं दत्त्वा पुनः पुनः ॥ १ ॥
पश्चात्तत्ताप्यते पत्रं शुल्बं हेमापि जायते ॥ २ ॥
प्रमाणद्वितयं हेममाक्षिकं तच्च चूर्णितम् ।
पारदं गन्धकं सत्वे कृष्णाभ्रं च द्वयं नयेत् ॥ ३ ॥
निम्बूरसेन तान्पिष्ट्वा बीजपूररसेन च ।
बीजपूरं तदुत्कीर्य तत्र कल्कत्रयस्य यत् ॥ ४ ॥
क्षिप्त्वा निरुन्ध्य तन्मूषां मुद्यते भूमिमध्यगम् ।
एकविंशदहान्यस्य तुषाग्निं कुरुतेऽनिशम् ॥ ५ ॥
शनैः शनैर्यथा मूयाच्छनकैः पात उत्तमः ।
तत्र ग्राह्यन्य(?)तद्दद्यात्तारे द्वादशभागिके ॥ ६ ॥
माषमात्रममुं दद्याच्छ्लक्ष्णकल्कं च मूषके ।
एवमुत्पाद्यते तारं सारं हेम न संशयः ॥ ७ ॥
गन्धकाद्विंशतितमा भागाः शुद्धो भवत्ययम् ।
अर्धो नौसादरस्यापि पीतं कासीसकं तथा ॥ ८ ॥
कुक्कुटो दुग्धवत्यास्मिंश्चूर्णे दत्त्वाऽथ भावनाः ।
एकविंशान्मिताः पिष्ट्वा तारे तोलकमानके ॥ ९ ॥
कृतपत्रोपरि प्राज्ञो लेपमात्रं तदौषधम् ।
दद्यात्तारं च कृष्णं च माषकं हेम लेपयेत् ॥ १० ॥
वर्णिकासप्तकं तारं हेम तज्जायते वरम् ।
तारकृष्णा निगदिता साक्षाद्दारिद्र्यनाशनी ॥ ११ ॥
अथ पात्यं भवेद्धेम मेलनीयं च तत्समम् ।
वर्णगुणमवस्थैतत्तारं हेमत्वमाप्नुयात् ॥ १२ ॥

इति तारकृष्णी ।

---

१ ग. °द् । पेलन शि° । २ ग. °स्य रसे । ३ क. °दुत्तार्यं । ४ क. °त्रयेऽस्य तत् । क्षिप्त्वा । ५ ग. भागाद्यु° । ६ ग. °र्धो नौसादरस्या° । ७ क. °स्मिन्कर्णे । ८ ग. कृष्णी मि° । ९ ग. कृष्णी ।

## तारकृष्णी—

गन्धकं भागमेकं स्यात्पारदस्यैकमेव सः ।
हेममाक्षिकमेकैकं दरदं तालकं तथा ॥ १३ ॥
स्त्रीस्तन्येन तद्घृष्ट्वा तारपत्रं प्रलेपयेत् ।
शरावस्य पुटे कृत्वा मन्दाग्निस्तत्र दीयते ॥ १४ ॥
आरण्यशाणकैः पश्चात्तारमादाय ते च तत् ।
कनकेन समं देयं मूषके भकटे च तत् ॥ १५ ॥
आवर्त्य तेन तारेण तारं कृष्णी भविष्यति ।
अम्लवेतसपानीयं ढालनीयं पुनः पुनः ॥ १६ ॥
अथवा मधु मध्ये च ढालयेत्तारपञ्चकम् ।
अपूर्वं दृश्यते रूपं काञ्चनं दशवर्णकम् ॥ १७ ॥

इति तारकृष्णी ।

## अथ तारकृष्णी द्वितीया—

कार्पासद्वयबीजानि रविबीजानि यानि च ।
धत्तूरकस्य बीजानि बृहत्योश्च द्वयोस्तथा ॥ १८ ॥
करवीरस्य बीजानि समभागानि कारयेत् ।
पिष्ट्वा वस्त्रे दृढं शुद्धमर्कदुग्धेन सप्तधा ॥ १९ ॥
भावयेत्सर्षपास्तैलमक्तं पश्चाच्च गन्धकम् ।
कृतशुद्धं पुनः पिष्ट्वा वस्त्रं लिप्त्वा प्रयत्नतः ॥ २० ॥
औषधानि मयोक्तानि पुरा प्रोक्तानि यानि च ।
क्षेपणीयानि तद्गन्धस्योपरि प्रमितानि च ॥ २१ ॥
वस्त्रसंमार्जनैर्गाढमयःशूलिकया च तत् ।
निबध्यते ततः पश्चादयसोऽपि शलाकया ॥ २२ ॥
प्रोतयित्वा मृशमिमामग्निं तत्र च कारयेत् ।
तदधो भाजनं धृत्वा ज्वलमानात्तदीपधात् ॥ २३ ॥
तैलं गन्धकसंपीतं भाजने निपतत्यधः ।
तेन वै चार्कपत्राणि परिलिप्तानि वह्निना ॥ २४ ॥

---

१ ग. कृष्णी । २ क. °र आदा° । ३ ग. तारकृष्णी भ° । ४ ग. °नीयं मेलयेत्पु° । ५ ग. कृष्णी । ६ ग. °सूक्ष्मं पु° । ७ ग. वस्त्रं.संमार्ज्यते गाढ° । ८ क. °या प्रज्वल्य भृशमग्नी च म° ।

तावन्त्येव पुनस्तद्वा पुनरग्नौ परिक्षिपेत् ।
भवन्ति तानि रम्याणि सुवर्णं सप्तवर्णकम् ॥ २५ ॥
अपरं नववर्णं च सुवर्णं तत्र मेळयेत् ।
अष्टवर्णं भवत्येवमेवं योजनिका क्रमात् ॥ २६ ॥
तथा तथा भवेद्वृद्धिर्वर्णकानां वरा त्विह ।
तारकूर्ण्णी निगदिता विपदामपदं भुवि ॥ २७ ॥

इति द्वितीया तारकूर्ण्णी ।

अथ हेमरक्ती वर्णवृद्धिस्त्वागमे—

सततं स्वेदयेत्त्रीणि दिनानि त्वथ माक्षिकम् ।
यवस्य काञ्जिकेनैवं वासापत्ररसेन च ॥ २८ ॥
दिवसं सकलं पक्त्वा कुलत्थक्वाथमध्यगम् ।
स्वेदयेद्दिवसं पश्चाट्टङ्कणार्द्रमधुप्लुतम् ॥ २९ ॥
ताम्बूलपिष्ट्या साकं च वटिका माषसंमिताः ।
कर्तव्याः शोषिताः सर्वा गालिते हेम्नि सुद्रुते ॥ २३० ॥
एकैका सा प्रदातव्या तस्मिन्हेम्नि शनैः शनैः ।
एवं दशगुणाहाराद्धेमरक्ती प्रजायते ॥ ३१ ॥
जायते सुन्दरं साक्षादुद्यादित्यसंनिभम् ।
हीनवर्णे शुभे स्वर्णे त्रिंशद्गुञ्जाप्रमाणके ॥ ३२ ॥
गुञ्जकाद्वितयं दद्याद्वर्णयुग्मोपपादिका ।
हेमरक्ती समाख्याता दारिद्र्यध्वंसिनी नृणाम् ॥ ३३ ॥

इति हेमरक्ती वर्णवृद्धिस्त्वागमे ।

अथ लघुताम्रप्रयोगः—

हेमतोले प्रदातव्यं ताम्रं माषार्धकं द्रुतम् ।
ताम्रे जीर्णे शुभे शुद्धे द्विगुणे चारणं भवेत् ॥ ३४ ॥
त्रिंशद्गुञ्जासु संख्यासु वर्णहीनासु दीयते ।
हेम्नो हेम्नोऽस्य गुञ्जैका वर्णयुग्मोपपादिका ॥ २३५ ॥

इति लघुताम्रप्रयोगः ।

---

१ ष. °क्शीनि° । २ ष. °कूर्णी द्वि° । ३ क. °म्बूलीपिष्ट्यसा° ।

अथ हेमविद्या—

भागैकमथ ताम्रस्य तारं भागैकमुत्तमम् ।
शुद्धनागं भवेदेकं भागमेकं तु टङ्कणम् ॥ ३६ ॥
अन्धमूषागतं ध्मातं यावत्क्षीणं भवेत्त्रयम् ।
तारं पीतं भवेदेतद्दलं कार्यकरं परम् ॥ ३७ ॥
एतत्तारं भवेद्भागमेकं हेमत्रयं भवेत् ।
दशवर्णीकमादाय धामनीयं प्रयत्नतः ।
हेम तज्जायते रम्यं चम्पपुष्पप्रभं स्फुटम् ॥ ३८ ॥

इति हेमविद्या ।

अथ रसबन्धनम्—

मूलतां शिखरीमूलवारिणा मर्दयेद्दृढम् ।
तन्मूषां लेपयेन्मध्ये तन्मध्ये निक्षिपेद्रसम् ॥ ३९ ॥
पञ्चटङ्कप्रमाणे तां मूषामङ्गारके क्षिपेत् ।
एवं बद्धो भवेत्सूतो मूषान्तस्थो दृढो भवेत् ॥ २४० ॥
मुखमध्यगतस्तिष्ठेन्मुखरोगविनाशनः ।
शरीरे क्रामिते सूते जरापलितजिन्नरः ॥ ४१ ॥
स्तम्भयेच्छस्त्रसंघातं कामोत्पादनकारकः ।
पुनर्नवं वयः कुर्यात्साधकानां न संशयः ।
अतिकामो भवेन्मर्त्यो वलीपलितनाशनः ॥ ४२ ॥

अन्यच्च—

पुष्पितमनोजमन्दिरमध्ये सूतो नियोजितो युक्त्या ।
बद्धो भवति कियद्भिर्दिवसैः पुष्पप्रभावेन ॥ ४३ ॥

इति रसबन्धनम् ।

अथ दरदाकृष्टिः—

एतावतस्तु संस्कारान्कर्तुं सूतस्य चाक्षमैः ।
तान्मुख्यान्क्रियतः कृत्वा स मार्यो रोगनुत्तये ॥ ४४ ॥

रसराजलक्ष्मीतः—

१ क. °ठ वाथो° । २ ख. °स्यानेकतः ।

दुग्धोणागृहधूमसाररजनीरक्तेष्टिकाकाञ्जिकैः
पिष्ट्वा व्योपकुमारिकानलवरानिम्बुद्रवैर्वासरम् ।
व्योपाद्यम्बुनि दोलया विपचितं स्विन्नं सुताम्राद्यग्नियुक्-
पिष्टं भाण्डतलाज्जलाश्रयगतं सूतं समभ्युद्धरेत् ॥ २४५ ॥
लवणसलिलदोलायन्त्रमध्ये दिनैकं
भुजगनयनवन्ध्यामृद्गकल्कान्तरस्थः ।
तदनु दहनतोये काञ्जिके स्वेदितः स्या-
द्रसपटुमरिचाशिग्रुण्युत्तमः श्रीरसेन्द्रः ॥ ४६ ॥
शतांशमुत्तमं हेम सूतारसूते विडावृतम् ।
धारयित्वाऽथ संवेद्य रसजीर्णबलिं दहेत् ॥ ४७ ॥
एतावदप्यशक्तः कर्तुं सूतस्य शोधनं मनुजः ।
स्वेदनमर्दनमूर्ध्वपातनमेतत्त्रयं कुर्यात् ॥ ४८ ॥
अथ वा दरदाकृष्टं स्विन्नं लवणाम्बुभाजि दोलायाम् ।
रसमादाय यथेच्छं कर्तव्यस्तेन भेषजे योगः ॥ ४९ ॥
निम्बूरसेन संपिष्ट्वा प्रहरं दरदाद्दृढम् ।
ऊर्ध्वपातनयन्त्रेण संग्राह्यो निर्मलो रसः ॥ २५० ॥

इति दरदाकृष्टिः ।

अथ पारदशाकार्थयन्त्राणि । तत्र वालुकायन्त्र-
पातालयन्त्रद्वयं पूर्वोक्तमेव ज्ञेयम् ।

जलयन्त्रद्वयं शिवागमे—

हण्डिकां मृन्मयीं मध्ये रसकर्णिपकां दृढाम् ।
सम्यक्पक्कां कारयित्वा रसयोग्यां विचक्षणः ॥ ५१ ॥
सूतादिचपके तस्या दत्त्वा मुद्रां प्रकल्पयेत् ।
अथवाऽस्या अधश्छिद्रं कृत्वा सूक्ष्मं रसादिकम् ॥ ५२ ॥
तेन मार्गेण तस्यान्तः पारदाद्यर्पयेत्क्रिया ।
लोहखण्डकया पश्चाल्लोहहण्ड्या अधो बिलम् ॥ ५३ ॥
ताम्रादिधातुनाऽऽमुद्र्य तदुपर्यर्पयेज्जलम् ।
अधोऽग्निं क्रमशः कृत्वा मात्रया ज्वालयेत्सुधीः ॥ ५४ ॥

---

१ क. °ताम्रमु° । २ क. रदं दृढम् । ३ क. °हण्डि° ।

अष्टभिः प्रहरैर्गन्धो द्विपलः पच्यते रसे (सः) ।
एवं गन्धाभ्रपाकोऽहोरात्रतः परिपच्यते ॥ ५५ ॥

अथ मुद्राद्वयं यथा—

शुन्द्राञ्जननिभं किट्टं किट्टार्धां शमितां कुरु ।
सुवर्णपुष्पनिर्यासं शमितार्धं नियोजयेत् ॥ ५६ ॥
दक्षाण्डजद्रवेणेद मर्दयित्वा दृढं भिषक् ।
सर्वत्र मुखमुद्रेयं पुत्रस्यापि न कथ्यते ॥ ५७ ॥
एतां मुद्रामम्बुयन्त्रसिध्यर्थं दुर्लभां कुरु ।
जलाग्नियोगतो नैव भिद्यतेऽसौ कदाचन ॥ ५८ ॥

इति मदनमुद्रा ।

अन्यच्च—

स्निग्धं लोहरजः स्निग्धमयस्कान्तरजःसमम् ।
छागं शकृच्च रुधिरं वज्रीक्षीरेण मर्दयेत् ॥ ५९ ॥
लेपनं तु प्रयत्नेन वज्रमुद्रा प्रजायते ।

इति वज्रमुद्रा ।

सिक्थमाढकमादाय तत्पोडशगुणे जले ॥ २६० ॥
प्रक्षिप्याऽऽवर्तयेल्लौहे कटाहे चण्डवह्निना ।
यावत्तिष्ठेदुपर्यस्य जलमङ्गुलपञ्चकम् ॥ ६१ ॥
ततोऽन्यत्क्वाथ्यमानं तु जलं तत्राऽऽगलं क्षिपेत् ।
एवं पुनः पुनः कुर्याद्यावत्तज्जायते घनम् ॥ ६२ ॥
मुद्रायोग्यमतिस्वल्पं गृह्णीयात्तत्प्रयत्नतः ।
तेन मुद्रा विधातव्या जलयन्त्रस्य साधकैः ॥
न भिद्यते जलैरेषा वर्षेणापि कदाचन ॥ ६३ ॥

इति मदनमुद्रा ।

षड्विंशच्छागलवणं चतुर्विंशतिरभ्रकम् ।
शुक्तिर्द्वादशभागा च गृहीत्वैतद्भिषग्वरः ॥ ६४ ॥
एतत्त्रयं जारयित्वा खोटबद्धं तु कारयेत् ।
तत्खोटं पञ्चपलिकं द्विगुणं छागमांसकम् ॥ ६५ ॥

---

१ क. °जस्तथा छा° ।

एतद्द्वयं मर्जयेत्तद्वतसीतैलमध्यगम् ।
विधिना मर्जयेत्तावद्यावत्स्यान्मृदुपाकवत् ॥ ६६ ॥
पश्चाद्भपराठस्य चूर्णं पञ्चपलोन्मितम् ।
वज्रीक्षीरं दशपलं ग्रयं सम्यक्प्रमर्दयेत् ॥ ६७ ॥
तायलोहघनैः कृत्वा यावत्सिक्थकसंनिभम् ।
एषा मदनमुद्रा च कथिता रसवादिभिः ॥ ६८ ॥

अन्यच्च—

संजारितं सिक्थकिट्टं पलं शुभ्रोपलं पटम् ।
पलं सर्जरसं तैलेऽतसीजे भर्जयेद्द्वयम् ॥ ६९ ॥
भूर्जपत्ररजस्तत्र लोहकिट्टरजस्तथा ।
पृथक् पट् शाणतुलितं क्षेपयेत्सर्वमेकतः ॥ ॥ ७० ॥
वज्रीक्षीरेण संमर्द्य गाढं तन्मदनोपमम् ।
मुद्रेयं मदनाख्या च जलयन्त्रार्थमीरिता ॥ ७१ ॥

इति मदनमुद्रा ।

अथापरा मदनमुद्रा—

अधस्ताप उपर्यापो मध्ये च रसगन्धकौ ।
यदि स्यात्सुदृढा मुद्रा मन्दभाग्योऽपि सिध्यति ॥ ७२ ॥
यदि कार्यमधोयन्त्रं तदाऽन्तर्गूपगाऽन्वितम् ।
पूर्ववज्जारणा तत्र गन्धकादेरपि स्मृता ॥ ७३ ॥

अथापरा मदनमुद्रा—

लोहसिंघान(ङ्घाण)जं चूर्णं पटगं कुडवद्वयम् ।
लवणं तच्चतुर्थांशं तत्तुर्यांशं च सिक्थकम् ॥ ७४ ॥
दृढं छागयकृत्खण्डं रुधिरेण प्रमर्दितम् ।
कालशीकरसेनैव लेपः स्याद्यन्त्रसन्धिके ॥ ७५ ॥
जलाग्नियोगतो नेयं भिद्यते मदनाभिधा ।
मुद्रेयं वारियन्त्रस्य कथिता रसवादिभिः ॥ ७६ ॥
मण्डूरचूर्णं विमलं मधूकैर्विमर्दितं किंचिद्गु(दु)माम्बुसिक्तम् ।

---

१ क. चचममन्वितम् । २ क. °रसरत° । ३ क. प्रमुदित° । ४ क. लपाक° । ५ °चिद्‌-सिक्तमेव । वि° ।

विलेपितं यन्त्रविधौ तदङ्गेन भिद्यते नैव च दह्यतेऽग्नौ ॥ ७७ ॥
तूलं च कलिकाचूर्णं निरम्बुक्षीरमर्दितम् ।
जलमुद्रेति कथिता केश्चित्पारदवेदिभिः ॥ ७८ ॥

इति मदनमुद्रा ।

अथ पारदगुणाः—

पाठः खोटो जलौका च भस्म चापि चतुर्थकम् ।
बन्धश्चतुर्विधो ज्ञेयः सूतस्य भिषगुत्तमैः ॥ ७९ ॥
पाठः पर्पटिकाबन्धः पिष्ठीबन्धस्तु खोटकः ।
जलौका पङ्कबन्धाऽस्या भस्म भस्मनिभं भवेत् ।
सूतभस्म द्विधा ज्ञेयमूर्ध्वगं तलभस्म च ॥ २८० ॥

ऊर्ध्वभस्म यथा—

सूतः पञ्चपलः स्वदोषरहितस्तत्तुर्यभागो बलि-
र्द्वौ टङ्कौ नवसागरस्य तुवरीकर्षश्च संमर्दितः ।
कुर्यात्काचमुखस्थितश्च सिकतायन्त्रे त्रिभिर्वासरैः
पक्वो वह्निभिरुद्भवत्यरुणभाः सिन्दूरनामा रसः ॥ ८१ ॥

अन्यच्च—

भागो रसस्य त्रय एव भागा गन्धस्य माषः पवनाशनस्य ।
संमर्द्य गाढं सकलं सुभाण्डे तां कज्जलीं काचकृते निदध्यात्॥८२॥
संरुध्य मृत्कर्पटकैर्घटे तां मुखे सचूर्णां गुटिकां च दत्त्वा ।
क्रमाग्निना त्रीणि दिनानि पक्त्वा तां वालुकायन्त्रगतां ततः स्यात्॥८३॥
बन्धूकपुष्पारुणमं रसस्य भस्म प्रयोज्यं सकलामयेषु ।
निजानुपानैर्मरणं जरां च हन्त्यस्य वल्लः क्रमसेवनेन ॥ ८४ ॥
वाते सक्षौद्रपिप्पल्यपि च कफरुजि त्र्यूषणं साग्निचूर्णं
पित्ते सैलासितेन्दुर्व्रणवति तुवरा गुग्गुलश्चारुवल्लः ।
चातुर्जातेन पुंस्त्वे हरनयनफला शाल्मलीपुष्पवृन्तं
किंवा कान्ताललाटाभरणरसपतेः स्यादनूपानमेतत् ॥ २८५ ॥

---

१ क. °यत्र वि° । २ ग °म् । वेधश्च° । ३ ग. °ङ्कवेधः स्या° । ४ ग. °तुल्यभा° । ५ क. ग. °च भुनिरिव° ।

अपहरति रोगवृन्दं द्रवयति कायं महत्सुखं कुरुते ।
पुत्रशतानि च सूते सिन्दूराख्यो रसः पुंसाम् ॥ ८६ ॥
स्मरस्याऽऽयुर्नानागदगहनदावानलशिखा
सखा वह्नेस्तेजोबलरचितवाग्वृद्धिमुदिरः ।
अपि प्रौढस्त्रीणामतुलबलहारी त्रिभुवने
रसः सिन्दूराख्यो सकलरसराजो विजयते ॥ ८७ ॥
कूष्माण्डं कर्कटीं कोलं कलिङ्गं करमर्दकम् ।
करीरं चेति षट् कादीन्रसभुग्वर्जयेज्जनः ॥ ८८ ॥
यस्य रोगस्य यो योगस्तेनैव सह सेवितः ।
रसेन्द्रो हरते व्याधिं नरकुञ्जरवाजिनाम् ॥ ८९ ॥
पारदः सकलरोगहा स्मृतः षड्रसो निखिलयोगवाहकः ।
पञ्चभूतमय एव कीर्तितस्तेन षड्गुणगणैर्विराजते ॥२९०॥

इति पारदगुणाः ।

## अथ तलभस्म—

सूतश्चतुष्पलमितः समशुद्धगन्धः
स्याद्धेमसारपिचुरेकमिदं क्रमेण ।
संमर्दयेद्विमलवाडिमपुष्पतोये
घस्रं विमिश्र्य सितसोमलमाषकेण ॥ ९१ ॥
एतन्निधाय सकलं जलयन्त्रगर्भे
संमुद्र्य संधिमुदितेन पुरा क्रमेण ।
आपूर्य यन्त्रमुदकेन दिनानि चाष्टौ
वह्निं क्रमेण तदधो विदधीत विद्वान् ॥ ९२ ॥
पश्चाच्च तज्जलमुदस्य रसं तलस्थ-
मादाय भाजनवरे सुभिषङ्निदध्यात् ।
संपूज्य शंभुगिरिजागिरिजातनूज-
मद्याच्छुभेऽहनि रसं परमेकगुञ्जम् ॥ ९३ ॥
ताम्बूलिकादलयुतं ससितं पयोऽनु
पीत्वाऽम्लमाषलवणं रहितं सदन्नम् ।
अद्यात्कियन्त्यपि दिनानि ततो यथेच्छं
भक्ष्यं भजेदथ नरो विगतामयः स्यात् ॥ ९४ ॥

---

१ क. ग. °ति । शुक्रस्° । २ क. °स्याऽऽभूर्ना° । ३ क. °तोयेर्मर्द ।

इति तलभस्म ।

## अथ भस्मसूतगुणाः—

अगुरुरतेजाः शुभ्रो वह्निस्थायी स्थिरो धूमः ।
हेमादिधातुमोक्ता तत्कर्ता स्यान्मृतः सूतः ॥ ९५ ॥
रसायनं त्रिदोषघ्नो योगवाह्यतिशुक्रलः ।
भस्मसूतोऽखिलातङ्कनाशनस्त्वनुपानतः ॥ ९६ ॥

इति भस्मसूतगुणाः ।

## अथ कर्पूररसप्रकारः—

गैरिकतुवरीखटिकासैन्धववगडजं रजः कुडवम् ।
प्रत्येकदृढं हण्डयामाधायास्योपरीशजः स्थाप्यः ॥ ९७ ॥
कुडवमितोऽथ तदूर्ध्वं देया हण्डी तदास्यापातमुखी (?)।
अथ तत्संधौ मुद्रां कृत्वा तदधो हुताशनो ज्वाल्यः ॥९८॥
अर्मणषट्कप्रमितैर्दारुभिरनु नातिदुर्बलस्थूलैः ।
अग्निं क्रमेण दद्याद्गुरुदर्शितवर्त्मना द्युनिशम् ॥ ९९ ॥
तदनु ततो यन्त्रवराद्युक्त्या कर्पूरसंनिभं सूतम् ।
आदाय काचकुम्भे निधाय नवसागरं दद्यात् ॥ ३०० ॥
संमुद्य चाथ काष्ठैरर्धार्मणसंमितैः पचेदम्लम् ।
चुल्लीडमरुकमध्ये वितस्तिचतुरङ्गुलावकाशं तु ॥ १ ॥
कर्तव्यं क्रमदहनं तदहः प्रज्वालयेन्मध्यम् ।
शशिधवलमुपरिलग्नं युक्त्या संगृह्य रक्षयेद्यत्नात् ॥ २ ॥
वल्लं वा वल्लार्धं गुडेन जीर्णेन रोगिणे दद्यात् ।
दुग्धौदनं तु पथ्यं देयं चास्मै च ताम्बूलम् ॥
हरति समस्तं रोगं कर्पूराख्यो रसो नृणाम् ॥ ३ ॥
फिरङ्गकरिकेसरी सकलकुष्ठकालानलोऽ-
खिलव्रणविनाशकृद्व्रणगजातिपूतिव्रणुत् ।
सुवर्णसमवर्णकृद्बलहुताशतेजस्करः
समस्तगदतस्करो रसपतिः स कर्पूरकः ॥ ४ ॥

इति कर्पूररसः ।

---

१ क. °रो क्षमः । २ ग. °तो मूर्छितः सू° । ३ क. देयो ह° । ४ क. तद्दास्यात्तु मु° । ५ ग. °सादं । ६ क. °चेद्रसम् । ७ ग. °दधः प्र° । ८ क. °राह्निक° । ९ ग. °प्रजगतप्रतिप्रदः । ग्र° ।

अथ रसराजः—

क्ष्वेडाहिफेनफलिनीविषमुष्टिदिग्धे
पक्त्वे निबध्य रसगन्धकखर्पराणि ।
गौर्यां पचेत्तदनु लावपुटैः शतेन
सौवर्णबीजजठरे विनियोजितानि ॥ ५ ॥
निष्पेषयेद्दशदशान्तरतश्च तेषां
तोयैरपूपमुपकल्प्य विशुष्कमर्कैः ।
तत्कर्दमैः प्रतिपुटं प्रविधाय दिग्ध-
मेवं पुटेदधिशतं रसराज एषः ॥ ६ ॥
रेतस्तम्भं विधत्ते वपुषि च घनतामग्निमान्द्यं निहन्या-
द्यक्ष्माणं तु क्षणेन क्षपयति सहसा पौरुषं व्यातनोति ।
उच्चैःशूलप्रमेहानिलकफगदहृद्रोगपाण्डुप्रतिश्या-
कासश्वासोदराक्षिश्रवणमुखगदानाशु खादत्पवश्यम् ॥ ७ ॥

इति रसराजः ।

अथ दरदेशः—

पञ्चपलं दरदं पलमेकं
शुद्धबलिं मृदि वह्निगतायाम् ।
कज्जलिकां विरचय्य तथाऽलं
मापमिता(तां) विनियोज्य च कूप्याम् ॥ ८ ॥
विपचेत्सिकतासु दिनं दहनैस्तदनु स्वत एव हिमं च हरेत् ।
दरदेश इति क्षयनाशकरो भवतीह रसः सकलामयजित् ॥ ९ ॥

इति दरदेशः ।

इति संक्षेपतः प्रोक्तः सारः सूतविधिर्मया ।
नानातन्त्रात्समाकृष्य क्षीरस्य नवनीतवत् ॥ १० ॥

इति श्रीयोगतरङ्गिण्यां रसोत्पत्तिलक्षणसंस्कारमारणवादकपतं नाम
द्विचत्वारिंशस्तरङ्गः ॥ ४२ ॥

———

१ क. हि पाडउशु ह° ।

अथ त्रिचत्वारिंशत्तरङ्गः ।

---

अथोपरसाः कथ्यन्ते—

गन्धको वज्रवैक्रान्तौ सिन्दूरं बोलगैरिके ।
समुद्रफेनः खटिकाद्वयं शम्बूकताक्ष्यंजे ॥ १ ॥
कासीसं कान्तपाषाणो वराटी शुक्तिहिङ्गुलौ ।
कङ्कुष्ठशङ्खमूनागटङ्कणं च शिलाजतु ॥ २ ॥
उक्ता उपरसा एते द्रव्यनिर्णयकारिभिः ।

तत्र गन्धकमाह—

श्वेतद्वीपे पुरा देव्या क्रीडन्त्या रजसा प्लुतम् ।
दुकूलं तेन वस्त्रेण स्नातायाः क्षीरनीरधौ ॥
प्रसृतं यद्रजस्तस्माद्गन्धकः समजायत ॥ ४ ॥

वर्णयुक्तमाह—

चतुर्धा गन्धकः प्रोक्तो रक्तः पीतः सितोऽसितः ।
रक्तो हेमक्रियासूक्तः पीतश्चैव रसायने ॥
व्रणादिलेपने श्वेतः श्रेष्ठः कृष्णः सुदुर्लभः ॥ ५ ॥

शुद्धत्वमाह—

सदुग्धभाण्डस्थपटस्थितोऽयं शुद्धो भवेत्कूर्मपुटेन गन्धः ॥ ६ ॥

इति गन्धकशुद्धिः ।

अथ गन्धकगुणाः—

गन्धकः कटुकस्तिक्तो वीर्योष्णस्तुवरः सरः ।
पित्तलः कटुकः पाके कण्डूवीसर्पजन्तुजित् ॥ ७ ॥
हन्ति कुष्ठक्षयप्लीहकफवातान्रसायनम् ।
अशोधितो गन्ध एष कुष्ठसंतापकारकः ॥ ८ ॥
शुक्रौजःक्षयमाबल्यं करोति च रुचिभ्रमत् ।

इति गन्धकगुणाः ।

अथ वज्रम्—

दधीच्यस्थिसमुत्पन्नः पविस्तस्य कणाः क्षितौ ॥ ९ ॥
विकीर्णास्ते तु वज्राख्यां भजन्ते तच्चतुर्विधम् ।

---

१ ग. °तार्धरम् । ध°।

तस्य वर्णमाह—

श्वेतं द्विजाभिधं रक्तं क्षत्रियाख्यं तथेरितम् ॥ १० ॥
पीतं वैश्याख्यमुदितं कृष्णं स्याच्छूद्रसंज्ञकम् ।
पुंस्त्रीनपुंसकं तत्तु चतुर्विधमपि स्मृतम् ॥ ११ ॥

तस्य परीक्षा—

वृत्ताः फलकसंपूर्णास्तेजोवन्तो बृहत्तराः ।
पुरुषा हीरकाः प्रोक्ता रेखाबिन्दुविवर्जिताः ॥ १२ ॥
रेखाबिन्दुसमायुक्ताः षट्कोणास्ते स्त्रियः स्मृताः ।
त्रिकोणायतना दीर्घा विज्ञेयास्ते नपुंसकाः ॥ १३ ॥
सर्वेषां पुरुषाः श्रेष्ठा वेधका रसबन्धकाः ।
स्त्रीवज्रं देहसिद्ध्यर्थं क्रमेण स्यान्नपुंसकम् ॥ १४ ॥
विप्रो रसायने प्रोक्तः क्षत्रियो रोगनाशने ।
वादे स वैश्यजातीयो वयसः स्तम्भनेऽन्तिमः ॥ १५ ॥
स्त्री तु स्त्रीणां प्रदातव्या क्लीबं क्लीबे प्रदीयते ।
सर्वेषां सर्वदा योज्याः पुरुषा बलवत्तराः ॥ १६ ॥

अथ वज्रशोधनम्—

व्याघ्रीकन्दगतं वज्रं दोलायन्त्रेण पाचयेत् ।
सप्ताहं कोद्रवक्वाथे कुलिशं विमलं भवेत् ॥ १७ ॥

अन्यच्च—

व्याघ्रीकन्दगतं वज्रं मृदा लिप्तं पुटे पचेत् ।
अहोरात्रात्समुद्धृत्य हयमूत्रेण सेचयेत् ॥ १८ ॥
वज्रीक्षीरेण वा सिञ्च्यात्कुलिशं विमलं भवेत् ।

इति वज्रशोधनम् ।

अथ वज्रमारणम्—

त्रिवर्षारूढकार्पासमूलमादाय पेषयेत् ॥ १९ ॥

---

१ ग. °र्थं क्रमेण स्या° ।

त्रिवर्णनागवल्ल्या वा निजद्रावैः प्रपेषयेत् ।
तद्गोलके क्षिपेद्वज्रं रुद्ध्वा गजपुटे पचेत् ॥ २० ॥
एवं सप्तपुटैर्नूनं कुलिशं मृतिमृच्छति ।

अथान्यप्रकारः—

कांस्यपात्रस्थभेकस्य मूत्रे वज्रं समावपेत् ॥ २१ ॥
त्रिःसप्तकृत्वः संतप्तं वज्रमेवं मृतं भवेत् ।

अथान्यप्रकारः—

त्रिःसप्तकृत्वः संतप्तं खरमूत्रेण सेचितम् ॥ २२ ॥
मत्कुणैस्तालकं पिष्ट्वा तद्गोले कुलिशं क्षिपेत् ।
प्रध्मातं वाजिमूत्रेण सिक्तं पूर्वक्रमेण वै ॥ २३ ॥
भस्मी भवति तद्वज्रं शङ्खशीतांशुसुन्दरम् ॥ २३ ॥

वज्रं समीरकफपित्तगदान्निहन्ति
वज्रोपमं च कुरुते वपुरुत्तमभीः ।
शोफक्षयभ्रमभगंदरमेहमेदः-
पाण्डूदरश्वयथुहारि च षण्ढपाण्ड्यम् ॥ २४ ॥

इति वज्रमारणम् ।

अथ वैक्रान्तगुणाः । उक्तं च गौरीमते—

पाण्डुरोगं पार्श्वपीडां किलासं दाहसंततिम् ।
अशुद्धे वज्रवैक्रान्ते कुरुतोऽतो विशोधयेत् ॥ २५ ॥
वैक्रान्तं वज्रवच्छोध्यं ध्मातं च हयमूत्रके ।
हिमं तद्भस्म संयोज्यं वज्रस्थाने विचक्षणैः ॥ २६ ॥
वातपित्तानिलध्वंसि षड्रसं देहदार्ढ्यकृत् ।
पाण्डूदरज्वरश्वासकासयक्ष्मप्रमेहनुत् ॥ २७ ॥

इति वैक्रान्तगुणाः ।

अथ वैक्रान्तमारणम् । उक्तं च गौरीमते—

विक्रान्ता वज्रखण्डा ये वैक्रान्ताख्या भजन्ति ते ।
जातायःशोधनं हिंसा गुणास्तेषां च वज्रवत् ॥ २८ ॥

इति वैक्रान्तमारणम् ।

---

१ °वपुरभ° ।

अथ सिन्दूरम्—

सिन्दूरं निम्बुकद्रावैः पिष्ट्वा वह्नौ विशोषयेत् ।
ततस्तण्डुलतोयेन तथाभूतं विशुध्यति ॥ २९ ॥
सिन्दूरमुष्णं वीसर्पकुष्ठकण्डूविषापहम् ।
भग्नसंधानजननं व्रणशोधनरोपणम् ॥ ३० ॥

इति सिन्दूरम् ।

अथ बोलम्—

बोलं रक्तहरं शीतं चक्षुष्यं दीपनं सरम् ।
ज्वरापस्मारकुष्ठघ्नं गर्भाशयविशोधनम् ॥ ३१ ॥

इति बोलम् ।

अथ श्यामबोलम्—

श्यामबोलं तीक्ष्णगन्धं पटुकण्डूविषापहम् ।
कुष्ठापस्मारबध्नार्शोरक्तग्रन्थि च नाशयेत् ॥ ३२ ॥

इति श्यामबोलम् ।

अथ मानुषबोलम् ।

अपरं मानुषं बोलं सद्योव्रणरुजापहम् ।
भग्नास्थिसंधिजननं त्रिदोषशमनं हिमम् ॥ ३३ ॥
धातुकान्तिवयःस्थैर्यबलौजोवृद्धिकारकम् ।
प्रमेहकुष्ठपिडकासर्वव्रणविषापहम् ॥ ३४ ॥

इति मानुषबोलम् ।

अथ गैरिकत्रयम्—

गैरिकं किंचिदाज्येन भृष्टं शुद्धं प्रजायते ।
गैरिकं दाहपित्तास्रकफाहिध्माविषापहम् ॥ ३५ ॥
चक्षुष्यं वान्तिकण्डूघ्नं शीतं रूक्षमुदर्दनुत् ।
स्वर्णगैरिकमन्यत्तु श्रेष्ठं सामान्यगैरिकात् ॥
पाषाणगैरिकं त्वन्यद्धिक्कालक्ष्मीविषापहम् ॥ ३६ ॥

इति गैरिकत्रयम् ।

---

१ ग. 'ष्ट्वा वर्मे वि॰' । २ ग. इति सिंमिरे ।

अथ समुद्रफेनः—

समुद्रफेनश्चक्षुष्यो लेखनः शीतलः सरः ।
कर्णस्रावरुजागूथहरः पाचनदीपनः ॥ ३७ ॥
अशुद्धः स करोत्यङ्गमङ्गं तस्माद्विशोधयेत् ।
समुद्रफेनः संपिष्टो निम्बुतोयेन शुध्यति ॥ ३८ ॥

इति समुद्रफेनः ।

अथ खटिकाद्वयम्—

खटी दाहास्रनुच्छीता कफघ्नी चक्षुषोर्हिता ।
तद्वत्पाषाणखटिका व्रणपित्तास्रजिन्द्धिमा ॥ ३९ ॥

इति खटिकाद्वयम् ।

अथ शम्बूकः—

शम्बूकः शीतलो नेत्ररुजास्फोटविनाशनः ।
शीतज्वरहरस्तीक्ष्णो ग्राही दीपनपाचनः ॥ ४० ॥

इति शम्बूकः ।

अथ रसाञ्जनम्—

रसाञ्जनं कटु श्लेष्ममुखनेत्रविकारजित् ।
तिक्तोष्णं मदरुध्वंसि व्रणघ्नं च रसायनम् ॥ ४१ ॥

इति रसाञ्जनम् ।

अथ कासीसद्वयम्—

कासीसद्वयमम्लोष्णं तिक्तं केश्यं दृशोर्हितम् ।
हन्ति कण्डूविषश्वित्रमूत्रकृच्छ्रकफानिलान् ॥ ४२ ॥

इति कासीसद्वयम् ।

अथ कान्तपाषाणः—

चुम्बको लेखनः शीतो मेदोविषगदापहः ।
कण्डूपाण्डूदरक्षैण्यमोहमूर्छामलौहहृत् ॥ ४३ ॥

इति कान्तपाषाणः ।

---

१ क. °गदान° ।

## अथ कपर्दिका—

वराटिका त्रिधा प्रोक्ता श्वेतशोणाऽसिता परा ।
पीता चेतीह चत्वारः श्वेतशोणा हिमा मता ॥ ४४ ॥
असिता बिन्दुभिः श्वेतैर्लाञ्छिता ऽऽसपाऽथ या ।
बालग्रहहरी नानाकौतुकेषु च पूजिता ॥ ४५ ॥
पीता गुल्मयुता पृष्ठे रसयोगेषु पूजिता ।
सार्धनिष्कप्रमाणाऽसौ श्रेष्ठयोगेषु युज्यते ॥ ४६ ॥
निष्कप्रमाणा मध्या सा हीना पादोननिष्किका ।
कपर्दिका हिमा नेत्रहिता स्फोटक्षयापहा ॥ ४७ ॥
कर्णस्रावाग्निमान्द्यघ्नी पित्तास्रकफनाशिनी ।

इति कपर्दिका ।

## अथ शुक्तिका—

शुक्तिका शिशिरा पित्तरक्तज्वरविनाशिनी ॥ ४८ ॥

इति शुक्तिका ।

## अथ दरदः—

दरदस्त्रिविधः प्रोक्तश्चर्मारः शुकतुण्डकः ।
हंसपादस्तृतीयस्तु गुणवन्तो यथोत्तरम् ॥ ४९ ॥
चर्मारः शुक्लवर्णः स्यात्स पीतः शुकतुण्डकः ।
जपाकुसुमसंकाशो हंसपादो महोत्तमः ॥ ५० ॥
अशुद्धो दरदः कुर्यादान्ध्यं क्लैब्यं क्लमं भ्रमम् ।
मोहं मेहं च संशोध्यस्तस्माद्दैयस्तु हिङ्गुलः ॥ ५१ ॥
मेषीक्षीरेण दरदमम्लवर्गैश्च भावितम् ।
सप्तवारं प्रयत्नेन शुद्धिमायाति निश्चितम् ॥ ५२ ॥
कषायतिक्तं कटु हिङ्गुलं स्यान्नेत्रामयघ्नं कफपित्तहारि ।
हृल्लासकुष्ठज्वरकामलाघ्नं प्लीहामवातौ च गरं विनाशयेत् ॥ ५३ ॥

इति दरदः ।

## अथ कङ्कुष्ठम्—

हिमाचलैकदेशे तु कङ्कुष्ठमुपजायते ।
तत्रैकं नालिकारूपं स्याद्न्यद्रेणुकनामकम् ॥ ५४ ॥

पीतप्रभं गुरु स्निग्धं कङ्कुष्ठं शिलया समम् ।
मुद्गतीव शलाकाभं सच्छिद्रं नलिकाभिधम् ॥ ५५ ॥
रेणुकाख्यं तु कङ्कुष्ठं श्यामपीतरजोनिभम् ।
त्यक्तसत्त्वं लघु प्रायः पूर्वस्माद्धीनवीर्यकम् ॥ ५६ ॥
कङ्कुष्ठं रेचनं तिक्तं कटूष्णं वर्णकारकम् ।
कृमिशोफोदराध्मानगुल्मानाहकफापहम् ॥ ५७ ॥

इति कङ्कुष्ठम् ।

### अथ शङ्खः—

शङ्खः क्षारो हिमो ग्राही ग्रहणीरेकनाशनः ।
नेत्रपुष्पहरो वर्ण्यस्तारुण्यपिडकाप्रणुत् ॥ ५८ ॥
अशुद्धो गुणदो नैव शुद्धोऽम्लैः स गुणप्रदः ।

इति शङ्खः ।

### अथ दक्षिणावर्तशङ्खः—

दक्षिणावर्तशङ्खस्तु त्रिदोषघ्नः शुचिर्निधिः ॥ ५९ ॥
ग्रहालक्ष्मीक्षयक्ष्वेडक्षामैतां क्षिक्षयाक्षमी ।

इति दक्षिणावर्तशङ्खः ।

### अथ भूनागसत्त्वमयूरपक्षसत्त्वगुणाः—

ताम्रभूमवैर्भूनागांस्त्रिंशत्पिष्टान्समेन तान् ।
गुडगुग्गुलुलाक्षोर्णसत्त्वपिण्याकटङ्कणैः ।
दृढमेतैश्च संयोज्य मर्दयित्वा धमेत्सुखम् ॥ ६१ ॥
मुञ्चन्ति ताम्रवत्सत्त्वं ते पक्षा अपि बर्हिणाम् ।
भूनागसत्त्वं शिशिरं सर्वकुष्ठव्रणप्रणुत् ॥ ६२ ॥
तत्स्पृष्टजलपानेन स्थावरं चापि जङ्गमम् ।
विषं नश्यति तत्पात्रगतः सूतोऽग्नितो दृढः ॥ ६३ ॥
एवं मयूरपक्षोत्थसत्त्वस्यापि गुणा मताः ।

इति भूनागसत्त्वमयूरपक्षसत्त्वगुणाः ।

---

१ क. °स्वकाय° । २ क. °मतिक्षयाख्यी । ३ ग. °वमेना° । ४ ग. °नागाविकापि° । ५ क. °द । पुरकाक्षोर्णाभि स्याग्मसत्त्व° । ६ ग. °लुक्षावेणीम° । ७ क. °भैः । दृढके° ।

## अथ टङ्कणः—

अशुद्धष्टङ्कणो वान्तिभ्रान्तिकारी प्रयोजितः ॥ ६४ ॥
अतस्तं शोधयेदेवं वह्नावुत्फुल्लितः शुचिः ।
टङ्कणो वह्निकृत्स्वर्णरूप्ययोः शोधनः सरः ॥ ६५ ॥
विषदोषहरो हृद्यो वातश्लेष्मविकारनुत् ।

इति टङ्कणः ।

## अथापरष्टङ्कणः—

अपरो नीलकठाख्यटङ्कणो गुणतस्तथा ॥ ६६ ॥

इत्यपरटङ्कणः ।

## अथ शिलाजतु—

निदाघे घर्मसंतप्ता धातुसारं धराधराः ।
निर्यासवत्प्रमुञ्चन्ति तच्छिलाजतु कीर्त्यते ॥ ६७ ॥
मधुरं कटु तिक्तं च जपापुष्पप्रभं च यत् ।
शीतं विपाकेऽपि कटु तत्सुवर्णसुतं भवेत् ॥ ६८ ॥
राजतं कटुकं श्वेतं पीतं स्वादु शिलाजतु ।
ताम्रान्मयूरकण्ठाभं तीक्ष्णोष्णं च तथा भवेत् ॥ ६९ ॥
यत्तु गुग्गुलुसंकाशं तिक्तं च लवणान्वितम् ।
विपाके कटु शीतं च सर्वश्रेष्ठं यदायसम् ॥ ७० ॥
वातपित्ते तु सौवर्णं श्लेष्मपित्ते तु राजतम् ।
ताम्रजं कफरोगे तद्व(द)योजं तु त्रिदोषनुत् ॥ ७१ ॥

## अथ शिलाजतुशोधनम्—

अथोष्णकाले रवितापयुक्ते व्यभ्रे निवाते समभूमिभागे ।
चत्वारि पात्राण्यसितायसानि न्यस्याऽऽतपे दत्तमना विधानतः ॥७२॥
शिलाजतु श्रेष्ठमवाप्य पात्रे निक्षिप्य तोयं द्विगुणं ततोऽस्मात् ।
उष्णं तदर्धं जलमत्र दत्त्वा विशोधयेत्तन्मृदितं यथावत् ॥ ७३ ॥
ततस्तु यत्कृष्णमुपैति चोर्ध्वं संतानिकावद्रविराशियोगात् ।
पात्रात्तदन्यत्र ततो निदध्यात्तस्यान्तरे कोष्णजलं निधाय ॥७४॥

---

१ क. °दं योजयेत्साऽऽवृतः । २ क. °भ्रं क° । ३ क. ततः स्यात् । ४ क. °पे वृतम° ५ क. °रे चोष्ण° ।

ततश्च तस्मादपरत्र पात्रे तस्माच्च पात्रादपरत्र तत्र ।
पुनस्ततोऽन्यत्र निधाय क्षुण्णं यत्संहृतं तत्पुनराहरेच्च ॥ ७५ ॥
यदा विशुद्धं जलमच्छमूर्ध्वं प्रसन्नभावान्मलमेत्यधस्तात् ।
तदा त्यजेत्तत्सलिलं मलं च शिलाजतु स्याज्जलशुद्धमेवम् ॥७६॥

इति शिलाजतुशोधनम् ।

## अथ शुद्धशिलाजतुपरीक्षा—

वह्नौ क्षिप्तं तु निर्धूमं यत्काठिङ्गोपमं भवेत् ।
तृणाग्रेणाम्भसि क्षिप्तमधो गलति तन्तुवत् ॥ ७७ ॥
गोमूत्रगन्धि मलिनं शुद्धं ज्ञेयं शिलाजतु ।

इति शुद्धशिलाजतुपरीक्षा ।

## अथाशुद्धशिलाजतुवैगुण्यम्—

अशुद्धं दाहमूर्छाभ्रमपित्तास्रशोषणम् ॥
शिलाजतु प्रकुरुते मान्द्यमग्नेश्च विड्ग्रहम् ॥ ७८ ॥

इत्यशुद्धशिलाजतुवैगुण्यम् ।

## अथ शुद्धशिलाजतुगुणाः—

शिलाजतु रसायनं कटुकतिक्तमुष्णं क्रमि-
क्षयोदरभिदश्मरीश्वयथुपाण्डुकण्डूहरम् ।
प्रमेहवमिकुष्ठजित्कफसमीरदुर्नामहृ-
द्वलीपलितमानसामयसकासकृच्छ्रमणुत् ॥ ७९ ॥

इति शिलाजतुगुणाः ।

## अथ पङ्कः—

पङ्को दाहार्तिपित्तास्रशोफघ्नः शीतलः सरः ।

इति पङ्कः ।

## अथ वालुका—

वालुका लेखनी शीता व्रणोरःक्षतनाशिनी ॥ ८० ॥

इति वालुका ।

१ क. यत्कालिं° । २ क. °मानसिं° ।

अथ रत्नानि—

इन्द्रपक्षीन्द्रसूर्येन्दुमणयः पुष्परागकः ।
वज्रवैडूर्यगोमेदपद्मरागा नवेत्यमी ॥ ८१ ॥

अथोपरत्नानि—

मुक्ताविद्रुमशङ्खाश्च राजावर्तस्तथैव च ।
उपरत्नानि चत्वारि कथितानि मनीषिभिः ॥ ८२ ॥
रत्नोपरत्नान्येतानि शोधनीयानि यत्नतः ।
अशुद्धानि न कुर्वन्ति गुणान्रोगांस्तु तन्वते ॥ ८३ ॥

अथैषां लक्षणं यथा—

श्यामस्त्वाविन्द्रनीलस्त्वतिमसृणतनुश्चाथ गारुत्मतः स्यात्
नीलच्छायोऽतिदीप्तोऽप्यथ मिहिरमणिः सूर्यतप्तोऽग्निमुक्स्यात् ।
चन्द्रांशुः स्पर्शतोऽम्भः स्रवति शशिमणिः पुष्परागस्तु पुष्प-
प्रख्यः श्रीवज्रमुग्रैर्घनसमभिहतं सविशेषोलोहपिण्डे ॥ ८४ ॥
वैडूर्यं यद्बिडालेक्षणरुचि गदितं स्याच्च गोमेदरत्नं
गोमूत्राभं विधूमज्वलदनलनिभं पद्मरागं वदन्ति ।
मुक्ताशङ्खप्रवालं सरिदधिपतिजं विश्वविख्यातमेत-
द्राजावर्तं तु पीतारुणमृदुसुरभि क्षोणिजातोत्थमाहुः ॥ ८५ ॥
इति सारसंग्रहात् ।

अथैषां शोधनम्—

शुध्यत्यम्लेन माणिक्यं जयन्त्या मौक्तिकं शुचि ।
विद्रुमं क्षारवर्गेण तार्क्ष्यं गोदुग्धतः शुचि ॥ ८६ ॥
पुष्परागं च कौलित्थक्वाथयोगेन शुध्यति ।
तण्डुलीयजलैर्वज्रं नीलं नीलीरसेन च ॥ ८७ ॥
रोचनाभिश्च गोमेदं वैडूर्यं त्रिफलाजलैः ।
एतान्येतद्युतस्विन्नान्याशु शुध्यन्ति दोलया ॥ ८८ ॥

अथैषां मारणम्—

लकुचद्रावसंपिष्टैः शिलातालकगन्धकैः ।
वज्रं विनाऽन्यरत्नानि म्रियन्तेऽष्टपुटैः खलु ॥ ८९ ॥

---

१ क. °च्चैवं° । २ ग. °श्चाप्येवं° ।

अथैषां गुणाः—

रत्नानि सोपरत्नानि चक्षुष्याणि सराणि च ।
शीतलानि कषायाणि मधुराणि शुभानि च ॥ ९० ॥
वृष्याणि मङ्गलान्यायुस्तुष्टिपुष्टिकराणि च ।
ग्रहालक्ष्मीविषक्षैण्यपापसंतापजिन्ति च ॥ ९१ ॥
यक्ष्मपाण्डुप्रमेहार्शःकासश्वासभगंदरान् ।
ज्वरवीसर्पकुष्ठार्तिशूलकृच्छ्रव्रणामयान् ॥ ९२ ॥
घ्नन्ति पुष्टियशःकान्तिपुण्यानि च नृणां भृशम् ।

इति रत्नोपरत्नगुणाः ।

अथ विषाणि—

सक्तुको मुस्तकः कौर्मो दार्विकः सार्षपस्तथा ॥ ९३ ॥
सैकतो वत्सनामश्च श्वेतशृङ्गी तथैव च ।
एतानि भेषजकृते विषाण्यष्टौ हरोऽब्रवीत् ॥ ९४ ॥
चित्रमुत्पलकन्दाभं संपेष्यं सक्तुवद्भवेत् ।
सक्तुकं तद्विजानीयाद्दीर्घवेगं भवोल्बणम् ॥ ९५ ॥
ह्रस्ववेगं च रोगघ्नं मुस्तकाकृति मुस्तकम् ।
कूर्माकृति भवेत्कौर्मं दार्वीकोऽहिफणाकृतिः ॥ ९६ ॥
ज्वरहृत्सार्षपो ज्ञेयः सर्षपाभकणान्वितः ।
स्थूलसूक्ष्मैः कणैर्युक्तः श्वेतपीतैर्विरोमकः ॥ ९७ ॥
ज्वरादिसर्वरोगघ्नः कन्दः सैकत उच्यते ।
यः कन्दो गोस्तनाकारो न दीर्घः पञ्चमाङ्गुलात् ॥ ९८ ॥
न स्थूलो गोस्तनाद्रूपं द्विविधो वत्सनामकः ।
आशुकारी लघुत्यागी शुक्लः कृष्णोऽन्यथा भवेत् ॥ ९९ ॥
प्रयोज्यो रोगहरणे जारणायां रसायने ।
गोशृङ्गवद्द्विधा शृङ्गी श्वेतः स्याद्बहिरन्तरे ॥ १०० ॥
एतानि सक्तुकादीनि वातरक्ते त्रिदोषके ।
मोहोन्मादापस्मृतिषु कुष्ठेषु च नियोजयेत् ॥ १ ॥
कालकूटो मेषशृङ्गी दार्दुराख्यमथापरम् ।
हालाहलश्च कर्कोटो ग्रन्थिहारिद्रकोऽपरः ॥ २ ॥

---

१ ग. °यो रोगी स° ।

रक्तशृङ्गी केसरश्च यमदंष्ट्रा च पण्डितैः ।
त्याज्यानीमानि योगेषु विषाणि दश तत्त्वतः ॥ ३ ॥
वृत्तकन्दो भवेत्कृष्णो जम्बीरफलपत्र च यः ।
तत्कालकूटं जानीयाद्घ्रातमात्रं मृतिप्रदम् ॥ ४ ॥
मेषशृङ्गाकृतिः कन्दो मेषशृङ्गीति कीर्त्यते ।
दार्दुरं दर्दुराकारमन्तर्नीलं बहिः सितम् ॥ ५ ॥
हालाहलं कर्कटाभं कर्कोटं मृदु चान्तरे ।
हारिद्रग्रन्थिवद्ग्रन्थिः कृष्णवर्णोऽतिभीषणः ॥ ६ ॥
मूलाग्रयोः सुवृत्तः स्यादायतः पीतगर्भकः ।
फल्गुकायः स्निग्धपर्णो हारिद्रः स्याच्च कन्दकः ॥ ७ ॥
गोशृङ्गाग्रेऽथ संक्षिप्ते नासयाऽस्रं प्रवर्तते ।
कन्दो लघुर्गोस्तनवद्रक्तशृङ्गी तु तद्विषम् ॥ ८ ॥
शुष्कार्द्रपरसकिञ्जल्कं मध्ये तत्केसरं विदुः ।
श्वदंष्ट्राकारसंस्थाना यमदंष्ट्रेति सोच्यते ॥ ९ ॥
रसवादे धातुवादे विषवादे क्वचित्क्वचित् ।
इष्टतानि प्रयुज्यन्ते न भैषज्ये रसायने ॥ ११० ॥

एतेषां मतमाह—

कालकूटो वत्सनाभः शृङ्गकश्च प्रदीपनः ।
हालाहलो ब्रह्मपुत्रो हारिद्रः सक्तुकस्तथा ॥ ११ ॥
सौराष्ट्रिक इति प्रोक्ता विषभेदा अमी नव ।
कालकूटोऽसितो रक्तबिन्दुभिर्बहुभिर्वृतः ॥ १२ ॥

पङ्कोपमो भवति । अयं तु देवासुरसमरेषु मालिनाम्नोऽसुरस्य रक्ततः समुत्पन्नस्य पिप्पलसदृशस्य तरोर्निर्यासोऽहिच्छत्रमलयकोङ्कणशृङ्गबेरपर्वतादिषु समुत्पद्यते ।

वत्सनाभः सिन्दुवारसदृशपत्रो वत्सनाभ्याकृतिः समीपेऽस्य वृक्षवल्लीतृणानि न वर्धन्ते । अयं तु पर्वतद्रोणीपूत्पद्यते ।

शृङ्गकस्तु गोशृङ्गाकृतिर्द्विशाखोऽस्मिञ्शृङ्गे बद्धे गोर्दुग्धं रुधिरं भवति । अपमार्गकपत्रसदृशपत्रः पङ्किलेषु नदीकच्छेषूत्पद्यते ।

प्रदीपनो ज्वलदङ्गारसदृशशोणद्युतिर्महादाहकारः खर्जूरपत्राकृतिपत्रः समुद्रकच्छेषूत्पद्यते । आघ्रातमात्रो महादाहमुत्पाद्य मारयति ।

---

१ ग. °श्रीपतो दर°।

हालाहलस्तालपत्राकृतिर्नीलपत्रो गोस्तनाकृतिफलोऽसितवर्णो गोस्तनाकृतिः कन्दो भवति । एतत्समीपे दूरतो वृक्षादयो नोत्पद्यन्ते । अयं घ्रातमात्रो मृतिदः ।

ब्रह्मपुत्रस्तु ब्रह्मपुत्रनामनदकच्छेपूत्पद्यते । पलाशपत्रसदृशपत्रः पलाशबीजसदृशफलः स्थूलः कन्दो महाप्रभावो रोगहारी रसायनकृच्च ।

हारिद्रो हरिद्राक्षेत्रे हरिद्रापत्रसदृशपत्रो हरिद्राग्रन्थिसदृशग्रन्थिर्महाप्रभावो रसायनकृच्च भवति ।

सक्तुकस्तु सक्तुकेन च पूरितोऽन्तः श्वेतो लोमलः पर्वतदेशे समुत्पद्यते ।

सौराष्ट्रिकः सुराष्ट्रदेशे जायते । स्नेहपूर्णः कृष्णागरुसदृशः कच्छपशिरोवत्स्थूलः कन्दः परूषकपत्रसदृशपत्रो महाप्रभावः ।

ब्राह्मणः पाण्डुरस्तेषु क्षत्रियो रक्तवर्णकः ।
वैश्यः पीतप्रभः शूद्रः कृष्णाभः स तु निन्दितः ॥ १३ ॥
रसायने विषं विप्रो देहपुष्टौ तु बाहुजः ।
कुष्ठनाशे प्रयुञ्जीत वैश्यं शूद्रं वधाय तु ॥ १४ ॥
विषं प्राणहरं युक्त्या प्राणकृच्च रसायनम् ।
योगवाहि परं श्लेष्मवातहृत्संनिपातजित् ॥ १५ ॥

इति विषाणि ।

अथ विषशोधनम्—

विषं तु खण्डशः कृत्वा वस्त्रखण्डेन बन्धयेत् ।
गोमूत्रमध्ये निक्षिप्य स्थापयेदातपे त्र्यहम् ॥ १६ ॥
गोमूत्रं तु प्रदातव्यं नूतनं प्रत्यहं बुधैः ।
त्र्यहेऽतीते तदुद्धृत्य शोषयेन्मृदु पेषयेत् ॥ १७ ॥
शुध्यत्येवं विषं सेवायोग्यं भवति चाऽऽर्तिजित् ।

अथान्यप्रकारः—

खण्डीकृत्य विषं वस्त्रपरिबद्धं तु दोलया ॥ १८ ॥
अजापयसि संस्विन्नं यामतः शुद्धिमाप्नुयात् ।
अजादुग्धाभावतस्तु गव्यक्षीरेण शोधयेत् ॥ १९ ॥

१ ग. 'मीपतो दूर°' । २ ग. 'दृशाकृतिः स्थू°' । ३ क. 'प्रं तु बाहुजं । वि°' ।

अथान्यप्रकारः—

विषग्रन्थिं मलं न्यस्य माहिषे दृढमुद्रितम् ।
करीषाग्नौ पचेद्यामं यत्नपूतं विषं शुचि ॥ २० ॥

इति विषशुद्धिः ।

अथ विषमारणम्—

तुल्येन टङ्कणेनैव द्विगुणेनोषणेन च ।
विषं संयोजितं शुद्धं मृतं भवति सर्वथा ॥ २१ ॥

दैवादपथासेवितस्य विषस्योत्तारणमन्त्रो यथा । ॐ नमो भगवति श्रीघोणे हर २ दर २ पर २ बंध २ ठः २ रं २ ठीं ३ हर भीं ३ सं २ शं २ क्षव २ क्षीं २ ह्रीं २ भगवति श्रीघोणे थः ३ सं ३ सः ३ चर २ रस ४ खण्डावरूपेह्रीं ३ चर विहंगमभानुपयोगक्षेमं वद शेखरि २ खः ३ स्वाहा ।

विद्यायाः स्मृतिमात्रेण प्रणश्यन्ति च गुह्यकाः ।
संसजतेन तोयेन प्रोक्षयेद्विषदूषितम् ॥ २२ ॥
उत्तिष्ठति स वेगेन तच्छिखाबन्धने कृते ।
निर्मन्त्रितं यदेतेन दुन्दुभिर्वादयेन्नरः ॥ २३ ॥
कम्बुं वा पटहं वाऽपि श्रूयते यत्र तद्ध्वनिः ।
तत्र क्षणेन कुरुते निर्विषं सविषं नरः ॥ २४ ॥
विषयारं यदा दृष्ट्वा मन्त्रमावर्तयेन्नरः ।
तत्क्षणान्निर्विषत्वं स प्रयाति मृदिवोच्चकैः ॥ २५ ॥

अथ विषसेवनमात्राविधिः—

शरद्ग्रीष्मवसन्तेषु वर्षासु च न शस्यते ।
शस्यते तु विषं शीते हेमन्ते वाऽपि मात्रया ॥ २६ ॥
प्रथमे सार्षपी मात्रा द्वितीये सर्षपद्वयम् ।
तृतीये च चतुर्थे च पञ्चमे दिवसे तथा ॥ २७ ॥
षष्ठे च सप्तमे वाऽपि क्रमवृद्ध्या विवर्धयेत् ।
सप्तसर्षपमात्रेण प्रथमं सप्तकं नयेत् ॥ २८ ॥

---

१ क. °र खर । २ ग. लीरुह° । ३ ग. भीं २ सांशे २ । ४ ग. थः ३ सः २ च २ र° । ५ क. °न च्छिखा बे° । ६ ग. निमन्त्रि° । ७ ग. °तिमदि ।

क्रमेण ह्रासयेत्तद्वद्द्वितीये सप्तके विषम्।
यवमात्रं विषं सेव्यं तृतीये सप्तके क्रमात्॥ २९॥
वृद्ध्या हान्या व(च) दातव्यं चतुर्थे सप्तके तथा।
यवमात्रं ग्रसेत्स्वस्थो गुञ्जामात्रं तु कुष्ठवान्॥ १३०॥
गुञ्जामात्रं वातरक्ती वातरोगी कफी च ना।
अशीतिर्यस्य वर्षाणि वसुवर्षाणि यस्य च॥ ३१॥
तस्मै विषं न दातव्यं दत्तं स्याद्दोषकारकम्।
दातव्यं सर्वरोगेषु पित्तरक्तगदं विना॥ ३२॥
मात्राधिकं यदा मर्त्यः प्रमादाद्भक्षयेद्विषम्।
अष्टौ वेगास्तदा तस्य जायन्ते देहिनो भृशम्॥ ३३॥
प्रस्वेदः प्रथमे वेगे द्वितीये वेपथुर्भवेत्।
दाहो वेगे तृतीये स्याच्चतुर्थे पतनं भुवि॥ ३४॥
फेनस्तु पञ्चमे वेगे षष्ठे विकलता भवेत्।
जडता सप्तमे वेगे मरणं चाष्टमे ध्रुवम्॥ ३५॥
विषवेगानिति ज्ञात्वा तत्प्रतीकारमाचरेत्।

## अथ विषे पथ्यम्—

घृतं क्षीरं सितां क्षौद्रं गोधूमांस्तण्डुलान्यवान्॥ ३६॥
मरीचं सैन्धवं द्राक्षां मधुरं पानकं हिमम्।
ब्रह्मचर्यं हिमं देशं हिमं कालं हिमं जलम्॥ ३७॥
विषस्य सेवको मर्त्यो भजेदेतद्विचक्षणः।

## अथ विषस्य गुणाः—

विषं रसायनं बल्यं वातश्लेष्मविकारनुत्॥ ३८॥
कटु तिक्तकषायं च मदकारि सुखप्रदम्।
व्यवायि शीतनुद्दाहि कुष्ठवातास्रनाशनम्॥ ३९॥
अग्निमान्द्यश्वासकासप्लीहोदरभगंदरान्।
गुल्मपाण्डुव्रणार्शांसि नाशयेत्क्रमशो नृणाम्॥ ४०॥
इति विषगुणाः।

## अथोपविषाणि—

अर्कक्षीरस्नुहिक्षीरलाङ्गलीकरवीरकम्।
गुञ्जाहिफेनौ धत्तूरः सप्तोपविषजातयः॥ ४१॥

क्वचिद्विषमुष्टिजेपालावपि गणयन्त्युपविषे मध्ये।
स्नुह्यर्कलाङ्गलीगुञ्जाहयारिविषमुष्टयः।
जेपालोन्मत्ताहिफेना नवोपविषजातयः॥ ४२॥

अथ गुञ्जाशुद्धिः—

गुञ्जा काञ्जिकसंस्विन्ना प्रहरं शुध्यति ध्रुवम्।
इति गुञ्जाशुद्धिः।

अथ लाङ्गलीशुद्धिः—

लाङ्गली शुद्धिमायाति दिनं गोमूत्रसंस्थिता॥ ४३॥
इति लाङ्गलीशुद्धिः।

अथ विषमुष्टिशोधनम्—

किंचिदाज्येन संभृष्टो विषमुष्टिर्विशुध्यति॥ ४४॥
इति विषमुष्टिशोधनम्।

अथ जेपालशुद्धिः—

जेपालं रहितं त्वगङ्कुररसज्ञानिर्मलं माहिषे
निक्षिप्तं त्र्यहमुष्णतोयविमलं खल्वे सवासोदितम्।
लिप्तं नूतनखर्परेषु विगतस्नेहं रजःसंनिभं
निम्बूकाम्बुविभावितं च बहुशः शुद्धं गुणाढ्यं भवेत्॥४५
इति जेपालशुद्धिः।

अथ धत्तूरबीजशोधनम्—

धत्तूरबीजं गोमूत्रे चतुर्यामोषितं पुनः।
कण्डितं निस्तुषं कृत्वा योगेषु विनियोजयेत्॥ ४६॥
इति धत्तूरबीजशोधनम्।

अथाहिफेनशुद्धिः—

अहिफेनं शृङ्गवेररसैर्भाव्यं त्रिसप्तधा।
शुध्यत्युक्तेषु योगेषु योजयेत्तद्विधानतः॥ ४७॥
इत्यहिफेनशुद्धिः।

---

१ प. °वा—मर्कस्तु स°।

अथार्कादुपविषाणां गुणाः—

अर्कद्वयं सरं वातकुष्ठकण्डूविषापहम् ।
निहन्ति प्लीहगुल्मार्शोयकृच्छ्लेष्मोदरक्रिमीन् ॥ ४८ ॥

इत्यर्कगुणाः ।

अथ सेहुण्डगुणाः—

सेहुण्डो रेचनस्तीक्ष्णो दीपनः कटुको गुरुः ।
शूलमाष्ठिलिकाध्मानगुल्मशोफोदरानिलान् ॥ ४९ ॥
हन्ति दोषान्विषप्लीहकुष्ठोन्मादाश्मपाण्डुताः ।

इति सेहुण्डगुणाः ।

अथ कलिकारीगुणाः—

कलिकारी सरा कुष्ठशोफार्शोव्रणशूलजित् ॥ १५० ॥
तीक्ष्णोष्णा कृमिनुल्लघ्वी पित्तला गर्भपातिनी ।

इति कलिकारीगुणाः ।

अथ गुञ्जागुणाः—

गुञ्जा लघुर्हिमा रूक्षा भेदिनी श्वासकासजित् ॥ ५१ ॥
केश्या वृष्या कुष्ठकण्डूशुक्रेलुप्तव्रणापहा ।
त्वच्या नेत्रामयहरी श्लेष्मपित्तव्रणापहा ॥ ५२ ॥

इति गुञ्जागुणाः ।

अथ करवीरगुणाः—

करवीरद्वयं नेत्ररोगकुष्ठव्रणापहम् ।
लघूष्णं कृमिकण्डूघ्नं भक्षितं विषवन्मतम् ॥ ५३ ॥

इति करवीरगुणाः ।

अथ विषमुष्टिः—

विषमुष्टिस्तिक्तकटुस्तीक्ष्णोष्णः श्लेष्मवातहा ।
सारमेयविषोन्मादहरो मदकरः सरः ॥ ५४ ॥

इति विषमुष्टिः ।

---

१ क. °तृ । °कोष्णा १° । २ ग. °कृतं सम° ।

क्वचिद्विषमुष्टिजेपालावपि गणयन्त्युपविषे यथा ।
स्नुह्यर्कलाङ्गलीगुञ्जाहयारिविषमुष्टयः ।
जेपालोन्मत्ताहिफेना नवोपविषजातयः ॥ ४२ ॥

अथ गुञ्जाशुद्धिः—

गुञ्जा काञ्जिकसंस्विन्ना प्रहरं शुध्यति ध्रुवम् ।
इति गुञ्जाशुद्धिः ।

अथ लाङ्गलीशुद्धिः—

लाङ्गली शुद्धिमायाति दिनं गोमूत्रसंस्थिता ॥ ४३ ॥
इति लाङ्गलीशुद्धिः ।

अथ विषमुष्टिशोधनम्—

किंचिदाज्येन संभृष्टो विषमुष्टिर्विशुध्यति ॥ ४४ ॥
इति विषमुष्टिशोधनम् ।

अथ जेपालशुद्धिः—

जेपालं रहितं त्वगङ्कुररसज्ञानिर्मलं माहिषे
निक्षिप्तं त्र्यहमुष्णतोयविमलं खल्वे सवासोर्दितम् ।
लिप्तं नूतनखर्परेषु विगतस्नेहं रजःसंनिभं
निम्बूकाम्बुविभावितं च बहुशः शुद्धं गुणाढ्यं भवेत् ॥४५॥
इति जेपालशुद्धिः ।

अथ धत्तूरबीजशोधनम्—

धत्तूरबीजं गोमूत्रे चतुर्यामोषितं पुनः ।
कण्डितं निस्तुषं कृत्वा योगेषु विनियोजयेत् ॥ ४६ ॥
इति धत्तूरबीजशोधनम् ।

अथाहिफेनशुद्धिः—

अहिफेनं शृङ्गबेररसैर्भाव्यं त्रिसप्तधा ।
शुध्यत्युक्तेषु योगेषु योजयेत्तद्विधानतः ॥ ४७ ॥
इत्यहिफेनशुद्धिः ।

---

१ ग. 'वा—सर्वत्र स्व' ।

अथार्काद्युपविषाणां गुणाः—

अर्कद्वयं सरं वातकुष्ठकण्डूविषापहम् ।
निहन्ति प्लीहगुल्मार्शोयकृच्छ्लेष्मोदरक्रिमीन् ॥ ४८ ॥

इत्यर्कगुणाः ।

अथ सेहुण्डगुणाः—

सेहुण्डो रेचनस्तीक्ष्णो दीपनः कटुको गुरुः ।
शूलमाष्ठिलिकाध्मानगुल्मशोफोदरानिलान् ॥ ४९ ॥
हन्ति दोषान्विषप्लीहकुष्ठोन्मादाश्मपाण्डुताः ।

इति सेहुण्डगुणाः ।

अथ कलिकारीगुणाः—

कलिकारी सरा कुष्ठशोफार्शोव्रणशूलजित् ॥ १५० ॥
तीक्ष्णोष्णा क्रिमिनुल्लघ्वी पित्तला गर्भपातिनी ।

इति कलिकारीगुणाः ।

अथ गुञ्जागुणाः—

गुञ्जा लघुर्हिमा रूक्षा भेदिनी श्वासकासजित् ॥ ५१ ॥
केश्या वृष्या कुष्ठकण्डूशुक्लेलुप्तव्रणापहा ।
त्वच्या नेत्रामयहरी श्लेष्मपित्तव्रणापहा ॥ ५२ ॥

इति गुञ्जागुणाः ।

अथ करवीरगुणाः—

करवीरद्वयं नेत्ररोगकुष्ठव्रणापहम् ।
लघूष्णं क्रिमिकण्डूघ्नं भक्षितं विषवन्मतम् ॥ ५३ ॥

इति करवीरगुणाः ।

अथ विषमुष्टिः—

विषमुष्टिस्तिक्तकटुस्तीक्ष्णोष्णः श्लेष्मवातहा ।
सारमेयविषोन्मादहरो मदकरः सरः ॥ ५४ ॥

इति विषमुष्टिः ।

---

१ क. 'द्र' । 'कोष्णा १' । २ ग. 'क्लो सम' ।

## अथ जैपालगुणाः—

जैपालोऽतिगुरुः स्निग्धो रेची पित्तकफापहः ।
तीक्ष्णो दाहकरः प्लीहगुल्मोदरविबन्धनुत् ॥ ५५ ॥
इति जैपालगुणाः ।

## अथ धत्तूरः—

धत्तूरो मदवर्णाग्निवान्तिकृज्ज्वरकुष्ठनुत् ।
उष्णो गुरुर्व्रणश्लेष्मकण्डूक्रिमिविषापहः ॥ ५६ ॥
इति धत्तूरः ।

## अथाहिफेनः—

आफूकं शोषणं ग्राहि श्लेष्मघ्नं वातपित्तलम् ।
मदकृद्दाहकृच्छुक्रस्तम्भनायासमोहकृत् ॥ ५७ ॥
अतीसारे ग्रहण्यां च हितं दीपनपाचनम् ।
सेवितं दिवसैः कैश्चिद्भ्रमयत्यन्यथाऽऽर्तिकृत् ॥ ५८ ॥
इत्यहिफेनः ।
इत्युपविषाणि ।

## अथाभ्रसत्त्वपातनविधिः—

भावयेच्चूर्णितं त्वभ्रं दिनैकं काञ्जिकेन च ।
रम्भासूरणजैर्नीरैर्मूलकोत्थैश्च मेलयेत् ॥ ५९ ॥
तुर्यांशटङ्कणेनैव क्षुद्रमत्स्यैः समं पुनः ।
महिषीमलसंमिश्रान्विधायास्याथ गोलकान् ६० ॥
खराग्निना धमेद्गाढं सत्त्वं मुञ्चति कांस्यवत् ।
मारितं ताम्रवद्भूपारदाभ्यां निषेवयेत् ॥ ६१ ॥
सत्त्वमभ्रस्य शिशिरं त्रिदोषघ्नं रसायनम् ।
विशेषात्पुंस्त्वजननं चपलः स्तम्भनं परम् ॥ ६२ ॥
नानेन सदृशं किंचिद्भैषज्यं पुंस्त्वकृत्परम् ।
इत्यभ्रकसत्त्वम् ।

## अथ तालकसत्त्वम्—

लाक्षाराजितिलाञ्शिग्रुं टङ्कणं लवणं गुडम् ॥ ६३ ॥
तालकार्धेन संमिश्रं मूषायां स्थिरमार्जने ।
रुद्ध्वा पुटेदधोयन्त्रे सत्त्वं मुञ्चति सर्वथा ॥ ६४ ॥

जैपालसत्त्ववातारिबीजमिश्रं च तालकम् ।
कूपिस्थं वालुकायन्त्रे सत्त्वं मुञ्चति सर्वथा ॥ ६५ ॥

इति तालकसत्त्वम् ।

अथाभ्रकद्रुतिः—

अगस्त्यपत्रनिर्यासमर्दितं सूरणस्थितम् ।
अभ्रं गोष्ठगतं मासं जायते पारदोपमम् ॥ १६६ ॥

इत्यभ्रकद्रुतिः ।

इति योगतरङ्गिण्यां रसोपरसविषोपविषाभ्रसत्त्वादिकथनं नाम
त्रिचत्वारिंशत्तरङ्गः ॥ ४३ ॥

---

अथ चतुश्चत्वारिंशत्तरङ्गः ।

---

अथारिष्टज्ञानोपायः—

पुष्पं फलस्य धूमोऽग्नेर्वर्षस्य जलदोदयः ।
यथा भविष्यतो लिङ्गं रिष्टं मृत्योस्तथा ध्रुवम् ॥ १ ॥
आयुष्मति क्रियाः सर्वाः सफलाः संप्रयोजिताः ।
भवन्ति भिषजां भूत्यै कृतज्ञ इव भूभुजि ॥ २ ॥
क्षीणायुषि कृतं कर्म व्यर्थं कृतमिवाधमे ।
अयशो देहसंदेहं स्वार्थहानिं च यच्छति ॥ ३ ॥
विकृतिः प्रकृतेः प्राज्ञैः प्रदिष्टाऽरिष्टसंज्ञया ।
तदिदानीं मृतासूनां लक्षणं संप्रवक्ष्यते ॥ ४ ॥
अरिष्टं नास्ति मरणं दृष्टरिष्टं च जीवितम् ।
अरिष्टे रिष्टविज्ञानं न च रिष्टेऽप्यनैपुणात् ॥ ५ ॥
केचित्तु तद्विधेरयाहुः स्थाय्यस्थायिविभेदतः ।
दोषाणामपि बाहुल्याद्रिष्टाभासः समुद्भवेत् ॥
दोषाणां शमनाच्छाम्येत्स्थाय्यवश्यं तु मृत्यवे ॥ ६ ॥

इति वाग्भटात् ।

अथ भूपसागरात्—

यद्युत्तिष्ठत्यनामा भुवि निहितकरस्योन्नमन्मध्यमस्य
भावो मृत्युः समीपे वपुरपि च भवेद्यस्य वा वस्तगन्धि ।

हुंकारो यस्य शीतो हुतवहसदृशा फूत्कृतिः साऽपि तद्व-
न्नाभिस्थानं गुरुं च म्रियत इह नरः कम्पते यस्य तालु ॥ ७ ॥
अरुन्धतीं विष्णुपदं च गङ्गां ध्रुवं न यः पश्यति मातृबिम्बम् ।
स याति शीघ्रं परलोकयात्रां कर्तुं समुत्सृज्य सुतादिमृत्यम् ॥ ८ ॥
नासाग्रस्थितया कराङ्गुलिकया नो दृश्यते पूर्णमा-
चन्द्रो येन दिनावसानसमये जीवेत्स एकं दिनम् ।
संरक्तोर्ध्वविलोचनो हुतवहस्पर्शोऽलि देहच्छविः
स्थूलोष्ठो दिवसद्वयेन मरणं धत्ते सुधाया अपि ॥ ९ ॥
शोणास्यः समनोभ्रमो हृदयरुग्यः श्यावजिह्वातलो
घूर्णद्घर्घरनिस्वनस्त्रिदिवसान्मृत्योर्वशः स्यान्नरः ।
नासाग्रे रसनाग्रमोष्ठयुगलं पश्येन्न यश्चक्षुषा
मृत्युं याति चतुर्थकेऽह्नि मनुजः पीतामृतोऽपि ध्रुवम् ॥ १० ॥
अम्भःसेकसमीरतोऽपि पुलको नो यस्य पञ्च क्षपा
जीवेत्सोऽथ हृदङ्घ्रिपाणि झटिति स्नातस्य शुष्यत्यपि ।
षष्ठेऽसौ म्रियतेऽङ्गचथो मुनिदिने पश्येद्भ्रुवोरन्तरं
नो यः कर्णयुगं च यस्य चलितं स्वस्थानतः किंचन ॥ ११ ॥
शैत्यं यस्य नि(न)हन्ति चण्डकिरणः संतापकारी शशी
नो वा वेत्ति हिमाहिमेऽष्टमदिने प्राणानसौ मुञ्चति ।
कर्णे दण्डविघाततो न हि भवेद्राजो(गो)निमित्तं विना
बाधिर्यं भवतीह यस्य नवमे घस्रे स गच्छेन्मृतिम् ॥ १२ ॥
आत्मानं सकृदीक्षते विशिरसं तैले जले वा घृते-
ष्वादर्शादिषु वासरे स दशमे लोकान्तरं गच्छति ।
आकृष्टा अपि न स्फुटन्ति च कराङ्गुल्यो यदीयास्तथा
यद्दत्तं बलिमाहरन्ति करटा नास्येशघस्रे मृतिः ॥ १३ ॥
अन्येषां वपुरीक्षते गतशिरोऽकस्माद्विलोमाथ वा
प्राणान्मुञ्चति निश्चितं गदयुतः स द्वादशे वासरे ।
विच्छायः सहसा त्रयोदशदिने स्यान्मृत्युवश्यस्तदा
गच्छेत्पञ्चदशे मृतिं यदि विधुं पश्येत्समस्तासितम् ॥१४॥
यान्तीं व्युत्क्रमतो नदीं च कलयेद्योऽसौ कलावासरे
घस्रे सप्तदशे तु पश्यति तरुं यः शुष्कमार्द्रच्छदम् ।
मर्त्योऽष्टादशके दिने व्यसुरहो बुद्धिर्यदीया निशि
स्याद्व्यत्यासतया तदग्रिमदिने मृत्योर्वशो मानवः ॥ १५ ॥

यस्तारा न समीक्षते स गमयेद्घस्रांस्तथा विंशतिं
पश्येद्व्योम धरामिवैष गमयत्येवैकविंशं दिनान् ।
यः पश्येत्सहसा रविं सविवरं द्वाविंशतिं वासरान्
जीवेत्सोऽथ विलोमगं च कलयेद्घस्रांस्त्रयोविंशतिम् ॥ १६ ॥
यो ह्रस्वः सहसा भवेत्स तु चतुर्यस्रैश्च दीर्घोऽग्रिमे
मृत्युं याति तदग्रिमेषु तु दिनेष्वाराच्छ्वयं वीक्षते ।
धूलीर्दिक्षु समीक्षते दिवि दिवा तारास्तथा विद्युतं
व्यभ्रायां धनुरैन्द्रमस्य मरणं मासे द्वितीये भवेत् ॥ १७ ॥
दीपे नाशमुपागते न लभते गन्धं च संप्रेक्षते
स्वच्छायां गतमस्तकामथ शृणोत्युद्दामघण्टारवम् ।
मासे याति तृतीयके यमपरं लोकं चतुर्थे तु यत्
शीर्षे न्यञ्चति चित्रवर्णशरदा कुर्वन्विचित्रां क्रियाम् ॥ १८ ॥
मार्गे पङ्कयुतेऽथ वा सरजसि स्यात्खण्डितं यत्पदं
मर्त्यः पञ्चममास्ययं मरणतामाप्नोति निःसंशयम् ।
ज्योतिर्यस्य न दीप्यते नयनयोर्द्वन्द्वेऽङ्गुलीपीडिते
षष्ठे मासि विपद्यते स नियतं पीतोऽमृतोऽपि ध्रुवम् ॥ १९ ॥
पीत्वा वारि तृषा न याति सहसा वृद्धिर्वराङ्गे भवे-
द्भुक्तान्नस्य न यस्य तृप्तिरसकृन्मासे व्यसुः सप्तमे ।
यः पश्येद्द्विविधान्हिरण्मयतरून्वन्यान्स मासाष्टकं
सूपं श्यामह्रदं विचित्रमथ वा जीवेत्स मासान्नव ॥ २० ॥
श्यावौ स्तः श्रवणौ करौ सचरणौ नासा च मेढ्रं मुखं
पायुश्च स्फुटमेष जीवति जनः स्वास्थ्येन मासान्दश ॥ २१ ॥

प्रभवति पटुहृष्टः केसरामः कृशानुः
शशधरसमलेखाधारिणीनां ललाटे ।
भवति हि धमनीनां जालवान् भालदेशो
ह्यतिथिरिव स देही मासि चैकादशे स्यात् ॥ २२ ॥
यस्याङ्गादुपयाति फुल्लकुसमस्तोमोपमः प्राणिनो
गन्धः संयति मृत्युरस्य नियतं स्वल्पैर्दिनैः सङ्कृतः ।
वैकृत्यं स्वरवर्णकेशनयनत्वङ्मांसबुद्धीन्द्रिय-
घ्राणेषु प्रपतन्ति यस्य सहसा मन्त्राणि वस्तून्यपि ॥ २३ ॥

---

१ क. °रदः कु°।

यः पश्येत्पतिबिम्बमात्मवपुषश्छिन्नं जलौघेऽथ सो
रोगी जीवति नेति किंचिदुदितं नृणामरिष्टं मया ॥ २४ ॥
इति यूपसागरात् ।

उक्तं च रसमञ्जर्याम्—

अकस्माच्चित्तविकृतिरकस्मात्पुरुषो भवेत् ।
अकस्मादिन्द्रियोत्पत्तिः संनिपातस्य लक्षणम् ॥ २५ ॥
शरीरं शीतलं यस्य प्रकृतेर्विकृतिर्भवेत् ।
तदरिष्टं समासेन व्यासतश्च निबोध मे ॥ २६ ॥
द्विषच्छब्देषु रमते सुहृच्छब्दे प्रकुप्यति ।
पश्चाकस्मान्न शृणोति गतायुषमथं वदेत् ॥ २७ ॥
जीवं विष्णुपदत्रयं सुरपथं सन्मातृकामण्डलं
तारापुञ्जमरुन्धतीसहिमगोः शुक्रं ध्रुवं लाञ्छनम् ।
एतेष्वेकमपि स्फुटं तु पुरुषः पश्येन्न यः प्रेक्षितं
सोऽवश्यं विशतीह कालवदने संवत्सरादूर्ध्वतः ॥ २८ ॥
स्थूलाङ्गोऽपि कृशः कृशोऽपि सहसा स्थूलत्वमालम्बते
श्यामो वा कनकप्रभो यदि भवेद्गौरोऽपि कृष्णच्छविः ।
शूरो भीरुरपीह धर्मनिपुणो शान्तो विकारी पुमा-
नित्येवं प्रकृतेरशान्ति चलनं मासेऽष्टमे मृत्युदम् ॥ २९ ॥

अथ च्छायापुरुषलक्षणम्—

अथातः संप्रवक्ष्यामि छायापुरुषलक्षणम् ।
येन विज्ञातमात्रेण त्रिकालज्ञो भवेन्नरः ॥ ३० ॥
कालो दूरस्थितस्यापि येनोपायेन लक्ष्यते ।
तं वक्ष्यामि समासेन यथोद्दिष्टं शिवागमे ॥ ३१ ॥
एकान्ते विजने गत्वा कृत्वाऽऽदित्यं च पृष्ठतः ।
निरीक्षेत निजां छायां कण्ठदेशे समाहितः ।
ततश्चाऽऽकाशमीक्षेत ततः पश्यति शंकरम् ॥ ३२ ॥
॥ ॐ ह्रीं परब्रह्मणे नमः । इति मन्त्रः ।
अष्टोत्तरशतं जप्त्वा ततः पश्यति शंकरम् ।
शुद्धस्फटिकसंकाशं नानारूपधरं हरम् ॥ ३३ ॥

१ क. °पातामल° । २ क. °रिसहीरुधोर्यस्य । ३ ग. °मं चामठ° ।

षण्मासाभ्यासयोगेन भूचराणां पतिर्भवेत् ।
वर्षद्वयेन हे नाथ कर्ता हर्ता स्वयं प्रभुः ॥ ३४ ॥
त्रिकालज्ञत्वमाप्नोति परमानन्दमेव च ।
सतताभ्यासयोगेन नास्ति किंचन दुर्लभम् ॥ ३५ ॥
तद्रूपं कृष्णवर्णं यः पश्यति व्योम्नि निर्मले ।
षण्मासान्मृत्युमाप्नोति स योगी नात्र संशयः ॥ ३६ ॥
पीते व्याधिर्भयं रक्ते नीले हत्यां विनिर्दिशेत् ।
नानावर्णस्वरूपेऽस्मिन्नुद्वेगो जायते महान् ॥ ३७ ॥
पादे गुल्फे च जठरे विनष्टे मृत्युमाविशेत् ।
अर्धवर्षेण वर्षेण क्रमाद्वर्षद्वयेन च ॥ ३८ ॥
विनष्टे दक्षिणे बाहौ स्वबन्धुर्म्रियते ध्रुवम् ।
वामे बाहौ तथा भार्या विनश्यति न संशयः ॥ ३९ ॥
शिरोदक्षिणबाहुभ्यां विनाशे मृत्युमाविशेत् ।
अशिरा मासमरणं विना जङ्घे दिने नव ।
अष्टभिः कन्धरानाशे छायालुप्ते च तत्क्षणात् ॥ ४० ॥

इति च्छायापुरुषलक्षणम् ।

इति योगतरङ्गिण्यामरिष्टकालज्ञानच्छायापुरुषलक्षणकथनं नाम
चतुश्चत्वारिंशत्तरङ्गः ॥ ४४ ॥

---

अथ पञ्चचत्वारिंशत्तरङ्गः ।

---

## अथ नाडीपरीक्षा—

सद्यः स्नातस्य भुक्तस्य तथा स्नेहावगाहिनः ।
क्षुत्तृषार्तस्य सुप्तस्य नाडी सम्यङ्न बुध्यते ॥ १ ॥
अङ्गुष्ठमूलभागे या धमनी जीवसाक्षिणी ।
तच्चेष्टया सुखं दुःखं ज्ञेयं कायस्य पण्डितैः ॥ २ ॥
स्त्रीणां भिषग्वामहस्ते वामे पादे च यत्नतः ।
शास्त्रेण संप्रदायेन तथा स्वानुभवेन च ॥ ३ ॥
एकाङ्गुलं परित्यज्याधस्तादङ्गुष्ठमूलतः ।
परीक्षेद्यत्नतश्चासावभ्यासादेव जायते ॥ ४ ॥

अग्रे वातवहा नाडी मध्ये वहति पित्तला ।
अन्ते श्लेष्मविकाराऽथ नाडी ज्ञेया बुधैः सदा ॥ ५ ॥
सर्पजलौकादिगतिं धत्ते कुपिते प्रभञ्जने नाडी ।
पित्ते तु काकलावकमण्डूकादेस्तथा चपलाम् ॥ ६ ॥
राजहंसमयूराणां पारावतकपोतयोः ।
कुक्कुटस्य गतिं किं वा नाडी धत्ते कफोल्बणा ॥ ७ ॥
मुहुः सर्पगतिं नाडी मुहुर्भेकगतिं तथा ।
वातपित्तोल्बणा धत्ते दाहपीडासमन्विता ॥ ८ ॥
सर्पहंसगतिं तद्वद्वातश्लेष्मवती वहेत् ।
हरिहंसगतिं धत्ते पित्तश्लेष्मान्विताऽधरा ॥ ९ ॥
काष्ठकुट्टो यथा काष्ठं कुट्टते चातिवेगतः ।
स्थित्वा स्थित्वा तथा नाडी संनिपातेन जायते ॥ १० ॥
स्पन्दते चैकमानेन त्रिंशद्वारं यदाऽधरा ।
स्वस्थानेन तदा नूनं रोगी जीवति नान्यथा ।
स्थित्वा स्थित्वा वहति या सा ज्ञेया प्राणघातिनी॥ ११ ॥
जिह्मं जिह्मं कुटिलकुटिलं व्याकुलं व्याकुलं वा
स्थित्वा स्थित्वा वहति धमनी याति नाशं च सूक्ष्मा ।
नित्यं कण्ठे स्फुरति पुनरप्यङ्गुलीः संस्पृशेद्वा
प्रायैरेवं बहुविधतरैः संनिपातादसाध्या ॥ १२ ॥
पूर्वं पित्तगतिं प्रभञ्जनगतिं श्लेष्माणमाबिभ्रती
स्वस्थानाद्भ्रमणं मुहुर्विदधती चक्राधिरूढेव या ।
भीमत्वं दधती कलापिगतिका सूक्ष्मत्वमातन्वती
नो साध्यां धमनीं वदन्ति विबुधा नाडीगतिज्ञानिनः॥१३॥
गम्भीरा या भवेन्नाडी तां वदेन्मांसवाहिनीम् ।
ज्वरवेगेण धमनी सोष्णा वेगवती भवेत् ॥ १४ ॥
कामक्रोधाद्वेगवहा क्षीणा चिन्ताभयप्लुता ।
मन्दाग्नेः क्षीणधातोश्च नाडी मन्दतरा मता ॥ १५ ॥
असृक्पूर्णा भवेत्कोष्णा सामा गुर्वी गरीयसी ।
लघ्वी वहति दीप्ताग्नेस्तथा वेगवती मता ॥ १६ ॥

१ ग. °सेन का° । २ क. °नी । मन्दं मन्दं कु° । ३ क. दक्षचे । ४ क. कदाचिदपि वा मू° । ५ ग. °र्वी धरा भवेद् । रु° ।

चपला क्षुधितस्यापि तृप्तस्य वहति स्थिरा ।
शीघ्रा नाडी मलापाते दिनार्धेऽग्निसमो ज्वरः ॥ १७ ॥
दिनैकं जीवितं तस्य द्वितीये म्रियते ध्रुवम् ।
मृत्युकाले भवेन्नाडी शीर्णा डमरुकोपमा ॥ १८ ॥

इति योगतरङ्गिण्यां नाडीपरीक्षाकथनं नाम पञ्चचत्वारिंशस्तरङ्गः ॥ ४५ ॥

---

अथ षट्चत्वारिंशस्तरङ्गः ।

---

## अथ जिह्वापरीक्षा—

पीता जिह्वा खरस्पर्शा स्फुटिता मारुतेऽधिके ।
रक्ता श्यामा भवेत्पित्ते कफे शुभ्राऽतिपिच्छला ॥ १ ॥
कृष्णा सकण्टका शुष्का संनिपाताधिके तु सा ।
मिश्रिते मिश्रिता ज्ञेयाऽरिष्टे लक्षणवर्जिता ॥ २ ॥

इति योगतरङ्गिण्यां जिह्वापरीक्षाकथनं नाम षट्चत्वारिंशस्तरङ्गः ॥ ४६ ॥

---

अथ सप्तचत्वारिंशस्तरङ्गः ।

---

## अथ स्वप्नाः—

शुभाशुभं भाविफलं ब्रूते स्वप्नो नृणां यतः ।
अतस्तदिह विज्ञातुं साभिस्वप्नं ब्रवीम्यहम् ॥ १ ॥
स्वप्नास्तु प्रथमे यामे संवत्सरविपाकिनः ।
षड्भिर्मासैर्द्वितीये तु त्रिभिर्मासैस्तृतीयके ॥ २ ॥
चतुर्थे प्रहरे स्वप्नो मासैकेन फलप्रदः ।
अरुणोदयवेलायां दशाहेन फलं भवेत् ॥ ३ ॥
आरोहणं गोवृषकुञ्जराणां प्रासादशैलाग्रवनस्पतीनाम् ।
विष्ठानुलेपो रुदितं मृतं च स्वप्नेष्वगम्यागमनं च धन्यम् ॥ ४ ॥

---

१ ग श्यामाऽधिके पित्ते पीता वृद्धे कफे सिताक् । २ घ. मिश्रके मिश्रदोषा साऽरि° ।
३ घ. °तुं स्वाभिस्व° । ४ ख. गोहयकु° ।

स्वप्नेषु वीक्षते यस्तु राजानं कुञ्जरं हयम् ।
सुवर्णं वृषभं गां च कुटुम्बं तस्य वर्धते ॥ ५ ॥
प्रासादाग्रेऽन्नमश्नाति यो वा तरति सागरम् ।
अपि दासकुले जातः स राजा नियतं भवेत् ॥ ६ ॥
दीपं वा फलितं वृक्षं कन्यां चक्रं ध्वजं रथम् ।
लभते यः पुमान्स्वप्ने राज्यं तस्य विनिर्दिशेत् ॥ ७ ॥
मानुषस्य तु मांसानि यस्तु स्वप्नेषु भक्षयेत् ।
अपक्वान्येव सर्वाणि शृणु तस्य तु यत्फलम् ॥ ८ ॥
पदे पञ्चशतीलाभः सहस्रं दक्षिणे भुजे ।
मस्तकाशनतो राज्यं मन्त्रितां हृदयाशनात् ॥ ९ ॥
उपानहौ ध्वजं चक्रं लब्ध्वा यः प्रतिबुध्यते ।
असिं वा निर्मलं तीक्ष्णमध्वाने तस्य निर्दिशेत् ॥ १० ॥
नावमारुह्य यः स्वप्ने नदीं तु विपुलां तरेत् ।
प्रवासं निर्दिशेत्तस्य शीघ्रमागमनं पुनः ॥ ११ ॥
दन्ता यस्य विशीर्यन्ते केशा यस्य पतन्ति च ।
धननाशो भवेत्तस्य व्याधिपीडाऽथवा संशयम् ॥ १२ ॥
अभिद्रवन्ति यं स्वप्ने शृङ्गिणो दंष्ट्रिणोऽथवा ।
वानरो वा वराहो वा तस्य राजकुलाद्भयम् ॥ १३ ॥
स्वप्नेऽभ्यक्तस्तु रजसा तैलेन च घृतेन च ।
मेदेन वा तथाऽन्येन व्याधिं तस्य विनिर्दिशेत् ॥ १४ ॥
रक्ताम्बरधरा नारी रक्तगन्धानुलेपना ।
अवगूहति यं स्वप्ने कल्याणं तस्य निर्दिशेत् ॥ १५ ॥
कृष्णाम्बरधरा नारी कृष्णगन्धानुलेपना ।
अवगूहति यं स्वप्ने कल्याणं तस्य निर्दिशेत् ॥ १६ ॥
पीताम्बरधरा नारी पीतगन्धानुलेपना ।
अवगूहति यं स्वप्ने तस्य मृत्युं विनिर्दिशेत् ॥ १७ ॥
श्वेताम्बरधरा नारी श्वेतमाल्योपशोभिता ।
अवगूहति यं स्वप्ने तस्य श्रीः सर्वतोमुखी ॥ १८ ॥
वपनं च विवाहं च स्वप्नान्ते यस्तु पश्यति ।
स्वगृहे नर्तनं चैव मृत्युं तस्य विनिर्दिशेत् ॥ १९ ॥
आदित्यमण्डलं स्वप्ने चन्द्रं वा यदि पश्यति ।
व्याधि[illegible] स्वस्थस्तु श्रियमाप्नुयात् ॥ २० ॥

यस्तु श्वेतेन सर्पेण दश्यते दक्षिणे भुजे ।
द्रव्यलाभो भवेत्तस्य संपूर्णो दशमे दिने ॥ २१ ॥
निगडैर्बध्यते यस्तु पाशैर्वा बध्यते भृशम् ।
सुपुत्रो जायते तस्य प्रतिष्ठां च स विन्दति ॥ २२ ॥
रक्तं पिबति यः स्वप्ने सुरां वाऽपि कथंचन ।
ब्राह्मणो लभते विद्यामितरस्तु धनं बहु ॥ २३ ॥
क्षीरं पिबति यः स्वप्ने सफेनं दोहनीकृतम् ।
अहोभिर्दशभिश्चैव प्राप्नोत्यर्थं न संशयः ॥ २४ ॥
नवोदकं पयःपानं धनलाभकरं परम् ।
श्वेतमाल्याम्बरं छत्रं चन्दनं च धनप्रदम् ॥ २५ ॥
आसने शयने याने शरीरे वाहने गृहे ।
ज्वलमाने विबुध्येत तस्य श्रीः सर्वतोमुखी ॥ २६ ॥
यस्तु मध्ये तडागस्य भक्षयेद्दधिपायसम् ।
निषण्णः पौष्करे पत्रे स भवेद्धरणीधवः ॥ २७ ॥
रक्तं देहात्स्रवेद्यस्य यः स्नायाद्रुधिरेण वा ।
शिरो वा छिद्यते यस्य तस्य राज्यं विनिर्दिशेत् ॥ २८ ॥
खरोष्ट्रमाहिषं यानमेकाकी योऽधिरोहति ।
तत्रस्थः प्रतिबुध्येत मरणं तस्य निर्दिशेत् ॥ २९ ॥

तथोक्तं शार्ङ्गधरे—

स्वप्नेषु नग्नान्मुण्डांश्च रक्तकृष्णाम्बरावृतान् ।
व्यङ्गांश्च विकृतान्कृष्णान्सपाशान्सायुधानपि ॥ ३० ॥
बध्नतो निघ्नतश्चापि दक्षिणां दिशमाश्रितान् ।
महिषोष्ट्रखरारूढान् स्त्रीपुंसौ यस्तु पश्यति ॥ ३१ ॥
स स्वस्थो लभते व्याधिं रोगी यात्येव पञ्चताम् ।
अधो यो निपतत्युच्चाज्जलेऽग्नौ वा विलीयते ॥ ३२ ॥
श्वापदैर्हन्यते योऽपि मत्स्याद्यैर्गिलितो भवेत् ।
यस्य नेत्रे विलीयेते दीपो निर्वाणतां व्रजेत् ॥ ३३ ॥
तैलं सुरां पिबेद्वाऽपि लोहं वा लभते तिलान् ।
पक्वान्नं लभते प्राप्ति विशेत्कूपं च मानवः ॥ ३४ ॥

१ ग. °ति । घृतं पि°। २ क. °तो विम°।

स स्वस्थो लभते रोगं रोगी यात्येव पञ्चताम् ।
दुःस्वप्नान्येवमादीनि दृष्ट्वा ब्रूयान्न कस्यचित् ॥ ३५ ॥
स्नानं कुर्यादुषस्येव दद्याद्धेमतिलांस्तथा ।
पठेत्स्तोत्राणि देवानां रात्रौ देवालये स्वपेत् ॥ ३६ ॥
कृत्वैवं त्रिदिनं मर्त्यो दुःस्वप्नात्परिमुच्यते ।
स्वप्नेषु यः सुरान्भूपाञ्जीवतः सुहृदो द्विजान् ॥ ३७ ॥
गोसमिद्धाग्नितीर्थानि पश्यन्सुखमवाप्नुयात् ।
तीर्त्वा कलुषनीराणि जित्वा शत्रुगणानपि ॥ ३८ ॥
आरुह्य सौधगोशैलकरियाहान्सुखी भवेत् ।
शुभ्रपुष्पाणि वासांसि मांसमत्स्यफलान्यपि ॥ ३९ ॥
प्राप्य रोगी सुखी भूयात्स्वस्थो धनमवाप्नुयात् ।
अगम्यागमनं लेपो विष्ठया रुदितं मृतिः ॥ ४० ॥
आममांसाशनं स्वप्ने धनारोग्याप्तये विदुः ।
जलौका भ्रमरी सर्पो मक्षिका चापि यं दशेत् ॥
रोगी स भूयादारोग्यः स्वस्थो धनमवाप्नुयात् ॥ ४१ ॥
इति योगतरङ्गिण्यां स्वप्नकथनं नाम सप्तचत्वारिंशत्तरङ्गः ॥ ४७ ॥

---

अथाष्टचत्वारिंशत्तरङ्गः ।

---

## अथ दूतविज्ञानीयम्—

दूरादेव यथा वह्निर्धूमाद्विज्ञायते जनैः ।
साध्योऽसाध्यस्तथा रोगी ज्ञायते दूतचेष्टया ॥ १ ॥
स्वज्ञातिः श्वेतवस्त्रो द्रविणयुतकरः क्षत्रियो ब्राह्मणो वा
ताम्बूलास्यः सुशीलः शुभवचनवदः स्यात्प्रशस्तोऽत्र दूतः ॥
शस्ता योषिन्न दूत्ये न च जनयुगुलं नाङ्गहीनो न रोगी
शोकार्तो वा रुदन्वा नतहतपतितभ्रष्टशब्दान्ब्रुवाणः ॥ २ ॥
आगत्योपाश्रयेद्यो बलमथनदिशं पश्चिमामुत्तरां वा
शंभोः काष्ठां स शस्तः परदिशि न तुपाङ्गारभस्मादिसंस्थाः ।
रक्तस्रग्गन्धवस्त्रास्तृणलगुडदलच्छेदिनः पङ्कतैलाभ्यक्ता
वक्षोजनासालकनिहितकरा ये च विक्षिप्तकेशाः ॥ ३ ॥

---

१ ग. °नदः ।

तथोक्तं रसमञ्जर्याम्—

दूतो रक्तकषायकृष्णवसनो दण्डी जटी मुण्डित-
स्तैलाभ्यक्तवपुर्भयंकरवचा दीनोऽश्रुपूर्णेक्षणः ।
भस्माङ्गारकपालपांशुमुशलीसूर्येऽस्तगे व्याकुलो
यः शून्यस्वरसंस्थितो गदवतो दूतस्तु कालानलः ॥ ४ ॥
याम्यां दिशि भाञ्जलयो विषमैकपदस्थिताः ।
ये वैद्यमुपसर्पन्ति दूतास्ते स्युर्विगर्हिताः ॥ ५ ॥

ऋतुहरनयनकराब्धिमुनिरसवेदाग्निचन्द्रदिग्दुर्गाः ।

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| जीवन | ६ | ३ | २ | ४ | ७ | ६ | ४ | ३ | १ | १० | ९ |
| मरण. | अँ | आ | इ | ई | उ | ऊ | ए | ऐ | ओ | औ | अं |
| प्रश्ननि- | क | ख | ग | घ | ङ | च | छ | ज | झ | ञ | ट |
| र्णयचक्रम् | ठ | ड | ढ | ण | त | थ | द | ध | न | प | फ |
| | ब | म | म | य | र | ल | व | श | ष | स | ह |

विन्यस्याधो विलिखेदादीन्हान्तांस्तथा वर्णान् ॥ ६ ॥
खण्डान्त्यस्वरवर्जानथ कृत्वाऽचो हलश्च पृथक् ।
दूतातुरयोर्नाम्नोर्वसुभिः संशोधितासु संख्यासु ।
जीवत्यधिके रोगी म्रियते हीने समे व्याधिः ॥ ७ ॥

दूतनामाक्षरसंख्याया रोगिनामाक्षरसंख्यायामधिकायां रोगी जीवति हीनायां म्रियते समायां व्याधिश्चिरं तिष्ठतीति विवेकः ।

अत्रोदाहरणम्—

देवदत्तस्य रुग्णस्य नामाक्षराङ्काः ४८ अष्टभागशेषः । यज्ञदत्तनामाक्षराङ्काः ५९ अष्टभागशेषः । एवमत्र देवदत्तस्य मरणं निर्दिशेत् ।

दूतास्योदितवर्णवृन्दमखिलं द्वेधा विधाय त्रिभि-

१ क. °भिः भाज्या व्यो° ।

भंक्त्वा व्योमानि मृत्युमाशु विषवैद्यन्यत्र संजीवनम् ॥ ८ ॥

इति योगतरङ्गिण्यां दूतलक्षणं नामाष्टचत्वारिंशस्तरङ्गः ॥ ४८ ॥

---

अथ नवचत्वारिंशस्तरङ्गः ।

---

## अथ शकुनाः—

साध्यासाध्यत्वमाख्यान्ति शकुनास्तु शुभाशुभाः ।
अतोऽभिधास्ये शकुनांस्तद्विज्ञातुं रुजावताम् ॥ १ ॥

याने मातङ्गविप्रास्तुरगवृषफलच्छत्रमांसोदकुम्भा
योषित्पुत्रान्विता वा सुरभिरपि तथा खञ्जरीटा मयूराः ।
वीणाभेरीमृदङ्गाम्बुजपटहरवा वेदमाङ्गल्यघोषा-
श्चापाः सिद्धान्नभूमृत्कुसुमपुरवधूचन्दनाद्याः प्रशस्ताः ॥ २ ॥

एणः काकोऽपसव्ये शुभ इह कथितः सव्यतः सारमेय-
श्चक्रीवानाखुबभ्रूशफरिदधिपयोरूप्यगोमायुमेषाः ।
प्रेतो नीरोदनश्च ज्वलदनलशिखा श्वेतवस्त्रो ध्वजो वा
चित्ते शस्तेऽत्र सिद्धिः प्रभवति भिषजो नान्यथा किं बहूक्तैः ॥ ३ ॥

### तथा चोक्तं शार्ङ्गधरे—

चिकित्सां रोगिणः कर्तुं गच्छतो भिषजः शुभम् ।
यात्रेयं सौम्यशकुनं प्रोक्तं दीप्तं न शोभनम् ॥ ४ ॥
वैद्याह्वानाय दूतस्य गच्छतो रोगिणः कृते ।
न शुभं सौम्यशकुनं प्रदीप्तं च सुखावहम् ॥ ५ ॥
दिक्षु शान्तासु वक्तारो मधुरं पृष्ठतोऽनुगाः ।
वामगा दक्षिणा वाऽपि शकुनाः कर्मसिद्धिदाः ॥ ६ ॥
पुरतो दिक्षु दीप्तासु वक्तारो नात्र साधकाः ।
दग्धादिग्दिनकृद्यक्ता धूमिकायां स यास्यति ॥ ७ ॥
दीप्ता प्रत्रास्तप्रसौ शेषाः पञ्च शान्ताः शुभा दिशः ।

---

१ क. 'वोऽपि स' । २ क. च ।

प्रभाते दग्धमीशाना दिग्दीप्तिर्धूमितानना ।
प्रत्येकमष्टप्रहरैर्भुङ्क्तेऽष्टौ भास्करो दिशः ॥ ८ ॥

इति योगतरङ्गिण्यां शकुनविचारो नामैकोनपञ्चाशत्तरङ्गः ४९ ॥

---

अथ पञ्चाशत्तरङ्गः ।

---

## अथ वर्णस्वरविचारः—

वर्णाङ्कात्मनि मण्डले अइउएओकादिवर्णाल्लिँखे-
त्त्यक्त्वा ङञणं शमप्यथ तिथीन् सर्वांश्च पङ्क्तिक्रमात् ॥
अर्कग्लौगुरुशुक्रसौरिकुजविच्छून्यान्यथाधः क्रमा-
त्पौष्णादीन्यपि सप्तमानि च पुरावत्पञ्च पञ्चाग्रतः ॥ १ ॥
आख्यायाः प्रथमाक्षरं भवति यत्कोष्ठे ततः कोष्ठको
बालाख्यश्च कुमारकोऽप्यथ युवा वृद्धो मृतश्च क्रमात् ॥
भं वारश्च तिथिस्वरा भवति चेदेतन्मृताख्यं तदा
मृत्युर्निश्चयतोऽन्यथा सकृदिति प्रोक्तो नृणां निश्चयः ॥२॥

## उक्तं च सुधासागरे—

किंचिल्लाभकरो बालः कुमारस्त्वर्धलाभकृत् ।
सर्वसिद्धिं युवा दत्ते वृद्धो हानिं मृतो मृतिम् ॥ ३ ॥
अस्वरो मेषसिंहालिरिः कन्याद्वन्द्वकर्कटाः ।
उस्वरो मीनधनुषी एस्वरस्तु तुलावृषौ ॥ ४ ॥
ओस्वरो मृगकुम्भौ च राशीनां च ग्रहस्वराः ।

एतैर्मासा अपि ज्ञेयाः—

यत्र मृतमासे मृततिथिर्मृतनक्षत्रं मृतवारश्च । तत्रावश्यं मृत्युरन्यत्र कदाचिदिति गुरुसंकेतः ।

आर्द्रादिमृगपर्यन्तं मध्ये मूलं प्रतिष्ठितम् ॥ ५ ॥
चन्द्रार्कजन्मनक्षत्रमेकनाड्यां यदा भवेत् ।
तदा मृत्युर्भवत्येव तत्र सत्यं न संशयः ॥ ६ ॥

| | | | | | |
|---|---|---|---|---|---|
| *भी | च | क्रं | ५ | ५ | आ० पु० पु० |
| अ | इ | उ | ए | ओ | पू० भ० आ० |
| क | ख | ग | घ | च | उ० ह० चि० |
| छ | ज | झ | ट | ठ | |
| ड | ढ | त | थ | द | अ० वि० स्वा० |
| ध | न | प | फ | ब | ज्ये० मू० पू० |
| भ | म | य | र | ल | |
| व | ष | स | ह | १ | ध० श० उ० |
| २ | ३ | ४ | ५ | ६ | |
| ७ | ८ | ९ | १० | ११ | रे० पु० उ० |
| १२ | १३ | १४ | १५ | रवि | |
| च० | बृ० | शु० | श० | मं | |
| बु० | ० | ० | ० | रे० | म० अ० र० |
| पु० | उ० | उ | श्र० | अ० | |
| श्र० | अ० | पु० | ह० | ज्ये० | कृ० रो० मृ० |
| ध० | भ० | अ० | चि० | मू० | |
| श० | कृ० | म० | स्वा. | पू० | |
| उ० | रो० | पु० | वि० | उ० | |
| ऊ० | मृ० | आ० | ० | ० | |

इति योगतरङ्गिण्यां स्वरविचारो नाम पञ्चाश-
त्तरङ्गः ॥ ५० ॥

---

अथैकपञ्चाशत्तरङ्गः ।

---

## अथ मूत्रपरीक्षा—

घाटामाद्यां विहायोपसि विमलतमे भाजने रोगिजन्तो-
र्ध्वं(धृ)त्वाऽतिस्थैर्ययुक्तं भिषगतिनिपुणः संपरीक्षेत मूत्रम् ।
बिन्दुं तैलस्य दत्त्वा तदुपरि वितते तत्र साध्योऽथ कृच्छ्रा-
त्साध्यः पिण्डायमाने तदनु तलगते स्याच्च सिद्धोऽप्यसाध्यः॥१॥

---

* इदं कोष्टकं ग. पुस्तकस्थम् ।

नीलं रूक्षं सितं वा प्रभवति कुपिते मारुते चाथ पित्ते
पीतं तैलप्रभं वाऽरुणमथ कफतः स्निग्धशुभ्रं घनं च ।
उष्णस्निग्धं सरक्तं भवति रुधिरतश्चाथ सामेऽम्बुकल्पं
सौवीराभं निरामे विमलमतिसितं ज्ञेयमह्नाय मूत्रम् ॥ २ ॥
द्वंद्वे तद्वद्द्विवर्णं भवति बहुविधं संनिपातात्प्रवृद्धा-
दन्नाजीर्णाच्च मूत्रं भवति बहुतरं तण्डुलाम्भःसदृक्षम् ।
बिन्दुस्तैलस्य मूत्रे प्रसरति च यदा दिक्षु साध्यो विदिक्षु
स्यान्नो साध्यो मनुष्यो भ्रमति तरति वा मज्जति भ्रंशते च ॥ ३ ॥
शस्त्रं खड्गं शरं वा लगुडमपि हलं सैरिभं गात्रखण्डं
कूर्मं निर्मूर्धमृत्युं मुसलमपि चतुर्मार्गकं चानुकुर्यात् ।
मूत्रे तैलं न जीवेदिह यदि मनुजश्चाथ जीवेत्सुधांशु-
हंसेभच्छत्रहर्म्यं सरसिरुहसरस्तोरणं चामरे वा ॥ ४ ॥
इति मूत्रपरीक्षा ।

इति श्रीयोगतरङ्गिण्यां मूत्रपरीक्षानामैकपञ्चाशत्तरङ्गः ॥ ५१ ॥

---

अथ द्विपञ्चाशत्तरङ्गः ।

---

## अथ मलपरीक्षा—

बद्धं श्यामं मरुति कुपिते पित्तकोपे तु पीतं
पानीयाभं सफेनं सरुपि कफमले सान्द्रमापाण्डुरं च ।
रक्ते क्रुद्धे सरक्तं जलनिभमथ तद्द्वंद्वकोपे द्विलिङ्गं
सर्वैर्दोषैः सरोषैर्भवति किल मलं रोगिणः सर्वलिङ्गम् ॥ १ ॥
दुर्गन्धि श्यामवर्णं मलमरुणनिभं पाण्डुराभं विचित्रं
मांसाभं मेचकं तत्प्रभवति मरणायैव रोगान्वितस्य ॥
विस्रं शैथिल्ययुक्तं मुहुरपि च मुहुर्निःपतत्स्यादजीर्णा-
द्वर्चो दिङ्मात्रमेतन्निगदितमगदैर्लक्षणं वर्चसोऽपि ॥ २ ॥

इति श्रीयोगतरङ्गिण्यां मलपरीक्षा नाम द्विपञ्चाश-
त्तरङ्गः ॥ ५२ ॥

---

अथ त्रिपञ्चाशत्तरङ्गः ।

---

अथ दृष्टिपरीक्षा—

रूक्षं धूमाभमन्तर्ज्वलदनिलरुचि स्याद्धलं चक्षुरुग्रं
पित्तात्पीते हरिद्रानिभमरुणनिभं दीपयेद्वापि दाहि ।
श्वेते साश्रावि तेजोरहितमपि कफाद्द्वंद्वकोपे द्विलिङ्गं
निर्मग्नं रक्तवर्णं कलुषमसितमं भीषणं संनिपातात् ॥ १ ॥
एकं रौद्रं च मुग्नं विकसितमपरं मीलितं यस्य चक्षु-
स्तारा वा यस्य पश्येन्न किमपि कुटिलं चोर्ध्वगं यस्य वा स्यात् ।
रौद्रं यः प्रेक्षते वा भ्रमयुतमथ वा कम्पयुक्तारका वा
दृष्टिर्यस्यात्र साध्यो न भवति हि मनुजो रोगयुक्तः कदाचित् ॥२॥

इति श्रीयोगतरङ्गिण्यां दृष्टिपरीक्षा नाम त्रयोदशस्तरङ्गः ।

---

अथ चतुर्दशस्तरङ्गः ।

---

अथ असाध्यव्याधिनिरूपकः—

निद्रानाशो निशायां प्रभवति च तथा कण्ठकूपे बलासो
देहे दाहोऽतिसूक्ष्मा लघुरथ धमनी प्रस्खलन्ती च जिह्वा ।
क्षीयन्ते यस्य शीघ्रं बलदहनमनःशक्तयः सेन्द्रियाङ्गा-
स्तद्भैषज्यं वदन्ति स्मरणमिह बुधाः केवलं रामनाम्नाम् ॥
ये यत्राः ( पित्र्याः ) कर्मजा ये चिरसमयभवा ये च ये सर्वदोषा
ये वा सोपद्रवा ये बहुदुरितवतो ये च मन्दाग्निभाजः ॥
येऽत्युग्रा ये सदोषादपि च निजकृतात्कर्मणः कायचेतः-
संजाता ये च येऽतिद्रुतबलरुचयस्तेऽप्यसाध्या गदाः स्युः ॥
रक्ताक्षो हृष्टरोमा श्वसिति च हृदयं ग्रन्थिशूली च यः स्या-
न्मूढो विभ्रान्तनेत्रो म्रियत इह नरः क्षिण्यहिक्कातृषावान् ।
संक्षिप्ते यद्भ्रुवौ स्तः शिरसि कचचया यस्य सीमन्तवन्तो
यो रोगी दैर्घ्यरात्रः स्वपिति च दवथुस्वेदरोमाश्रुयुक्तः ॥ ३ ॥
यः स्वप्ने प्रेतयुक्तः पिबति च मदिरां यः खरोष्ट्राधिरूढो
तैलाभ्यक्तो यमाशामनुचलति च यो यान्त्यमी प्रेतभावम् ।
यो लुञ्चेत्केशसंघानपि च नखमुखान्याशु खादेद्द्विजाग्रैः
श्यामैर्विभ्रान्तनेत्रस्खलिततमवचाः क्षिप्रमाप्नोति मृत्युम् ॥ ४ ॥

---

१ क. °पे चला° ।

उरगशतभिषार्द्रास्वातिमूलत्रिपूर्वा-
मरणिषु किल वारे भानुभौमार्कजानाम् ।
प्रतिपदि च चतुर्थीद्वादशीषष्ठिकासु
द्रुहिणहरिहरोक्तो रोगिणां मृत्युकालः ॥ ५ ॥
स्वात्याश्लेषारौद्रपूर्वासु शाक्रे रोगोत्पत्तिर्जायते यस्य पुंसः ।
तद्भैषज्यव्यापृतो निष्प्रयत्नः स्याद्दुग्धाब्धेर्लब्धजन्माऽपि वैद्यः ॥ ६ ॥
इति श्री योगतरङ्गिण्यां ससाध्यव्याधिनिरूपकश्चतुष्पञ्चाशत्तरङ्गः ॥ ५४ ॥

---

अथ पथ्यपथ्यादितरङ्गः ।

---

अथ भैषज्यग्रहणविधिः—

मैत्रादित्रितये श्रुतौ च वसुभे स्वात्यश्विनीरेवती-
पुष्ये वाऽपि पुनर्वसावथ तिथौ रिक्ताकुहूवर्जिते ।
वारे भार्गवजीवशीतमहसां स्वस्येन्दुताराबले
वैद्यस्यापि च भेषजं बहुगुणं संशीलयेद्बुद्धिमान् ॥ १ ॥

अथ भैषज्यग्रहणे मङ्गलं यथा—

ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः ।
ऋषयः सौषधिग्रामा भूतसंघाश्च पान्तु वः ॥ २ ॥
रसायनमिवर्षीणां त्रिदशानामिवामृतम् ।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥ ३ ॥
अच्युतानन्तगोविन्दनामोच्चारणभेषजात् ।
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥ ४ ॥

अथ भैषज्यकालाः—

भैषज्यमभ्यवहरेत्प्रभाते प्रायशो बुधः ।
कषायांश्च विशेषेण तत्र भेदस्तु दर्शितः ॥ ५ ॥
ज्ञेयः पञ्चविधः कालो भैषज्यग्रहणे नृणाम् ।
किंचित्सूर्योदये जाते तथा दिवसभोजने ॥ ६ ॥
सायंतने भोजने च मुहुश्चापि तथा निशि ।
प्रायः पित्तकफोद्रेके विरेकवमनार्थयोः ॥ ७ ॥

---

१ क. °पथ्यान्याबृ° ।

लेखनार्थं च भेषज्यं प्रभातेऽनन्तमाहरेत् ।
एवं स्यात्प्रथमः कालो भैषज्यग्रहणे नृणाम् ॥ ८ ॥

इति प्रथमः कालः ।

अथ द्वितीयः कालः—

भैषज्यं विगुणेऽपाने भोजनाग्रे प्रशस्यते ।
अरुचौ चित्रभोज्यैश्च मिश्रं रुचिरमाहरेत् ॥ ९ ॥
समानवाते विगुणे मन्देऽग्नावग्निदीपनम् ।
दद्याद्भोजनमध्ये तु भैषज्यं कुशलो भिषक् ॥ १० ॥
व्यानकोपे तु भैषज्यं भोजनान्ते समाहरेत् ।
हिक्काक्षेपककम्पेषु पूर्वमन्ते च भोजनात् ॥ ११ ॥
एवं द्वितीयः कालश्च प्रोक्तो भैषज्यकर्मणि ।

इति द्वितीयः कालः ।

अथ तृतीयः कालः—

उदाने कुपिते वाते स्वरभङ्गादिकारिणि ॥ १२ ॥
ग्रासग्रासान्तरे देयं भैषज्यं सांध्यभोजने ।
प्राणे प्रदुष्टे सांध्यस्य भुक्तस्यान्ते च दीयते ॥ १३ ॥
औषधं प्रायशो धीरैः कालोऽयं स्यात्तृतीयकः ।

इति तृतीयः कालः ।

अथ चतुर्थः कालः—

मुहुर्मुहुश्च तृट्छर्दिहिक्काश्वासगरेषु च ॥ १४ ॥
सान्नं तु भेषजं दद्यादिति कालश्चतुर्थकः ।

इति चतुर्थः कालः ।

अथ पञ्चमः कालः—

ऊर्ध्वजत्रुविकारेषु लेखनं बृंहणं तथा ॥ १५ ॥
पाचनं शमनं देयं तदन्नं भेषजं निशि ।
इत्येवं पञ्चमः कालः प्रोक्तो भैषज्यकर्मणि ॥ १६ ॥

इति पञ्चमः कालः ।

---

१ ख. °खने बृहणे त° । २ क. °चने शमने देयमनर्नं ।

## अथ मात्राः—

कर्षश्चूर्णस्य कल्कस्य गुटिकानां च सर्वशः ।
द्रवशुक्तपाऽवलेढव्यः पातव्यश्च चतुर्द्रवः ॥ १७ ॥
गुडस्तुल्यश्चूर्णे प्रभवति सिता च द्विगुणिता
समीरादौ द्वित्रे च पलमनुपानं क्रमगतम् ।
मितिः कर्षो हिङ्गुप्रथितमिह भृष्टं प्लुतमिदं
भवेद्यावत्तावत्तदुचितरसैर्माज्यममलैः ॥ १८ ॥
पक्त्वा क्वाथपलं हि षोडशपले तोयेऽष्टशेषं पिबे-
त्तद्वार्धाष्टकलांशगामिह सितां दोषेषु मध्वन्यथा ।
चूर्णं क्षीरगुडाज्यकल्कतिलजान्मूत्राच्च कर्षं क्षिपे-
त्क्षारव्योषशिलाजहिङ्गुलवणाजाजीमुरा टङ्कणम् ॥ १९ ॥
तैलमद्यघृतादीनां मात्रा तु द्विपलोत्तमा ।
चतुष्कर्षा मध्यमा स्याद्धीना कर्षद्वयात्मिका ॥ २० ॥
देयं स्थूलशरीराणां वयःस्थानां तु मात्रया ।
बालस्य प्रथमे मासि देया भेषजरक्तिका ॥ २१ ॥
अवलेहीकृतैकैव क्षीरक्षौद्रसिताघृतैः ।
वर्धयेत्तावदेकैकां यावद्भवति वत्सरम् ॥ २२ ॥
माषवृद्धिस्तदूर्ध्वं स्याद्यावत्षोडश वत्सराः ।
ततः स्थिरा भवेत्तावद्यावद्वर्षाणि सप्ततिः ॥ २३ ॥
ततो बालकवन्मात्रा ह्रासनीया शनैः शनैः ।
मात्रेयं कल्कचूर्णानां कषायाणां चतुर्गुणा ॥ २४ ॥
मितिर्नास्त्येव मात्रायाः कालमग्निबलं वयः ।
प्रकृतिं देशदोषौ च वीक्ष्य मात्रां प्रकल्पयेत् ॥ २५ ॥
तत्तद्रोगाधिकारे तु तत्तन्मात्राः पृथक्पृथक् ।
विविच्य कथयिष्यामि पुरस्तादस्तसंशयम् ॥ २६ ॥

इति योगतरङ्गिण्यां भैषज्यग्रहणमुहूर्तमङ्गलपञ्चकालमात्राकथनं
नाम पञ्चपञ्चाशस्तरङ्गः ॥ ५५ ॥

---

१ क. 'ष्टांशक'।

छेखनार्थं च भेषज्यं प्रभातेऽनन्नमाहरेत् ।
एवं स्यात्प्रथमः कालो भैषज्यग्रहणे नृणाम् ॥ ८ ॥

इति प्रथमः कालः ।

अथ द्वितीयः कालः—

भैषज्यं विगुणेऽपाने भोजनाग्रे प्रशस्यते ।
अरुचौ चित्रभोज्यैश्च मिश्रं रुचिरमाहरेत् ॥ ९ ॥
समानवाते विगुणे मन्देऽग्नावग्निदीपनम् ।
दद्याद्भोजनमध्ये तु भैषज्यं कुशलो भिषक् ॥ १० ॥
व्यानकोपे तु भैषज्यं भोजनान्ते समाहरेत् ।
हिक्काक्षेपककम्पेषु पूर्वमन्ते च भोजनात् ॥ ११ ॥
एवं द्वितीयः कालश्च प्रोक्तो भेषज्यकर्मणि ।

इति द्वितीयः कालः ।

अथ तृतीयः कालः—

उदाने कुपिते वाते स्वरभङ्गादिकारिणि ॥ १२ ॥
ग्रासग्रासान्तरे देयं भैषज्यं सान्ध्यभोजने ।
प्राणे प्रदुष्टे सान्ध्यस्य भुक्तस्यान्ते च दीयते ॥ १३ ॥
औषधं प्रायशो धीरैः कालोऽयं स्यात्तृतीयकः ।

इति तृतीयः कालः ।

अथ चतुर्थः कालः—

मुहुर्मुहुश्च तृट्छर्दिहिक्काश्वासगरेषु च ॥ १४ ॥
सान्नं तु भेषजं दद्यादिति कालश्चतुर्थकः ।

इति चतुर्थः कालः ।

अथ पञ्चमः कालः—

ऊर्ध्वजत्रुविकारेषु लेखनं बृंहणं तथा ॥ १५ ॥
पाचनं शमनं देयं तदन्नं भेषजं निशि ।
इत्येवं पञ्चमः कालः प्रोक्तो भैषज्यकर्मणि ॥ १६ ॥

इति पञ्चमः कालः ।

---

१ ख. °वने बृंहणे त°। २ क. °नने शमने देयमनन्नं ।

## अथ मात्राः—

कर्षश्चूर्णस्य कल्कस्य गुटिकानां च सर्वशः ।
द्रवशुक्त्याऽवलेढव्यः पातव्यश्च चतुर्द्रवः ॥ १७ ॥
गुडस्तुल्यश्चूर्णे प्रभवति सिता च द्विगुणिता
समीराद्यौ द्वित्रे च पलमनुपानं क्रमगतम् ।
मितिः कर्षो हिङ्गुर्ग्रथितमिह मृष्टं प्लुतमिदं
भवेद्यावत्तावत्तदुचितरसैर्माध्यममतैः ॥ १८ ॥
पक्त्वा क्वाथपलं हि षोडशपले तोयेऽष्टशेषं पिबे-
त्तद्वार्धष्टकलांशगामिह सितां दोषेषु मध्वन्यथा ।
चूर्णं क्षीरगुडाज्यकल्कतिलजान्मूत्राच्च कर्षं क्षिपे-
त्क्षारव्योषशिलाजहिङ्गुलवणाजाजीमुरा टङ्कणम् ॥ १९ ॥
तैलमद्यघृतादीनां मात्रा तु द्विपलोत्तमा ।
चतुष्कर्षा मध्यमा स्याद्धीना कर्षद्वयात्मिका ॥ २० ॥
देयं स्थूलशरीराणां वयःस्थानां तु मात्रया ।
बालस्य प्रथमे मासि देया भेषजरक्तिका ॥ २१ ॥
अवलेहीकृतैकैव क्षीरक्षौद्रसिताघृतैः ।
वर्धयेत्तावदेकैकां यावद्भवति वत्सरम् ॥ २२ ॥
माषवृद्धिस्तदूर्ध्वं स्याद्यावत्षोडश वत्सराः ।
ततः स्थिरा भवेत्तावद्यावद्वर्षाणि सप्ततिः ॥ २३ ॥
ततो बालकवन्मात्रा ह्रासनीया शनैः शनैः ।
मात्रेयं कल्कचूर्णानां कषायाणां चतुर्गुणा ॥ २४ ॥
मितिर्नास्त्येव मात्रायाः कालमग्निबलं वयः ।
प्रकृतिं देशदोषौ च वीक्ष्य मात्रां प्रकल्पयेत् ॥ २५ ॥
तत्तद्रोगाधिकारे तु तत्तन्मात्राः पृथक्पृथक् ।
विविच्य कथयिष्यामि पुरस्तादस्तसंशयम् ॥ २६ ॥

इति योगतरङ्गिण्यां भैषज्यग्रहणमुहूर्तमङ्गलपथ्यकालमात्राकथनं
नाम पञ्चपञ्चाशस्तरङ्गः ॥ ५५ ॥

---

१ क. 'मांसक' ।

अथ षट्पञ्चाशस्तरङ्गः ।

---

## अथ ज्वरादिरोगोद्देशः—

ज्वरोऽतिसारो ग्रहणी ह्यर्शोऽजीर्णं विषूचिका ।
सालसा च विलम्बी च कृमिरुक्पाण्डुकामले ॥ १ ॥
हलीमकं रक्तपित्तं राजयक्ष्मा ह्युरःक्षतम् ।
कासो हिक्का तथा श्वासः स्वरभेदस्त्वरोचकः ॥ २ ॥
छर्दिस्तृष्णा च मूर्छा च तथा पानात्ययादयः ।
दाहाख्यश्च तथोन्मादो ह्यपस्मारोऽनिलामयः ॥ ३ ॥
वातरक्तमूरुस्तम्भ आमवातोऽथ शूलरुक् ।
पक्तिजं शूलमानाहमुदावर्तोऽथ गुल्मरुक् ॥ ४ ॥
हृद्रोगो मूत्रकृच्छ्रं च मूत्राघातस्तथाऽश्मरी ।
प्रमेहो मधुमेहश्च पिटिका च प्रमेहजा ॥ ५ ॥
मेदोदोषोदरं शोथो वृद्धिश्च गलगण्डकः ।
गण्डमालाऽपची ग्रन्थिरर्बुदं श्लीपदं तथा ॥ ६ ॥
विद्रधिव्रणशोथौ च द्वौ व्रणौ भग्ननाडिकौ ।
भगंदरोपदंशौ च शूकदोषस्त्वगामयः ॥ ७ ॥
शीतपित्तमुदर्दश्च कोठकश्चाऽऽम्लपित्तकम् ।
विसर्पश्च सविस्फोटस्तथैव च मसूरिका ॥ ८ ॥
क्षुद्रास्यकर्णनासाक्षिशिरःस्त्रीबालकामयाः ।
विषं चेत्ययमुद्देशः संग्रहेऽस्मिन्प्रकीर्तितः ॥ ९ ॥

## तत्र दोषभेदानाह—

पृथक्त्रीन्विद्धि संसर्गे त्रिधा तत्र तु तान्नव ।
त्रीनेव समया वृद्ध्या षडेकस्यातिशायने ॥ १० ॥
त्रयोदश समस्तेषु ष [ड्]द्व्येकातिशयेन तु ।
एवं तुल्याधिकैः षट्च तारतम्यविकल्पनात् ॥ ११ ॥
पञ्चविंशतिरित्येवं वृद्धैः क्षीणैश्च तावतः ।
एकैकवृद्धिसमताक्षयैः षट् ते पुनश्च षट् ॥ १२ ॥

---

१ ग. °का । सालसश्च वि°। २ ग. मद्विशं । ३ ग. एकं तु°। ४ ग. °धिकं षड्तरा°।

एकक्षयद्वंद्ववृद्ध्या सविपर्ययया ऽपि ते ।
भेदाद्विषष्टिर्निर्दिष्टास्त्रिषष्टिः स्वास्थ्यकारणम् ॥ १३ ॥
संसर्गाद्रसरुधिरादिभिस्तथैषां
दोषाणां क्षयसमताऽपि वृद्धिभेदैः ।
आनन्त्यं तरतमयोगतश्च पाताञ्-
जानीयादवहितमानसो यथास्वम् ॥ १४ ॥

इति वाग्भट्टात् ।

## दोषादिवृद्धेर्निदानमाह—

वाते वृद्धे भवेत्कार्श्यं पारुष्यं चोष्णकामिता ।
गाढं मलं बलं चाल्पं गात्रस्फूर्तिर्विनिद्रता ॥ १५ ॥
विण्मूत्रनेत्रगात्राणां *रक्तत्वं क्षीणमिन्द्रियम् ।
शीतेच्छातापमूर्छाः स्युः पित्ते वृद्धेऽल्पनि+द्रता ॥ १६ ॥
विडादि पीतं प्रस्वेदो दीपद्वेषास्यतिक्तता ।
कफे वृद्धेऽतिनिद्रत्वं शौक्ल्यं विण्मूत्रद्दग्भवम् ॥ १७ ॥
गौरवं संधिशैथिल्यं मुखे सेकश्च तृप्तता ।
रसे वृद्धेऽन्नविद्वेषो जायते गात्रगौरवम् ॥ १८ ॥
लालाप्रसेकश्छर्दिश्च मूर्छा श्वासो भ्रमोऽपि च ।
प्रवृद्धं रुधिरं कुर्याद्गात्रमालक्तवर्णताम् ॥ १९ ॥
लोचने च तथा रक्ते शिराः पूरयतोऽपि च ।
मांसं वृद्धं तु गण्डोत्थस्फिगुपस्थोरुबाहुषु ॥ २० ॥
जङ्घयोः कुरुते वृद्धिं तथा गात्रस्य गौरवम् ।
उदरे पार्श्वयोर्वृद्धिः कासश्वासादयस्तथा ॥ २१ ॥
दौर्गन्ध्यं स्निग्धता गात्रे मेदोवृद्धौ भवेदिति ।
वृद्धान्यस्थीनि कुर्वन्ति अस्थीन्यन्यानि वाऽस्थिषु ॥२२॥
रचयन्ति तथा दन्तान्विकटान्महतस्तथा ।
मज्जावृद्धः समस्ताङ्गनेत्रगौरवमाचरेत् ॥ २३ ॥
शुक्राश्मरी शुक्रवृद्धौ शुक्रस्यातिप्रवर्तनम् ।
मलप्रवृद्धावाटोपो जठरे च रुजा भवेत् ॥ २४ ॥

---

* क. पुस्तके पीतत्वमिति भावप्रकाशपाठः । + क. मूत्रतेति भावप्रकाशपाठः ।

---

°गौ° । २ क. °र्छा सादो भ्र°

मूत्रे वृद्धे मुहुर्मूत्रमाध्माने बस्तिवेदना ।
स्वेदे वृद्धे तु दौर्गन्ध्यं त्वचि कण्डूश्च जायते ॥ २५ ॥
आर्तवातिप्रवृत्तिः स्याद्दौर्गन्ध्यं चाथ चाऽऽर्तवे ।
अङ्गमर्दश्च जायेत लिङ्गं स्यादार्तवेऽधिके ॥ २६ ॥
स्तनयोरतिपीनत्वं क्षीरस्रावो मुहुर्मुहुः ।
तोदश्च तत्र भवति स्तन्याधिक्यस्य लक्षणम् ॥ २७ ॥
उदरादिप्रवृद्धिस्तु वृद्धे गर्भेऽभिजायते ।
स्वेदश्च गर्भवत्याः स्यात्प्रसवे व्यसनं महत् ॥ २८ ॥

अथातिवृद्धानां दोषधातुमलानां ह्रासनमाह—

तत्तद्ध्रासकराहारविहारपरिषेवणैः ।
दोषधातुमलानां हि ह्रासो भवति देहिनाम् ॥ २९ ॥
पूर्वः पूर्वोऽतिवृद्धत्वाद्वर्धयेद्धि परं परम् ।
तस्मादतिप्रवृद्धानां धातूनां ह्रासनं हितम् ॥ ३० ॥

अथ दोषधातुमलानां क्षयस्य निदानमाह—

असात्म्यान्नसदाक्रोधशोकचिन्ताभयश्रमैः ।
अतिव्यवायानशनात्यर्थसंशोधनैरपि ॥ ३१ ॥
वेगानां धारणाच्चापि साहसादभिघाततः ।
दोषाणामथ धातूनां मलानां च भवेत्क्षयः ॥ ३२ ॥

तेषां क्षीणानां लक्षणान्याह—

वातक्षयेऽल्पचेष्टत्वं मन्दवाक्त्वं विसंज्ञता ।
पित्तक्षयेऽधिकः श्लेष्मा वह्निर्मन्दः प्रभाक्षयः ॥ ३३ ॥
संधयः शिथिला मूर्छा रौक्ष्यं दाहः कफक्षये ।
हृत्पीडा कण्ठशोषश्च त्वक्शून्या तु रसक्षये ॥ ३४ ॥
शिराः श्लथा हिमाम्लेच्छा त्वक्पारुष्यं क्षयेऽसृजः ।
कण्ठोष्ठकन्धरास्कन्धवक्षोजठरसंधिषु ॥ ३५ ॥
उपस्थप्रोथपिण्डीषु शुष्कता गात्ररूक्षता ।
प्रार्थना स्निग्धमांसस्य लिङ्गं स्यान्मेदसः क्षये ॥ ३६ ॥
तोदो धमन्यः शिथिला भवेयुर्मांससंक्षये ।
प्लीहाभिवृद्धिः संधीनां शून्यता तनुरूक्षता ॥ ३७ ॥

१ ग. °ते । भेद° ।

अस्थिशूलं तनौ रौक्ष्यं नखदन्तत्रुटिस्तथा ।
अस्थिक्षये लिङ्गमेतद्वैद्यैराद्यैरुदाहृतम् ॥ ३८ ॥
शुक्राल्पत्वं पर्वभेदस्तोदः शून्यत्वमस्थनि ।
लिङ्गान्येतानि जायन्ते नराणां मज्जसंक्षये ॥ ३९ ॥
शुक्रक्षये रतेऽशक्तिर्व्यथा शेफसि मुष्कयोः ।
चिरेण शुक्रसेकः स्यात्सेके रक्ताल्पशुक्रता ॥ ४० ॥

अथौजःक्षयस्य निदानमाह—

ओजः क्षीयेत कोपक्षुच्चिन्ताशोकश्रमादिभिः ।
रूक्षतीक्ष्णोष्णकटुकैः कर्षणैरपरैरपि ॥ ४१ ॥

अथ क्षीणौजसो लक्षणम्—

बिभेति दुर्बलोऽभीक्ष्णं चिन्तयेद्व्यथितेन्द्रियः ।
दुश्छायो दुर्मना रूक्षः क्षामः स्यादोजसः क्षये ॥ ४२ ॥
पुरीषस्य क्षये पार्श्वे हृदये च व्यथा भवेत् ।
सशब्दस्यानिलस्योर्ध्वगमनं कुक्षिसंवृतिः ॥ ४३ ॥

कुक्षिसंवृतिः, उदरसंकोचनम् ।

मूत्रक्षयेऽल्पमूत्रत्वं बस्तौ तोदश्च जायते ।
स्वेदनाशस्त्वचो रौक्ष्यं चक्षुषोरपि रूक्षता ॥ ४४ ॥
स्तब्धाश्च रोमकूपाः स्युर्लिङ्गं स्वेदक्षये भवेत् ।
आर्तवस्य स्वकाले वाऽभावस्तस्याल्पताऽथवा ॥ ४५ ॥
जायते वेदना योनौ लिङ्गं स्यादार्तवक्षये ।
अभावः स्वल्पता वा स्यात्स्तन्यस्य भवतस्तथा ॥ ४६ ॥
म्लानौ पयोधरावेतल्लक्षणं स्तन्यसंक्षये ।
अनुन्नतो भवेत्कुक्षिर्गर्भस्यास्पन्दनं तथा ॥ ४७ ॥
इति गर्भक्षये शार्ङ्गैर्लक्षणं समुदाहृतम् ।

अथ क्षीणानां दोषधातुमलानां वर्धनमाह—

तत्तत्संवर्धनाहारविहारातिनिषेवणात् ॥ ४८ ॥
तत्तत्प्राप्य नरः शीघ्रं तत्तत्क्षयमपोहति ।
ओजस्तु वर्धते नृणां सुस्निग्धैः स्वादुभिस्तथा ॥ ४९ ॥
वृष्यैरन्यैर्विशेषात्तु क्षीरमांसरसादिभिः ।

अन्यच्च—

दोषधातुमलक्षीणो बलक्षीणोऽपि मानवः ॥ ५० ॥

ततत्संवर्धनं यत्तदन्नपानं प्रकाङ्क्षति ।
यद्यदाहारजातं तु क्षीणः प्रार्थयते नरः ॥ ५१ ॥
तस्य तस्य स लाभेन तत्तत्क्षयमपोहति ।

तत्र केन क्षीणः किं काङ्क्षतीत्याकाङ्क्षायामाह—

कषायकटुतिक्तानि रूक्षशीतलघूनि च ॥ ५२ ॥
यवमुद्गप्रियङ्गूंश्च वातक्षीणोऽभिकाङ्क्षति ।
तिलमाषकुलत्थादिपिष्टान्नविकृतिं तथा ॥ ५३ ॥
मस्तुशुक्ताम्लतक्राणि काञ्जिकं च तथा दधि ।
कट्वम्ललवणोष्णानि तीक्ष्णं क्रोधं विदाहि च ॥ ५४ ॥
समयं देशमुष्णं च पित्तक्षीणोऽभिकाङ्क्षति ।
मधुरस्निग्धशीतानि लवणाम्लगुरूणि च ॥ ५५ ॥
दधि क्षीरं दिवा स्वप्नं कफक्षीणोऽभिकाङ्क्षति ।
रसक्षीणो नरः काङ्क्षत्यम्भोऽतिशिशिरं पुनः ॥ ५६ ॥
रात्रिनिद्रां हिमं चन्द्रं भोक्तुं च मधुरं रसम् ।
इक्षुं मांसरसं मन्थं मधु सर्पिर्गुडोदकम् ॥ ५७ ॥
द्राक्षादाडिमशुक्तानि सस्नेहलवणानि च ।
रक्तसिद्धानि मांसानि रक्तक्षीणोऽभिकाङ्क्षति ॥ ५८ ॥
अन्नानि दधिसिद्धानि खाडवांश्च बहूनपि ।
स्थूलक्रमादमांसानि मांसक्षीणोऽभिकाङ्क्षति ॥ ५९ ॥
खाडवा मधुराम्लादिरससंयोगपाचिताः ।
मेदःसिद्धानि मांसानि ग्राम्यानूपौदकानि च ॥ ६० ॥
सक्षाराणि विशेषेण मेदःक्षीणोऽभिकाङ्क्षति ।
अस्थिक्षीणस्तथा मांसं मज्जास्थिस्नेहसंयुतम् ॥ ६१ ॥
स्वाद्वम्लसंयुतं द्रव्यं मज्जाक्षीणोऽभिकाङ्क्षति ।
शिखिनः कुक्कुटस्याण्डं हंससारसयोस्तथा ॥ ६२ ॥
ग्राम्यानूपौदकानां च शुक्रक्षीणोऽभिकाङ्क्षति ।
यवान्नं यवकान्नं च शाकानि विविधानि च ॥ ६३ ॥
मसूरमाषयूषं च मलक्षीणोऽभिकाङ्क्षति ।
पेयामिक्षुरसं क्षीरं सगुडं बदरोदकम् ॥ ६४ ॥

---

१ क. °क्ष्यद° ।

मूत्रक्षीणोऽभिलषति त्रपुसैर्वारुकाणि च ।
अभ्यङ्गोद्वर्तनं मद्यं निवातशयनासने ॥ ६५ ॥
गुरुप्रावरणं चैव स्वेदक्षीणोऽभिकाङ्क्षति ।
कट्वम्ललवणोष्णानि विदाहीनि गुरूणि च ॥ ६६ ॥
फलशाकानि पानानि स्त्री वाञ्छत्यार्तवक्षये ।
सुराशाल्यन्नमांसानि गोक्षीरं शर्करां तथा ॥ ६७ ॥
आसवं दधि हृद्यानि स्तन्यक्षीणाऽभिकाङ्क्षति ।
मृगाजाविवराहाणां गर्भान्वाञ्छति संस्कृतान् ॥ ६८ ॥
वसाशूल्यप्रकारादीन्[1]भोक्तुं गर्भपरिक्षये ।

अथ दोषधातुमलानां वृद्धानां च चिकित्सामाह सुश्रुतः—

अत्यन्तकुत्सितावेतौ सदा स्थूलकृशौ नरौ ॥ ६९ ॥
रक्षणं वाऽपि मध्यस्य कुर्वीत कुशलो भिषक् ।

अन्यच्च—

क्षपयेद्बृंहयेच्चापि दोषधातुमलान्भिषक् ॥ ७० ॥
नरो रोगान्वितो यावद्रोगेण रहितो भवेत् ।

अथ बललक्षणम्—

रसादिशुक्रपर्यन्तं दु(पु)ष्टधातुनिमित्तकम् ॥ ७१ ॥
चेष्टासु पाटवं यत्तु बलं तदभिधीयते ।

अथ बलस्य क्षयनिदानमाह—

अभिघाताद्भयात्क्रोधाच्चिन्तया च परिश्रमात् ॥ ७२ ॥
धातूनां संक्षयाच्छोकाद्बलं संक्षीयते नृणाम् ।

अथ बलक्षयस्य लक्षणम्—

गौरवं स्तब्धता गात्रे मुखम्लानिर्विवर्णता ॥ ७३ ॥
तन्द्रानिद्रावातशोथो बलव्यापत्तिलक्षणम् ।

अथ बलवृद्धिलक्षणमाह—

दोषसाम्यकरं यत्तु वह्निसाम्यकरं च यत् ॥ ७४ ॥
धातुपुष्टिकरं द्रव्यं बलं तदभिवर्धयेत् ।

---

1 क. 'दन्दया कु' ।

अथ बलवल्लक्षणमाह–

कृशोऽपि बलवान्कश्चित्स्थूलोऽप्यल्पबलो यतः ।
तस्माच्चेष्टापटुत्वेन बलवन्तं विदुर्बुधाः ॥ ७५ ॥

इति श्रीयोगतरङ्गिण्यां दोषभेदादिकाङ्क्षानलाबलकथनं नाम षट्पञ्चाशस्तरङ्गः ॥ ५६ ॥

---

अथ सप्तपञ्चाशस्तरङ्गः ।

---

अथ ज्वराधिकारः–

यतः समस्तरोगाणां ज्वरो राजेति विश्रुतः ।
अतो ज्वराधिकारोऽत्र प्रथमं परिलिख्यते ॥ १ ॥

तत्र रोगज्ञानोपायमाह–

निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा ।
संप्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥ २ ॥
यत्तु न स्याद्विना येन तस्य तद्धेतुरुच्यते ।
संनिकृष्टं विप्रकृष्टं प्रधानं व्यभिचारि च ॥ ३ ॥
चतुर्धेति निदानं स्यात्तत्पर्यायान्ब्रुवे यथा ।
निदानं कारणं हेतुर्निमित्तं च निबन्धनम् ॥ ४ ॥
मूलमायतनं बीजं प्रत्ययश्चास्य वाचकाः ।
स्थानसंश्रयिणः क्रुद्धा भाविव्याधिप्रबोधकम् ॥ ५ ॥
दोषाः कुर्वन्ति यल्लिङ्गं पूर्वरूपं तदुच्यते ।
मुख्यसामान्यभेदेन द्विधा तदपि कथ्यते ॥ ६ ॥
यथा वातज्वरे जृम्भा मुख्यं गौणं श्रमादि तत् ।
व्याधेः स्वरूपं यद्व्यक्तं तद्रूपं भिषजो जगुः ॥ ७ ॥
संस्थानं व्यञ्जनं लिङ्गं लक्षणं चिह्नमाकृतिः ।
रूपमेको लक्ष्म वेति तत्पर्यायास्त्रगुर्बुधाः ॥ ८ ॥
सुखानुबन्धयोर्हेतुर्व्याध्यादिविपरीततः ।
[*देशादिकश्चोपशयो ज्ञेयोऽनुपशयोऽन्यथा ॥ ९ ॥
स त्वष्टादशधा ज्ञेयो हेत्वादिभिरुदीरितः । ]
हेतुव्याधिविपर्यस्ताविपर्यस्तार्थकारिणाम् ॥ १० ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो ग. पुस्तकस्थः ।

औषधान्नविहाराणामुपयोगं सुखावहम् ।
विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतः ।
विपरीतोऽनुपशयो व्याध्यसात्म्यमिति स्मृतः ॥ ११ ॥

दोषैरिति कर्तव्यतया समेतं संप्राप्तिरुक्ताऽऽमयजन्म तज्ज्ञैः ।
प्राधान्यसंख्याबलकालभेदैर्विकल्पयुक्तैरिति पञ्चधा सा ॥ १२ ॥

प्राप्तिरागतिस्तथा जातिराकृतिर्व्याधिजन्म च ।
एते संप्राप्तिपर्यायाः कथिताः पूर्वसूरिभिः ॥ १३ ॥
दोषाणां समवेतानां विकल्पोऽशांशकल्पना ।
संख्या त्वष्टौ ज्वराः पञ्च पाण्डवः षट्क्षया इति ॥ १४ ॥
हेत्वादिकात्स्न्यावयवैर्बलाबलविशोधनम् ।
नक्तं दिनर्तुभुक्तांशैर्व्याधिकालो यथामलम् ॥ १५ ॥
स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेत् ।
इति प्रोक्तो निदानार्थः स व्यासेनोपदिश्यते ॥ १६ ॥
सर्वेषामेव रोगाणां निदानं कुपिता मलाः ।
तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ॥ १७ ॥
कश्चिद्धि रोगो रोगस्य हेतुर्भूत्वा प्रशाम्यति ।
न प्रशाम्यति चाप्यन्यो हेत्वर्थं कुरुतेऽपि च ॥ १८ ॥

ज्वरस्योत्पत्तिमाह—

दक्षापमानसंक्रुद्धरुद्रनिश्वाससंभवः ।
ज्वरोऽष्टधा पृथग्द्वंद्वसंघातागन्तुजः स्मृतः ॥ १९ ॥

ज्वरस्वरूपमाह—

ज्वरस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः ।
भस्मप्रहरणो रौद्रः कालान्तकयमोपमः ॥ २० ॥

ज्वरहेतुमाह—

मिथ्याहारविहाराभ्यां दोषा ह्यामाशयाश्रयाः ।
बहिर्निरस्य कोष्ठाग्निं ज्वरदाः स्यू रसानुगाः ॥ २१ ॥
स्वेदावरोधः संतापः सर्वाङ्गग्रहणं तथा ।
युगपद्यत्र रोगे तु स ज्वरो व्यपदिश्यते ॥ २२ ॥

---

क. विशेषणम् ।

दोषैः सवेगैर्बहुधा समुद्भ्रान्तैर्विमार्गगैः ।
विक्षिप्यमाणोऽन्तराग्निर्भवत्याशु बहिश्चरः ॥ २३ ॥
रुणद्धि चाप्यपां धातुं यस्मात्तस्माज्ज्वरातुरः ।
भवत्युष्णगात्रश्च स्विद्यते न च सर्वतः ॥ २४ ॥
श्रमो रतिर्विवर्णत्वं वैरस्यं नयनप्लवः ।
इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु ॥ २५ ॥
जृम्भाङ्गमर्दौ गुरुता रोमहर्षोऽरुचिस्तमः ।
अप्रहर्षश्च शीतं च भवत्युत्पत्स्यति ज्वरे ॥ २६ ॥
सामान्यतो विशेषस्तु जृम्भाऽत्यर्थं समीरणात् ।
पित्तान्नयनयोर्दाहः कफाद्न्नारुचिस्तथा ॥ २७ ॥
सर्वलिङ्गसमावापः सर्वदोषप्रकोपजे ।
रूपैरन्यतराभ्यां तु संसृष्टं द्वंद्वजं विदुः ॥ २८ ॥
वातज्वराग्ररूपे तु घृतपानं प्रशस्यते ।
पित्तज्वराग्ररूपे तु कथितं मृदुरेचनम् ॥ २९ ॥
कफज्वरस्य प्राग्रूपे छर्दनं कारयेन्मुहुः ।
द्वंद्वजज्वरपूर्वाङ्के द्वंद्वकर्म समाचरेत् ।
त्रिदोषजज्वराग्राङ्के यथादोषं विकल्पयेत् ॥ ३० ॥

इति ज्वरपूर्वरूपोपक्रमः ।

### अथ वातज्वरनिदानम्—

वेपथुर्विषमो वेगः कण्ठोष्ठमुखशोषणम् ।
निद्रानाशः क्षवः स्तम्भो गात्राणां रौक्ष्यमेव च ॥ ३१ ॥
शिरोहृद्गात्ररुग्वक्त्रवैरस्यं गाढविट्कता ।
भवन्ति विविधा वातवेदनाः पादसुप्तता ॥ ३२ ॥
पिण्डकोद्वेष्टनं कर्णस्वनौ वक्त्रकषायता ।
ऊरुसादो हनुस्तम्भो विश्लेषः संधिजानुनोः ॥ ३३ ॥
शुष्ककासो वमिर्लोमदन्तहर्षौ श्रमभ्रमौ ।
अरुणं नेत्रमूत्रादि तृट्प्रलापोष्णकामिता ॥ ३४ ॥
शूलाध्माने जृम्भणं च भवत्यनिलजे ज्वरे ।

### अथ पित्तज्वरलक्षणम्—

वेगस्तीक्ष्णोऽतिसारश्च निद्राल्पत्वं तथा वमिः ॥ ३५ ॥

---

१ ग. °र्गत्वमालस्यं । २ °द्वपरिशो° । ३ ग. °दना वातसु°।

कण्ठोष्ठमुखनासानां पाकः स्वेदश्च जायते ।
प्रलापो वक्त्रकटुता मूर्छा दाहो मदस्तृषा ॥ ३६ ॥
पीतविण्मूत्रनेत्रत्वं पैत्तिके भ्रम एव च ।

अथ श्लेष्मज्वरलक्षणम्—

स्तैमित्यं स्तिमितो वेग आलस्यं मधुरास्यता ॥ ३७ ॥
शुक्लमूत्रपुरीषत्वं स्तम्भस्तृप्तिरथापि च ।
गौरवं शीतमुत्क्लेदो रोमहर्षोऽतिनिद्रता ॥ ३८ ॥
अङ्गेषु पिडकाः शीताः प्रसेकच्छर्दितन्द्रिकम् ।
कण्डूः प्रलाप उष्णाभिलाषिता वह्निमार्दवम् ॥ ३९ ॥
प्रतिश्यायोऽरुचिः कासः कफजेऽक्ष्णोश्च शुक्लता ।

अथ वातपित्तज्वरलक्षणम्—

तृष्णा मूर्छा भ्रमो दाहः स्वप्ननाशः शिरोरुजा ॥ ४० ॥
कण्ठास्यशोषो वमथू रोमहर्षोऽरुचिस्तमः ।
पर्वभेदश्च जृम्भा च वातपित्तज्वराकृतिः ॥ ४१ ॥

अथ वातश्लेष्मज्वरलक्षणम्—

स्तैमित्यं पर्वणां भेदो निद्रा गौरवमेव च ।
शिरोग्रहः प्रतिश्यायः कासः स्वेदाप्रवर्तनम् ॥ ४२ ॥
संतापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ।

अथ पित्तश्लेष्मज्वरलक्षणम्—

लिप्ततिक्तास्यता तन्द्रा मोहः कासोऽरुचिस्तथा ॥ ४३ ॥
मुहुर्दाहो मुहुः शीतं पित्तश्लेष्मज्वराकृतिः ।

अथ संनिपातज्वरलक्षणम्—

क्षणे दाहः क्षणे शीतमस्थिसंधिशिरोरुजा ॥ ४४ ॥
सस्रावे कलुषे रक्ते निर्भुग्ने चापि लोचने ।
सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवाऽऽवृतः ॥ ४५ ॥
तन्द्रा मोहः प्रलापश्च कासः श्वासोऽरुचिर्भ्रमः ।
परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गता परम् ॥ ४६ ॥
ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च ।
शिरसो लोठनं तृष्णा निद्रानाशो हृदि व्यथा ॥ ४७ ॥

स्वेदमूत्रपुरीषाणां चिराद्दर्शनमल्पशः ।
कृशत्वं नातिगात्राणां प्रततं कण्ठकूजनम् ॥ ४८ ॥
कोठानां श्यामरक्तानां मण्डलानां च दर्शनम् ।
मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च ॥ ४९ ॥
तद्वच्छीतं महानिद्रा दिवा जागरणं निशि ।
सदा वा नैव वा निद्रा महास्वेदोऽथ नैव वा ॥ ५० ॥
गीतनर्तनहास्यादि विकृतेहाप्रवर्तनम् ।
चिरात्पाकश्च दोषाणां संनिपातज्वराकृतिः ॥ ५१ ॥

इति संनिपातज्वरलक्षणम् ।

अथ तद्भेदाश्चरकात्—

द्व्युल्बणैः कोल्बणैः षट् स्युर्हीनमध्याधिकैश्च षट् ।
समैरेको विकारास्ते संनिपातास्त्रयोदश ॥ ५२ ॥

नामान्याह—

विद्धश्च शर्कराख्यश्च मल्लविस्फुरकावुभौ ।
शीघ्रकारी कम्पनश्च व्यालाकृत्यभिधस्तथा ॥ ५३ ॥
संक्रामक्रकचाख्यौ कर्कटः पाकलाभिधः ।
कूटपाकलसंमोहावित्येषामभिधाः स्मृताः ॥ ५४ ॥

अथ विद्धाख्यः—

भ्रमः पिपासा दाहश्च गौरवं शिरसोऽतिरुक् ।
वातपित्तोल्बणे मन्दकफे विद्धाभिधे भवेत् ॥ ५५ ॥

अथ शर्कराख्यः—

शैत्यं कासोऽरुचिस्तन्द्रा पिपासा दाहरुक्क्लमाः ।
वातश्लेष्मोल्बणे मन्दपित्ते शर्करनामनि ॥ ५६ ॥

अथ मल्लाख्यः—

छर्दिः शैत्यं मुहुर्दाहस्तृष्णा मोहोऽस्थिवेदना ।
श्लेष्मपित्तोल्बणे मन्दवाते मल्लाभिधे भवेत् ॥ ५७ ॥

अथ विस्फुरणाख्यः—

शिरःसंध्यास्थिशूलं तृट्प्रलापभ्रमगौरवम् ।
वातोल्बणे विस्फुरके ह्यनुगे चाऽऽस्यशोषिता ॥ ५८ ॥

१ क, सततं । २ क, °होऽति मै° । ३ क, ग, °श्च कर्कटाख्य° । ४ ग, मल्लध° ।

अथ शीघ्रकारी—

रक्तष्ठीवनता रक्तमूत्रता स्वल्पदाहतृट् ।
मूर्छा च पित्तबहले ह्यनुगे शीघ्रकारणि ॥ ५९ ॥

अथ फम्फणाख्यः—

आलस्यारुचिहृल्लासतन्द्राकासवमिभ्रमैः ।
कफोल्बणं फम्फणाख्यं वातपित्तावरं विदुः ॥ ६० ॥

अथ व्यालाकृत्याख्यः—

प्रतिश्याछर्दिरालस्यतन्द्रारुच्यग्निमार्दवैः ।
हीनमध्याधिकमलः क्रमाद्व्यालाकृतिः स्मृतः ॥ ६१ ॥

अथ सङ्ग्रामाख्यः—

हारिद्रनेत्रमूत्रत्वग्दाहतृष्णारुचिभ्रमैः ।
सङ्ग्रामाख्यो हीनवातो मध्यश्लेष्माऽतिपित्तयुक् ॥ ६२ ॥

अथ क्रकचाख्यः—

शिरोरुग्वेपथुश्वासप्रलापच्छर्द्यरोचकैः ।
क्रकचाख्यो हीनपित्तो मध्यश्लेष्माऽधिकानिलः ॥ ६३ ॥

अथ कर्कटाख्यः—

शीतगौरवतन्द्राश्च प्रलापोऽस्थिशिरोतिरुक् ।
हीनपित्ते मध्यवातेऽधिकश्लेष्माणि कर्कटे ॥ ६४ ॥

अथ पाकलाख्यः—

वर्चोभेदोऽग्निदौर्बल्यं दाहतृष्णारुचिभ्रमैः ।
हीनश्लेष्मा मध्यवातोऽधिकपित्तस्तु पाकलः ॥ ६५ ॥

अथ संमोहः—

श्वासकासप्रतिश्यायमुखशोषातिपार्श्वरुक् ।
मध्यपित्ते हीनकफे संमोहाख्येऽधिकानिले ॥ ६६ ॥

अथ कूटपाकलः—

समं वृद्धास्त्रयो दोषाः सर्वोपद्रवकारकाः ।
कूटपाकलनामानं सर्वलिङ्गं प्रकुर्वते ॥ ६७ ॥

---

१ प. °श्य । रक्तभेदवदिदी° । ३ प. सर्वांगहं प्र° ।

इति त्रयोदश संनिपाताः पीयूषसागरतः ।
ग्रन्थान्तरे त्वेतानेव त्रयोदश संनिपातान्नामान्तरैराह ।

यथा—

संधिगान्तकरुग्दाहचित्तविभ्रमकर्णकाः ।
कण्ठकुब्जकशीताङ्गतन्द्रिकाः सप्रलापकाः ॥ ६८ ॥
रक्तष्ठीवी भुग्ननेत्रोऽभिन्यासो जिह्वकाभिधः ।
कष्टसाध्याः स्वभावेन संनिपातोद्भवा ज्वराः ॥ ६९ ॥

तेषां कालावधिमाह—

संधिगे सप्त दिवसाश्चान्तके दश वासराः ।
रुग्दाहे विंशतिर्ज्ञेया एकविंशति विभ्रमे ॥ ७० ॥
शीताङ्गे पक्षमेकं तु तन्द्रिके पञ्चविंशतिः ।
अथ वा वासराः सप्त कण्ठकुब्जे त्रयोदश ॥ ७१ ॥
कर्णके च त्रिमासं स्याद्भुग्ननेत्रे दिनाष्टकम् ।
रक्तष्ठीव्यां दशाहानि चतुर्दश प्रलापके ॥ ७२ ॥
जिह्वके षोडशाहान्यभिन्यासे पक्षसंख्यया ।
इदं तु संनिपातानां प्रमाणं परिकीर्तितम् ॥ ७३ ॥
संधिगस्तन्द्रिकश्चोभौ साध्यः स्याच्चित्तविभ्रमः ।
कष्टसाध्यः कण्ठकुब्जः कर्णको जिह्वकस्तथा ॥ ७४ ॥
कष्टात्कष्टतरो ज्ञेयो रुग्दाहो हन्ति मानवम् ।
अन्तको भुग्ननेत्रश्च रक्तष्ठीवी प्रलापकः ।
शीताङ्गश्चाप्यभिन्यासः षट् साध्याः सप्त मारकाः ॥ ७५ ॥

पृथग्लक्षणान्याह ।

अथ संधिगः—

समुद्भवति संधिषु श्वयथुरुग्ररुक्सज्वर-
स्तनौ च मरुदर्दितः सततमङ्गमर्दाश्रयः ।
दरिद्रमिव कामिनी त्यजति यत्र निद्रा नरं
त्रिदोषजनितं ज्वरं तमिह संधिगं चक्षते ॥ ७६ ॥

अथान्तकः—

धुनोति सततं शिरः प्रसभमुग्रदाहारति-
प्रलापकफहिक्कनश्वसनवेदनाधानपि ।

तनूरपि तनूनपाद्द्युतिरनूनतापा भवे-
त्समन्तकरमन्तकाभिधमुदाहरन्ति ज्वरम् ॥ ७७ ॥

अथ रुग्दाहकः—

तृषातिशयकृज्ज्वरः प्रचुरतापतान्यत्तनुः
शिरःसततचालनं व्यथितकण्ठमन्याहनुः ।
नरः श्वसिति मुह्यति प्रलपतीति यस्मिन्स कः
स्मृतः प्रततदाहकृन्मुनिवरेण रुग्दाहकः ॥ ७८ ॥

अथ चित्तभ्रमः—

असत्यसत्पश्यति मोहतापभ्रमान्मवार्तश्च नरीनृतीति ।
चिराय गायत्यपि येन जन्तुश्चित्तभ्रमाख्यं ज्वरमेनमाहुः ॥ ७९ ॥

अथ कर्णकः—

श्वयथुरतिबहुव्यथश्चिदोपज्वराविरतौ भवति श्रुतेरधो यः ।
प्रलपनभवमोहकम्पकण्ठग्रहबधिरत्वकरः स कर्णकाख्यः ॥ ८० ॥

अथ कण्ठकुब्जः—

हनुस्तम्भदाहारुचिश्वासकम्प-
प्रलापाभितापव्यथामोहसंपत् ।
शिरोरुग्ज्वरो येन रोधो गलस्य
ध्रुवं जायते कण्ठकुब्जः स्मृतः सः ॥ ८१ ॥

अथ शीताङ्गः—

हिमश्लथवपुर्वमिक्लमथुकासहिक्काज्वरः
स्वरक्षयविमोहवान् भवति येन जुष्टो नरः ।
अपि श्वसनकम्पनप्रलपनव्यथोपद्रुतः
कफातिसरणार्दितः स किल शीतगात्रः स्मृतः॥ ८२ ॥

अथ तन्द्रिकः—

कठिनविपुलकण्टका रसज्ञा क्लमभदकर्णरुजोऽतिकण्ठकण्डूः ।
तृडतिसरणतीमतापतन्द्राज्वरकसनश्वसनानि तन्द्रिके स्युः॥ ८३॥

अथ प्रलापकः—

प्रलपति तरसोत्तिष्ठति विचेतनो वेपते मुहुः पतति ।
ज्वरमरदाहाकुलितो येन नरः स प्रलापकः प्रोक्तः ॥ ८४ ॥

अथ रक्तष्ठीवी—

पिपासाहृल्लासारुचिवमथुकासारतिमद-
भ्रमश्वासाध्मानातिसृतिवमिहिक्काज्वरकरः ।
स्मृतो रक्तष्ठीवी पृथुलतमकोष्ठोद्गतरुजः
परिम्लानो रोगी रुधिरमपि येनोद्गिरति च ॥ ८५ ॥

अथ भुग्ननेत्रः—

श्वसिति प्रलपति मुह्यति सततज्वरकारणात्खेन्नः ।
भुग्नदृशि संनिपाते भुग्नस्ताक्षिमण्डलो भवति ॥ ८६ ॥

अथाभिन्यासः—

यस्तु संधिग्रहादीनां सर्वैर्लिङ्गैः समायुतः ।
विशेषाद्दाहमोहाद्यः सोऽभिन्यासोऽतिदुःसहः ॥ ८७ ॥

अथ जिह्वकः—

कठिनतरकण्टकावृतरसनो न शृणोति भाषते नापि ।
ज्वरतापकासमोहश्वासयुतो जिह्वकावर्तः ॥ ८८ ॥
दोषे विवृद्धे नष्टेऽग्नौ सर्वसंपूर्णलक्षणः ।
संनिपातज्वरोऽसाध्यः कृच्छ्रसाध्यस्ततोऽन्यथा ॥ ८९ ॥
सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि वा ।
पुनर्घोरतरो भूत्वा प्रशमं याति हन्ति वा ॥ ९० ॥

अथ त्रिदोषमर्यादा—

सप्तमी द्विगुणा यावन्नवम्येकादशी तथा ।
एषा त्रिदोषमर्यादा मोक्षाय च वधाय च ॥ ९१ ॥
संनिपातज्वरस्यान्ते कर्णमूले सुदारुणः ।
शोथः संजायते तेन कश्चिदेव प्रमुच्यते ॥ ९२ ॥

१ म. °मकण्ठोद्° ।

अथ साध्यासाध्यत्वमाह—

ज्वरस्य पूर्वं ज्वरमध्यतो वा ज्वरान्ततो वा श्रुतिमूलशोथः ।
क्रमादसाध्यः खलु कष्टसाध्यः सुखेन साध्यो मुनिभिः प्रदिष्टः॥९३॥

अथाऽऽगन्तुमाह—

अभिचाराभिशापाभ्यामभिषङ्गाभिघाततः ।
आगन्तुर्जायते दोषैर्यथास्वं तं विभावयेत् ॥ ९४ ॥
अभिचाराभिशापाभ्यां मोहस्तृष्णा च जायते ।
भूताभिषङ्गादुद्वेगो हास्यरोदनकम्पनम् ॥ ९५ ॥
कामशोकभयाद्वायुः क्रोधात्पित्तं त्रयो मलाः ।
भूताभिषङ्गात्कुप्यन्ति भूतसामान्यलक्षणम् ॥ ९६ ॥
श्यावास्यता विषकृते मोहोऽतीसार एव च ।
भक्तारुचिः पिपासा च तोदश्च सह मूर्छया ॥ ९७ ॥
ओषधीगन्धजे मूर्छा शिरोरुग्वमथुस्तथा ।
कामजे चित्तविभ्रंशस्तन्द्रालस्यमभोजनम् ॥ ९८ ॥
हृदये वेदना चास्यगात्रं च परिशुष्यति ।
भयात्प्रलापः शोकाच्च भवेत्कोपाच्च वेपथुः ॥ ९९ ॥

अथ विषमज्वरप्रकरणम्—

दोषोऽल्पोऽहितसंभूतो ज्वरोत्सृष्टस्य वा पुनः ।
धातुमन्यतमं प्राप्य करोति विषमज्वरम् ॥ १०० ॥
यः स्यादनियतात्कालाच्छीतोष्णाभ्यां तथैव च ।
वेगतश्चापि विषमः स ज्वरो विषमः स्मृतः ॥ १ ॥

पञ्च प्रकारानाह—

संततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ ।
पञ्चैते विषमाख्याताः संनिपातोल्बणोद्भवाः ॥ २ ॥

धातुगतानाह—

संततो रसरक्तस्थः सततो रक्तधातुगः ।
अन्येद्युष्कं प्रकुरुते दोषं पिशितधातुगः ॥ ३ ॥

१ ग. °भिघाताभ्यामारब्धस्याभिशापतः । २ क. °क्षणाः । श्या° । ३ ग. °पुः स्वं प्र° ।
४ क. ग. दोषः पि° ।

मेदोगतस्तृतीयाख्यमस्थिमज्जागतः पुनः ।
कुर्याच्चातुर्थिकं घोरमन्तकं रोगसंकरम् ॥ ४ ॥

संततमाह—

सप्ताहं वा दशाहं वा द्वादशाहमथापि वा ।
संतत्या यो विसर्गी स्यात्संततः स निगद्यते ॥ १०५ ॥

अथ सततकः—

अहोरात्रे सततको द्वौ कालावनुवर्तते ।

अन्येद्युष्कमाह—

अन्येद्युष्कस्त्वहोरात्रमेककाले प्रवर्तते ॥ ६ ॥

तृतीयकचतुर्थकौ—

तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः ।
दिनद्वयमतिक्रम्य योऽभ्येति स चतुर्थकः ॥ ७ ॥
दिनमेकं समुत्सृज्य योऽभ्येति स तृतीयकः ।

विषमत्वम्—

केचिद्भूताभिषङ्गोत्थं ब्रुवते विषमज्वरम् ॥ ८ ॥

त्रिविधतृतीयमाह—

कफपित्तात्त्रिकग्राही पृष्ठाद्वातकफात्मकः ।
वातपित्ताच्छिरोग्राही त्रिविधः स्यात्तृतीयकः ॥ ९ ॥
चातुर्थिको दर्शयति प्रभावं द्विविधो ज्वरः ।

तत्राङ्गग्रहज्वरः—

जङ्घाभ्यां श्लेष्मकः पूर्वं शिरसोऽनिलसंभवः ॥ ११० ॥
हृदये पैत्तिकः प्रोक्तो ज्वरश्चैवं त्रिधा स्मृतः ।
विषमज्वर एवान्यश्चातुर्थिकविपर्ययः ॥ ११ ॥
अस्थिमज्जागतो दोषश्चातुर्थिकविपर्ययः ।
त्र्यहं द्व्यहं ज्वरयति दिनमेकं विमुञ्चति ॥ १२ ॥
स मध्ये ज्वरयत्यह्नि आद्यन्ते च विमुञ्चति ।
नित्यं मन्दज्वरो रूक्षः शूनकस्तेन सीदति ॥ १३ ॥

१ क. 'विधं ज्व° ।

स्तब्धाङ्गः श्लेष्मभूयिष्ठो नरो वातबलासकी ।
प्रलिम्पन्निव गात्राणि घर्मेण गौरवेण च ॥ १४ ॥
मन्दज्वरविलेपी च स शीतः स्यात्प्रलेपकः ।
त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरे ॥ १५ ॥
तयोः प्रशान्तयोः पित्तमन्ते दाहं करोति च ।
करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च ॥ १६ ॥
तस्मिन्प्रशान्ते त्वितरौ कुरुतः शीतमन्ततः ।
द्वावेतौ शीतदाहादी ज्वरौ संसर्गजौ मतौ ।
दाहपूर्वस्तयोः कष्टः कृच्छ्रसाध्यतमश्च सः ॥ १७ ॥

अथ सप्तधातुगतज्वरलक्षणमाह—

गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ ।
रसस्थे तु ज्वरे लिङ्गं दैन्यं चास्योपजायते ॥ १८ ॥
रक्तनिष्ठीवनं दाहो मोहश्छर्दनविभ्रमौ ।
प्रलापः पिण्डका तृष्णा रक्तप्राप्ते ज्वरे नृणाम् ॥ १९ ॥
पिण्डकोद्वेष्टनं तृष्णा सृष्टमूत्रपुरीषता ।
ऊष्मान्तर्दाहविक्षेपौ ग्लानिः स्यान्मांसगे ज्वरे ॥ २० ॥
भृशं स्वेदस्तृषा मूर्छा प्रलापश्छर्दिरेव च ।
दौर्गन्ध्यारोचकौ ग्लानिर्मेदःस्थे चाऽसहिष्णुता ॥ २१ ॥
भेदोऽस्थ्नां कूजनं श्वासो विरेकश्छर्दिरेव च ।
विक्षेपणं च गात्राणां विद्यादस्थिगते ज्वरे ॥ २२ ॥
तमःप्रवेशनं हिक्का कासः शैत्यं वमिस्तथा ।
अन्तर्दाहो महाश्वासो मर्मभेदश्च मज्जगे ॥ २३ ॥
शेफसः स्तब्धता मोक्षः शुक्रस्य तु विशेषतः ।
मरणं प्राप्नुयात्तत्र शुक्रस्थानगते ज्वरे ॥ २४ ॥

साध्यासाध्यत्वमाह—

रसरक्ताश्रितः साध्यो मांसमेदोगतश्च यः ।
अस्थिमज्जागतः कृच्छ्रः शुक्रस्थो नैव सिध्यति ॥ २५ ॥
वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात् ।
वैकृतोऽन्यः स दुःसाध्यः प्राकृतश्चानिलोद्भवः ॥ २६ ॥
वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम् ।
कुर्यात्पित्तं च शरदि तस्य चानुबलः कफः ॥ २७ ॥

तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम् ।
कफो वसन्ते तमपि वातपित्तं भवेदनु ॥ २८ ॥
काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव च ।
निदानोक्तोऽनुपशयो विपरीतोपशायिता ॥ २९ ॥

अन्तर्वेगस्य लक्षणमाह—

अन्तर्दाहोऽधिका तृष्णा प्रलापः श्वसनं भ्रमः ।
संध्यस्थिशूलमस्वेदो दोषवर्चोविनिग्रहः ॥ १३० ॥
अन्तर्वेगस्य लिङ्गानि ज्वरस्यैतानि निर्दिशेत् ।

बहिर्वेगस्य लक्षणमाह—

संतापोऽभ्यधिको बाह्ये तृष्णादीनां च मार्दवम् ॥ ३१ ॥
बहिर्वेगस्य लिङ्गानि सुखसाध्यत्वमेव च ।

अथाऽऽमज्वरः—

लालाप्रसेकहृल्लासहृदयाशुध्द्यरोचकाः ॥ ३२ ॥
तन्द्रालस्याविपाकास्यवैरस्यं गुरुगात्रता ।
क्षुन्नाशो बहुमूत्रत्वं स्तब्धता बलवाञ्ज्वरः ॥ ३३ ॥
आमज्वरस्य लिङ्गानि न दद्यात्तत्र भेषजम् ।
भेषजं ह्यामदोषस्य भूयो जनयति ज्वरम् ॥ ३४ ॥

विषमहेतुमाह—

शोधनं शमनीयं च करोति विषमज्वरम् ।

पच्यमानलक्षणम्—

ज्वरवेगोऽधिका तृष्णा प्रलापः श्वसनं भ्रमः ॥ ३५ ॥
मलप्रवृत्तिरुत्क्लेशः पच्यमानज्वराकृतिः ।

निरामज्वरलक्षणम्—

क्षुत्क्षामता लघुत्वं च गात्राणां ज्वरमार्दवम् ॥ ३६ ॥
दोषप्रवृत्तिरुत्साहो निरामज्वरलक्षणम् ।

ज्वरस्य दशोपद्रवानाह—

श्वासो मूर्छाऽरुचिश्छर्दितृष्णातीसारविड्ग्रहाः ॥ ३७ ॥

१ ख. °दो वातवर्चो भवेदनु । अ° । २ क. प्रवृत्तिरथाहो ।

हिक्काकासोऽङ्गभेदश्च ज्वरस्योपद्रवा दश ।

विषमे पञ्च गदानाह—

श्वासातिसारमूर्छाश्च मूत्रकृच्छ्रं विसंज्ञिता ॥ ३८ ॥
विषमेषु ज्वरेषु स्युः पञ्च कृच्छ्रतमा गदाः ।

बहुलक्षणम्—

बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः ॥ ३९ ॥
हेतुभिर्बहुभिर्युक्तो बलिभिर्बहुलक्षणः ।

तत्रासाध्यत्वम्—

ज्वरः प्राणान्तकृद्यश्च शीघ्रमिन्द्रियनाशनः ॥ १४० ॥
ज्वरः क्षीणस्य शून्यस्य गम्भीरो दैर्घरात्रिकः ।
असाध्यो बलवान्यश्च केशसीमन्तकृच्च यः ॥ ४१ ॥
गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया ।
हिक्काश्वासतृषायुक्तं गूढं विभ्रान्तलोचनम् ।
संततोच्छ्वासिनं शूनं नरं क्षपयति ज्वरः ॥ ४२ ॥
स्वेदो ललाटे हिमवान्नरस्य शीतार्दितस्यातिसुपिच्छिलश्च ।
कण्ठस्थितो याति न यस्य वक्षो नूनं यमस्यैति गृहं स मर्त्यः॥४३॥
यस्य स्वेदोऽतिबहलः पिच्छिलो याति सर्वतः ।
रोगिणः शीतगात्रस्य तस्य मृत्युं विनिर्दिशेत् ॥ ४४ ॥

धातुपाकलक्षणम्—

निद्रानाशो हृदि स्तम्भो विष्टम्भो गौरवारुची ।
अरतिर्बलहानिश्च धातुपाकस्य लक्षणम् ॥ ४५ ॥
नाभेरूर्ध्वं हृदोऽधस्तात्पीडिते तु व्यथा यदि ।
धातोः पाकं तदा विद्यादन्यथा तु मलस्य च ॥ ४६ ॥

दोषपाकस्य लक्षणमाह—

दोषप्रकृतिवैकृत्यं लघुता ज्वरदेहयोः ।
इन्द्रियाणां च वैमल्यं दोषपाकस्य लक्षणम् ॥ ४७ ॥

तत्रौषधं देयमाह—

मृदौ ज्वरे लघौ देहे प्रबलेषु मलेषु च ।
पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम् ॥ ४८ ॥

ज्वरमोक्षलक्षणमाह–

दाहः स्वेदो भ्रमस्तृष्णा कम्पो विड्भेदसंज्ञिता ।
कूजनं चातिवैगन्ध्यं ज्वरमोक्षणलक्षणम् ॥ ४९ ॥

ज्वरस्वेदमाह–

स्रोतसां मार्दवं कृत्वा नीत्वा पावकमाशयम् ।
हृत्वा वातकफस्तम्भान्स्वेदो ज्वरमपोहति ॥ १५० ॥

अथ विगतज्वरलक्षणम्–

विगतक्लमसंतापमव्यथं विमलेन्द्रियम् ।
युक्तं प्रकृतिसत्त्वैश्च विद्यात्पुरुषमज्वरम् ॥ ५१ ॥
देहो लघुर्व्यपगतक्लममोहतापः
पाको मुखे करणसौष्ठवमव्यथत्वम् ।
स्वेदः क्षवः प्रकृतियोगि मनोऽन्नलिप्सा
कण्डूश्च मूर्ध्नि विगतज्वरलक्षणानि ॥ १५२ ॥

इति योगतरङ्गिण्यां ज्वरनिदानकथनं नाम सप्तपञ्चाशत्तरङ्गः ॥ ५७ ॥

---

अथाष्टपञ्चाशत्तरङ्गः ।

---

अथ सर्वज्वरोपक्रमः–

अंशांशं यत्र दोषाणां विवक्तुं नैव शक्यते ।
साधारणी क्रिया तत्र विधातव्या चिकित्सकैः ॥ १ ॥

अथ निवातसेवनगुणाः–

सामान्यतो ज्वरी पूर्वं निवाते निलये वसेत् ।
निवातमायुषो वृद्धिं तनोत्यारोग्यमेव च ॥ २ ॥

अथ व्यजनानिलस्य–

व्यजनस्यानिलस्तृष्णास्वेदमूर्छाश्रमापहः ।
पित्तदाहास्रदाहामदाहमद्यजदाहजित् ॥ ३ ॥

अथ चर्मव्यजनस्य–

चर्मव्यजनजो वातो वातपित्तप्रकोपजित् ।
श्लेष्मलो दाहमूर्छासकोपजिद्वह्निमान्द्यकृत् ॥ ४ ॥

अथ वंशव्यजनस्य—

वंशव्यजनजो वायुरुष्णः पित्तास्रकोपनः ।

अथ खार्जूरानिलस्य—

खार्जूरस्तालवृन्तोत्थस्त्रिदोषघ्नोऽल्पवीजितः ॥ ५ ॥

अथ मायूरवस्त्रवेत्रजाः—

मायूरवस्त्रवेत्रोत्थचामराणां समीरणाः ।
दोषघ्नाः सौख्यजनकाः स्निग्धा हृद्याः सुपूजिताः ॥ ६ ॥
नवज्वरी भवेद्यत्नाद्गुरूष्णाम्बरसंवृतः ।
यथर्तु पक्वं पानीयं पिबेत्किंचिन्निवारयन् ॥ ७ ॥
विनाऽपि भेषजैर्व्याधिः पथ्यादेव निवर्तते ।
न तु पथ्यविहीनस्य भेषजानां शतैरपि ॥ ८ ॥

तरुणज्वरे निषेधः—

परिषेकान्प्रदेहांश्च स्नेहान्संशोधनानि च ।
दिवा स्वप्नं व्यवायं च व्यायामं शिशिरं जलम् ॥ ९ ॥
क्रोधप्रवातभोज्यानि वर्जयेत्तरुणज्वरी ।

परिषेकादिसेवनापगुणानाह—

शोषं छर्दिं मदं मूर्छां भ्रमं तृष्णामरोचकम् ॥ १० ॥
नवज्वरी संलभते परिषेकादिसेवनात् ।
ज्वरे लङ्घनमेवाऽऽदौ उपदिष्टमृते ज्वरात् ॥ ११ ॥
क्षयानिलभयक्रोधकामशोकभयोद्भवात् ।

उक्तं च—

न लङ्घयेन्मारुतजे ज्वरे च
क्षयोद्भवे च क्षुधिते च जन्तौ ।
न गुर्विणीं दुर्बलबालवृद्धान्
भीतांस्तृषार्तानपि सोर्ध्ववातान् ॥ १२ ॥

लङ्घनाचरणमाह—

आमाशयस्थो हत्वाऽग्निं सामो मार्गान्पिधापयन् ।
विदधाति ज्वरं दोषस्तस्माल्लङ्घनमाचरेत् ॥ १३ ॥
अनवस्थितदोषाग्नेर्लङ्घनं दोषपाचनम् ।
ज्वरघ्नं दीपनं काङ्क्षारुचिलाघवकारकम् ॥ १४ ॥

ज्वरमोक्षलक्षणमाह—

दाहः स्वेदो भ्रमस्तृष्णा कम्पो विड्भेदसंज्ञिता ।
कूजनं चातिवैगन्ध्यं ज्वरमोक्षणलक्षणम् ॥ ४९ ॥

ज्वरस्वेदमाह—

स्रोतसां मार्दवं कृत्वा नीत्वा पावकमाशयम् ।
हृत्वा वातकफस्तम्भान्स्वेदो ज्वरमपोहति ॥ १५० ॥

अथ विगतज्वरलक्षणम्—

विगतक्लमसंतापमव्यथं विमलेन्द्रियम् ।
युक्तं प्रकृतिसत्त्वैश्च विद्यात्पुरुषमज्वरम् ॥ ५१ ॥
देहो लघुर्व्यपगतक्लममोहतापः
पाको मुखे करणसौष्ठवमव्यथत्वम् ।
स्वेदः क्षवः प्रकृतियोगि मनोऽन्नलिप्सा
कण्डूश्च मूर्ध्नि विगतज्वरलक्षणानि ॥ १५२ ॥

इति योगतरङ्गिण्यां ज्वरनिदानकथनं नाम सप्तपञ्चाशत्तरङ्गः ॥ ५७ ॥

---

अथाष्टपञ्चाशत्तरङ्गः ।

---

अथ सर्वज्वरोपक्रमः—

अंशांशं यत्र दोषाणां विवक्तुं नैव शक्यते ।
साधारणी क्रिया तत्र विधातव्या चिकित्सकैः ॥ १ ॥

अथ निवातसेवनगुणाः—

सामान्यतो ज्वरी पूर्वं निवाते निलये वसेत् ।
निवातमायुषो वृद्धिं तनोरयारोग्यमेव च ॥ २ ॥

अथ व्यजनानिलस्य—

व्यजनस्यानिलस्तृष्णास्वेदमूर्छाश्रमापहः ।
पित्तदाहास्रदाहामदाहमद्यजदाहजित् ॥ ३ ॥

अथ चर्मव्यजनस्य—

चर्मव्यजनजो वातो वातपित्तप्रकोपजित् ।
श्लेष्मलो दाहमूर्छासकोपजिद्वह्निमान्द्यकृत् ॥ ४ ॥

अथ वंशव्यजनस्य—

वंशव्यजनजो वायुरुष्णः पित्तास्रकोपनः ।

अथ खार्जूरानिलस्य—

खार्जूरस्तालवृन्तोत्थस्त्रिदोषघ्नोऽल्पवीजितः ॥ ५ ॥

अथ मायूरवस्त्रवेत्रजाः—

मायूरवस्त्रवेत्रोत्थचामराणां समीरणाः ।
दोषघ्नाः सौख्यजनकाः स्निग्धा हृद्याः सुपूजिताः ॥ ६ ॥
नवज्वरी भवेद्यत्नाद्गुरूष्णाम्बरसंवृतः ।
पथ्यतु पक्वं पानीयं पिबेत्किंचिन्निवारयन् ॥ ७ ॥
विनाऽपि भेषजैर्व्याधिः पथ्यादेव निवर्तते ।
न तु पथ्यविहीनस्य भेषजानां शतैरपि ॥ ८ ॥

तरुणज्वरे निषेधः—

परिषेकान्प्रदेहांश्च स्नेहान्संशोधनानि च ।
दिवा स्वप्नं व्यवायं च व्यायामं शिशिरं जलम् ॥ ९ ॥
क्रोधप्रवातभोज्यानि वर्जयेत्तरुणज्वरी ।

परिषेकादिसेवनापगुणानाह—

शोषं छर्दिं मदं मूर्छां भ्रमं तृष्णामरोचकम् ॥ १० ॥
नवज्वरी संलभते परिषेकादिसेवनात् ।
ज्वरे लङ्घनमेवाऽऽदौ उपदिष्टमृते ज्वरात् ॥ ११ ॥
क्षयानिलभयक्रोधकामशोकश्रमोद्भवात् ।

उक्तं च—

न लङ्घयेन्मारुतजे ज्वरे च
  क्षयोद्भवे च क्षुधिते च जन्तौ ।
न गुर्विणीं दुर्बलबालवृद्धान्
  भीतांस्तृषार्तानपि सोर्ध्ववातान् ॥ १२ ॥

लङ्घनाचरणमाह—

आमाशयस्थो हत्वाऽग्निं सामो मार्गान्पिधापयन् ।
विदधाति ज्वरं दोषस्तस्माल्लङ्घनमाचरेत् ॥ १३ ॥
अनवस्थितदोषाग्नेर्लङ्घनं दोषपाचनम् ।
ज्वरघ्नं दीपनं काङ्क्षारुचिलाघवकारकम् ॥ १४ ॥

यद्यप्यनेकधा सन्ति लङ्घनानि स्वकर्मसु ।
नवज्वरी त्वनशनं लङ्घनं समुपाचरेत् ॥ १५ ॥

उक्तं च चरके—

चतुष्प्रकारा संशुद्धिः पिपासा मारुतातपौ ।
पाचनान्युपवासश्च व्यायामश्चेति लङ्घनम् ॥ १६ ॥

तथोक्तं सुश्रुते—

आनद्धास्तिमितैर्दोषैर्यावन्तं कालमातुरः ।
तावत्त्वनशनं कुर्यात्ततः संसर्गमाचरेत् ॥ १७ ॥

लङ्घनसहत्वमाह—

दोषाणामेव सा शक्तिर्लङ्घने या सहिष्णुता ।
नहि दोषक्षये कश्चित्सहते लङ्घनं महत् ॥ १८ ॥

तत्र दोषप्रमाणम्—

वातजः सप्तरात्रेण दशरात्रेण पैत्तिकः ।
श्लेष्मजो द्वादशाहेन ज्वरः पाकं प्रपद्यते ॥ १९ ॥

तरुणज्वरमाह—

आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः ।
मध्यं द्वादशरात्रं तु पुराणमत उत्तरम् ॥ २० ॥
बलाविरोधिना चैनं लङ्घनेनोपपादयेत् ।
बलाधिष्ठानमारोग्यं यदर्थोऽयं क्रियाक्रमः ॥ २१ ॥

हीनलङ्घनमाह—

कफोत्क्लेशश्च हृल्लासः ष्ठीवनं च मुहुर्मुहुः ।
कण्ठास्यहृदयाशुद्धिस्तन्द्रा स्याद्धीनलङ्घिते ॥ २२ ॥

लङ्घनातिक्रमे दोषानाह—

पर्वभेदोऽङ्गमर्दश्च श्वासः शोषो मुखस्य च ।
क्षुन्नाशश्चारुचिस्तृष्णा दौर्बल्यं श्रोत्रनेत्रयोः ॥ २३ ॥
मनसः संभ्रमोऽभीक्ष्णमूर्ध्ववातस्तमो हृदि ।
देहाग्निबलहानिश्च लङ्घनेऽति कृते भवेत् ॥ २४ ॥

लङ्घनगुणाः—

वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे ।
हृदयोद्गारकण्ठास्यशुद्धौ तन्द्राक्लमे गते ॥ २५ ॥

स्वेदे जातेऽरुचौ वाऽपि क्षुत्पिपासासहोद्भवे ।
कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि ॥ २६ ॥
लङ्घनेन क्षयं नीते दोषे संधुक्षितेऽनले ।
विज्वरत्वं लघुत्वं च क्षुच्चैवास्योपजायते ॥ २७ ॥
सोत्क्लेशे बलिने देयं वमनं श्लैष्मिकज्वरे ।
पित्तप्राये विरेकस्तु कार्यः प्रशिथिलाशये ॥ २८ ॥
सरुजेऽनिलजे कार्यं सोदावर्ते निरूहणम् ।
कफाभिपन्ने शिरसि कार्यं मूर्धविरेचनम् ॥ २९ ॥

जलं देयमाह—

तृष्णा गरीयसी घोरा सद्यः प्राणहरी यतः ।
तस्माद्देयं तृषार्ताय पानीयं प्राणधारणम् ॥ ३० ॥
तृषार्तो मोहमायाति मोहात्प्राणान्विमुञ्चति ।
अतः सर्वास्ववस्थासु न क्वचिद्वारि वार्यते ॥ ३१ ॥

एतेषां मन्दपानीयदानम्—

ज्वरे नेत्रामये कुष्ठे मन्दाग्नावुदरे तथा ।
अरोचके प्रतिश्याये प्रसेके श्वयथौ क्षये ॥ ३२ ॥
व्रणे च मधुमेहे च पानीयं मन्दमाचरेत् ।

एतेषां शीतलजलमाह—

मूर्छापित्तोष्मदाहेषु विषे मेहे मदात्यये ॥ ३३ ॥
भ्रमक्लमपरीतेषु मार्गोत्थे वमथौ तथा ।
ऊर्ध्वगे रक्तपित्ते च शीतमम्भः प्रशस्यते ॥ ३४ ॥

एषामुष्णजलपानं शस्तम्—

नवज्वरे प्रतिश्याये पार्श्वशूले गलग्रहे ।
सद्यःशुद्धौ तथाऽऽध्माने व्याधौ वातकफोद्भवे ॥ ३५ ॥
अरुचिग्रहणीगुल्मश्वासकासेषु विद्रधौ ।
हिक्कायां स्नेहपाने च पिबेदुष्णं जलं नरः ॥ ३६ ॥

तत्रोष्णोदकमाह—

पाक्क्राथ्यमानं निर्वेगं निष्फेनं निर्मलं भवेत् ।
अर्धावशिष्टं भवति तदुष्णोदकमुच्यते ॥ ३७ ॥

गुणाः—

कफमेदोऽनिलामघ्नं दीपनं बस्तिशोधनम् ।
श्वासकासज्वरहरं पथ्यमुष्णोदकं सदा ॥ ३८ ॥
अष्टमेनांशशेषेण चतुर्थेनार्धकेन वा ।
अथ वा क्वथनेनैव सिद्धमुष्णोदकं वदेत् ॥ ३९ ॥
तत्पादहीनं वातघ्नमर्धहीनं तु पित्तनुत् ।
त्रिपादहीनं श्लेष्मघ्नं पाचनं दीपनं लघु ॥ ४० ॥
द्वंद्वजे संनिपाते च ज्वरे पथ्ये तदर्तिजित् ।
शरदि चार्धपादोनं पादहीनं तु हैमनम् ॥ ४१ ॥
शिशिरे च वसन्ते च ग्रीष्मे चार्धावशेषितम् ।
विपरीत ऋतौ तद्वत्प्रावृष्यष्टावशेषितम् ॥ ४२ ॥

अन्यच्च—

वसुष्वङ्गेषु बाणेषु वेदेषु त्रिषु पक्षयोः ।
एकभागावशेषं स्यादम्बु वर्षादिषु क्रमात् ॥ ४३ ॥
हेमन्ते शिशिरे वाम्बु सारसं वा तडागजम् ।
वसन्तग्रीष्मयोः कौपं वाप्यं वा नैर्झरं हितम् ॥ ४४ ॥
नाऽऽदेयं वारि नादेयं वसन्तग्रीष्मयोर्बुधैः ॥ ४५ ॥

उक्तं च—

पानीयं पानीयं शरदि वसन्ते च पानीयम् ।
नादेयं नाऽऽदेयं शरदि वसन्ते च नाऽऽदेयम् ॥ ४६ ॥
विषवत्पत्रपुष्पादिदुष्टनिर्झरयोगतः ।
औद्भिदं चाऽन्तरिक्षं वा कौपं वा प्रावृषि स्मृतम् ॥ ४७ ॥
शस्तं शरदि नादेयं नीरमंशूदकं परम् ।
दिवा दिवाकरकरैर्निशाकरकरैर्निशि ॥ ४८ ॥
[१]जुष्टमंशूदकं नाम्ना तोयं दोषत्रयापहम् ।
अनभिष्यन्दि निर्दोषमान्तरिक्षजलोपमम् ॥ ४९ ॥
बल्यं रसायनं मेध्यं शीतं लघु सुधासमम् ।

उष्णोदकपानगुणानाह—

भिनत्ति श्लेष्मसंघातं मारुतं चापकर्षति ॥ ५० ॥

---

१ ग. विषौघ°।

अजीर्णं जनयत्याशु पीतमुष्णोदकं निशि ।

तस्य क्रिया—

धारापातेन विष्टम्भि दुर्जरं पवनाहतम् ॥ ५१ ॥
शृतशीतं त्रिदोषघ्नं बाह्यान्तर्भावशीतलम् ।
दिवा शृतं तु यत्तोयं रात्रौ तद्गुरुतां व्रजेत् ।
रात्रौ शृतं दिवा तत्तु गुरुत्वमधिगच्छति ॥ ५२ ॥

समयान्तरगुणानाह—

आमं जलं पाकमुपैति यामात्पक्वं पुनः शीतलमर्धयामात् ।
पक्वं कदुष्णं तु ततोऽर्धयामात्कालात्रयः पीतजलस्य पाके ॥५३॥
एवं विपक्वदोषस्य ज्वरिणः सप्तमेऽहनि ।
कषायं दातुमिच्छन्ति पाचनं लघुदीपनम् ॥ ५४ ॥

तथोक्तं वृद्धवाग्भटे—

सर्वज्वरेषु दातव्यः कषायः सप्तमेऽहनि ।
अथ वा लङ्घयेत्तावद्यावदारोग्यदर्शनम् ॥ ५४ ॥

निषेधः—

न कषायं प्रशंसन्ति कदाचित्तरुणज्वरे ।
कषायेणाऽऽकुलीभूता दोषा जेतुं सुदुस्तराः ॥ ५५ ॥
यः कषायः कषायः स्यात्स वर्ज्यस्तरुणज्वरे ।
कषायेण कषायेण दोषाः स्युर्दुर्जया ज्वरे ॥ ५६ ॥

*वमने क्रमः—

भोजनान्ते ज्वरे जाते ज्वरितं वामयेद्भिषक् ।
तदन्नमन्यथा तस्योदरे पक्वं प्रबाध्यते ॥ ५७ ॥

तथोक्तं वाग्भटे—

सद्यो भुक्तस्य वा जाते ज्वरे संतर्पणोत्थिते ।
वमनं वमनार्हस्य शस्तमित्याह वाग्भटः ॥ ५८ ॥
वमितं लङ्घयेत्प्राज्ञो लङ्घितं न तु वामयेत् ।
वमनं क्लेशबाहुल्याद्धन्याल्लङ्घनकर्षितम् ॥ ५९ ॥

* क्रम इत्यस्माद इतः पूर्वं ग. पुस्तके—संक्षेपतः क्रियायोगो निदानं परिवर्जयेत् ।

१ क. तदन्यम° ।

गुणाः—

कफमेदोऽनिलामघ्नं दीपनं वस्तिशोधनम् ।
श्वासकासज्वरहरं पथ्यमुष्णोदकं सदा ॥ ३८ ॥
अष्टमेनांशशेषेण चतुर्थेनार्धकेन वा ।
अथ वा क्वथनेनैव सिद्धमुष्णोदकं वदेत् ॥ ३९ ॥
तत्पादहीनं वातघ्नमर्धहीनं तु पित्तनुत् ।
त्रिपादहीनं श्लेष्मघ्नं पाचनं दीपनं लघु ॥ ४० ॥
द्वंद्वजे संनिपाते च ज्वरे पथ्यं तदर्तिजित् ।
शरदि चार्धपादोनं पादहीनं तु हैमनम् ॥ ४१ ॥
शिशिरे च वसन्ते च ग्रीष्मे चार्धावशोषितम् ।
विपरीत ऋतौ तद्वत्प्रावृष्यष्टावशोषितम् ॥ ४२ ॥

अन्यच्च—

वसुष्वङ्गेषु बाणेषु वेदेषु त्रिषु पक्षयोः ।
एकभागावशेषं स्यादम्बु वर्षादिषु क्रमात् ॥ ४३ ॥
हेमन्ते शिशिरे चाम्बु सारसं वा तडागजम् ।
वसन्तग्रीष्मयोः कौपं वाप्यं वा नैर्झरं हितम् ॥ ४४ ॥
नाऽऽदेयं वारि नादेयं वसन्तग्रीष्मयोर्बुधैः ॥ ४५ ॥

उक्तं च—

पानीयं पानीयं शरदि वसन्ते च पानीयम् ।
नादेयं नाऽऽदेयं शरदि वसन्ते च नाऽऽदेयम् ॥ ४६ ॥
विषवत्पत्रपुष्पादिदुष्टनिर्झरयोगतः ।
औद्भिदं वाऽन्तरिक्षं वा कौपं वा प्रावृषि स्मृतम् ॥ ४७ ॥
शस्तं शरदि नादेयं नीरमंशूदकं परम् ।
दिवा दिवाकरकरैर्निशाकरकरैर्निशि ॥ ४८ ॥
जुष्टमंशूदकं नाम्ना तोयं दोषत्रयापहम् ।
अनभिष्यन्दि निर्दोषमान्तरिक्षजलोपमम् ॥ ४९ ॥
बल्यं रसायनं मेध्यं शीतं लघु सुधासमम् ।

उष्णोदकपानगुणानाह—

भिनत्ति श्लेष्मसंघातं मारुतं चापकर्षति ॥ ५० ॥

---

१ ग. मिथोऽ ।

अजीर्णे जरयत्याशु पीतमुष्णोदकं निशि ।

तस्य क्रिया—

धारापातेन विष्टम्भि दुर्जरं पवनाहतम् ॥ ५१ ॥
शृतशीतं त्रिदोषघ्नं बाह्यान्तर्भावशीतलम् ।
दिवा शृतं तु यत्तोयं रात्रौ तद्गुरुतां व्रजेत् ।
रात्रौ शृतं दिवा तत्तु गुरुत्वमधिगच्छति ॥ ५२ ॥

समयान्तरगुणानाह—

आमं जलं पाकमुपैति यामात्पक्वं पुनः शीतलमर्धयामात् ।
पक्वं कदुष्णं तु ततोऽर्धयामात्कालात्रयः पीतजलस्य पाके ॥५३॥
एवं विपक्वदोषस्य ज्वरिणः सप्तमेऽहनि ।
कषायं दातुमिच्छन्ति पाचनं लघुदीपनम् ॥ ५४ ॥

तथोक्तं वृद्धवाग्भटे—

सर्वज्वरेषु दातव्यः कषायः सप्तमेऽहनि ।
अथ वा लङ्घयेत्तावद्यावदारोग्यदर्शनम् ॥ ५४ ॥

निषेधः—

न कषायं प्रशंसन्ति कदाचित्तरुणज्वरे ।
कषायेणाऽऽकुलीभूता दोषा जेतुं सुदुस्तराः ॥ ५५ ॥
यः कषायः कषायः स्यात्स वर्ज्यस्तरुणज्वरे ।
कषायेण कषायेण दोषाः स्युर्दुर्जया ज्वरे ॥ ५६ ॥

*वमने क्रमः—

भोजनान्ते ज्वरे जाते ज्वरितं वामयेद्भिषक् ।
तदन्नमन्यथा तस्योदरे पक्वं प्रबाध्यते ॥ ५७ ॥

तथोक्तं वाग्भटे—

सद्यो भुक्तस्य वा जाते ज्वरे संतर्पणोत्थिते ।
वमनं वमनार्हस्य शस्तमित्याह वाग्भटः ॥ ५८ ॥
वमितं लङ्घयेत्प्राज्ञो लङ्घितं न तु वामयेत् ।
वमनं क्लेशबाहुल्याद्धन्याल्लङ्घनकर्षितम् ॥ ५९ ॥

* क्रम इत्यस्मात् इदमर्धं ग. पुस्तके—संक्षेपतः क्रियायोगो निदानं परिवर्जयेत् ।

१ क. तदन्यम° ।

लङ्घनाद्यैर्विपक्वेषु दोषधातुमलेषु च ।
वह्नौ लघुनि च क्षीणे ज्वरे यूषं प्रदापयेत् ॥ ६० ॥

सन्नौषधदानसमपान्तरगुणागुणाः—

हीनाधिकं भवति भेषजमप्रहीनं
हन्यात्तदामयमसंशयमाशु चैव ।
तद्बालवृद्धयुवतीमृदुभिश्च पीतं
ग्लानिं परां समुपयान्ति बलक्षयं च ॥ ६१ ॥
अनुलोमोऽनिलः स्वास्थ्यं क्षुत्तृष्णा सुमनस्कता ।
*लघुत्वमिन्द्रियोद्गारः शुद्धो जीर्णौषधाकृतिः ॥ ६२ ॥
क्लमो दाहोऽङ्गसदनं भ्रमो मूर्छा शिरोरुजा ।
अरतिर्बलहानिश्च सावशेषौषधाकृतिः ॥ ६३ ॥
औषधशेषे भुक्तं पीतं तथौषधं सशेषेऽन्ने ।
न करोति गदोपशमं प्रकोपयत्यन्यरोगांश्च ॥ ६४ ॥
शीघ्रं विपाकमुपयाति बलं न हन्या-
दन्नावृतं न च पुनर्वदनान्निरेति ।
प्राग्भक्तसेवितमथौषधमेतदेव
दद्याच्च भीरुशिशुवृद्धवराङ्गनाभ्यः ॥ ६५ ॥
क्षुत्संभवति पक्वेषु दोषधातुमलेषु च ।
काले वा यदि वाऽकाले सोऽन्नकाल उदाहृतः ॥ ६६ ॥

अन्यच्च—

आमे पाकं गते नृणां यदा भोजनलालसा ।
भवेत्काले ह्यकाले वा सोऽन्नकाल उदाहृतः ॥ ६७ ॥

अत्र विशेषमाह—

ज्वरितं षडहेऽतीते लङ्घितं लघु भोजयेत् ।
पाचनं शमनीयं वा कषायं पाययेदपि ॥ ६८ ॥
षडहेऽतीत इतिविशेषणं वातज्वरपरं ज्ञेयम् ।
पित्तज्वरे दशाहेऽतीते श्लेष्मज्वरे द्वादशाहेऽतीते ।

---

* 'त्वमयचोद्गारः' इति क. पुस्तके पाठान्तरम् ।

---

अत्र वृद्धवाग्भट्टः—

षड्रवशङ्खादशाहेषु व्यतीतेषु क्रमेण वै ।
वातपित्तकफातङ्केष्वन्नकाला इमे ज्वरः ॥ ६९ ॥
द्वंद्वजे संनिपाते च व्याधावारोग्यदर्शने ।
सति यवागूयूषादि कल्पयेदतिनैपुणात् ॥ ७० ॥

अत्र विदेहः—

सर्वज्वरेषु सप्ताहे मात्रावल्लघु भोजयेत् ।
वेगापायेऽन्यथा तद्धि ज्वरवेगान्विवर्धयेत् ॥ ७१ ॥

इति योगतरङ्गिण्यां सर्वज्वरोपक्रमो नामाष्टपञ्चाशत्तरङ्गः ॥ ५८ ॥

---

अथ नवपञ्चाशत्तरङ्गः ।

---

अथ ज्वरे पथ्यानि—

तत्र शाकानि—

तण्डुलीयकवास्तूकबालमूलकपर्पटान् ।
पटोलतिक्तशाकं च गुडूचीपल्लवान्यपि ॥ १ ॥
कालशाकं निम्बपुष्पं मारीषं वार्षिकाद्वलम् ।
जीवन्ती चापि चाङ्गेरी सुनिषण्णकमाविके ॥ २ ॥
पत्रशाकप्रियाणां तु ज्वरितानां प्रदापयेत् ।

अथान्नम्—

मुद्गान्मसूरांश्चणकान्कुलत्थांश्च मकुष्ठकान् ॥ ३ ॥
यूषार्थं यूषसात्म्यानां ज्वरितानां प्रकल्पयेत् ।

ज्वरे मांसान्याह—

लावतित्तिरवर्तीरकुक्कुटक्रौञ्चवर्तकान् ॥ ४ ॥
कलविङ्कमयूरैणशशचित्रमृगार्भकान् ।
उपचक्रचकोराल्पबस्ततृणमयूरकम् ॥ ५ ॥
दापयेन्मांससात्म्यानां ज्वरितानां यथाबलम् ।

---

१ क. °विकेः । पा° ।

अथ फलानि—

वृन्ताकपीलुकर्कोटपटोलककटिल्लकम् ॥ ६ ॥
फलशाककृते देयं सर्वं निस्नेहमेव च ।

अथ पुराणधान्यम्—

वत्सरोपितधान्यस्य तण्डुला*न्धो ज्वरे हितम् ॥ ७ ॥
रोटिकार्थं प्रदातव्यं द्विवर्षोपितमल्पशः ।
गोधूमादि यथासात्म्यमन्यदप्यल्पमर्पयेत् ॥ ८ ॥

अथ ज्वरे पाचनम्—

यत्पचत्याममाहारं पचेदामं रसं च यत् ।
यदपक्वान्पचेद्दोषांस्तद्धि पाचनमुच्यते ॥ ९ ॥
न शोधयति यद्दोषान्समान्नोदीरयत्यपि ।
समी करोति संवृद्धांस्तत्संशमनमुच्यते ॥ १० ॥

तयोः संप्रदानकालमाह—

पाययेदातुरं सामं पाचनं सप्तमे दिने ।
शमनेनाथवा दृष्ट्वा निरामं समुपाचरेत् ॥ ११ ॥

अथ वातज्वरे शालिपर्ण्यादिः—

शालिपर्णी बला द्राक्षा गुडूची सारिवा तथा ।
आसां क्वाथं पिबेत्कोष्णं तीव्रवातज्वरच्छिदम् ॥ १२ ॥

किरातादिः—

किराताब्दामृतोदीच्यबृहतीद्वयगोक्षुरैः ।
सस्थिराकलशीविश्वैः क्वाथो वातज्वरापहः ॥ १३ ॥

काश्मर्यादिः—

काश्मरीसारिवाद्राक्षात्रायमाणाऽमृताभवः ।
कषायः सगुडः पीतो वातज्वरनिवारणः ॥ १४ ॥

अथ पैत्ते कट्फलादिः—

कट्फलेन्द्रयवारिष्टतिक्तामुस्तैः शृतं जलम् ।
पाचनं दशमेऽह्नि स्यात्तीव्रे पित्तज्वरे नृणाम् ॥ १५ ॥

* क. पुस्तके भिःसा श्री भक्तमन्थोऽग्रमित्यारः ।

१ क. पु. °ताऽमया । क° ।

योगशतात्—

दुरालभापर्पटकप्रियङ्गुभूनिम्बवासाकटुरोहिणीनाम् ।
क्वाथं पिबेच्छर्करयाऽवगाढं तृष्णास्रपित्तज्वरदाहयुक्तः ॥ १६ ॥

वृन्दात्—

एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः ।
किं पुनर्यदि युञ्जीत चन्दनोशीरधान्यकैः ॥ १७ ॥

अथ श्लेष्मजे बीजपूरादिः—

बीजपूरशिफापथ्यानागरग्रन्थिकैः शृतम् ।
सक्षारं पाचनं श्लेष्मज्वरे द्वादशवासरे ॥ १८ ॥

भूनिम्बादिः शार्ङ्गधरात्—

भूनिम्बनिम्बपिप्पल्यः शटी शुण्ठी शतावरी ।
गुडूची बृहती चेति क्वाथो हन्यात्कफज्वरम् ॥ १९ ॥

आमलक्यादिः—

आमलक्यभया कृष्णा चित्रकश्चेत्ययं गणः ।
सर्वज्वरकफातङ्कभेदी दीपनपाचनः ॥ २० ॥

चातुर्भद्रावलेहिका वृन्दात्—

कट्फलं पौष्करं कृष्णा शृङ्गी च मधुना सह ।
श्वासकासज्वरहरः श्रेष्ठो लेहः कफान्तकृत् ॥ २१ ॥

छिन्नोद्भवाम्बुधरधन्वयवासविश्वै-
र्दुस्पर्शपर्पटकमेघकिराततिक्तैः ।
मुस्ताटरूषकमहौषधधन्वयासैः
क्वाथं पिबेदनिलपित्तकफज्वरेषु ॥ २२ ॥

पृथक् पृथक् त्रिमिश्चरणैः क्वथितैः क्वाथैर्वातादिषु योगः ।

सर्वज्वरे गुडूच्यादिः—

अमृतारिष्टकुचन्दनपद्मकधान्योद्भवः क्वाथः ।
ज्वरहृल्लासच्छर्दिस्तृष्णादाहारुचीर्हन्यात् ॥ २३ ॥

अथ वातपित्ते—

पर्पटाब्दामृतोदीच्यकैरातैः साधितं जलम् ।
पञ्चभद्रमिदं प्रोक्तं वातपित्तज्वरापहम् ॥ २४ ॥

त्रिफलाकाश्मरीराम्राराजवृक्षाटरूपकैः ।
शृतमम्बु हरेत्तूर्णं वातपित्तोद्भवं ज्वरम् ॥ २५ ॥

इति वृन्दात् ।

अथ वातश्लेष्मजे क्षुद्रादिः—

क्षुद्राशुण्ठीगुडूचीनां कषायः पौष्करस्य च ।
कफवाताधिके पेयो ज्वरे वाऽपि त्रिदोषजे ॥ २६ ॥

अथाऽऽरोग्यपञ्चकम्—

आरग्वधकणामूलमुस्तातिक्ताभयाकृतः ।
क्वाथः शमयति क्षिप्रं ज्वरं वातकफोद्भवम् ॥ २७ ॥

अथ पित्तश्लेष्मजेऽमृताष्टकम्—

अमृतारिष्टकटुकामुस्तेन्द्रयवनागरैः ।
पटोलचन्दनाभ्यां च शृतं पिप्पलिचूर्णयुक् ॥ २८ ॥
अमृताष्टकमेतच्च पित्तश्लेष्मज्वरापहम् ।

इति शार्ङ्गधरात् ।

पटोलचन्दनमूर्वापाठातिक्तामृतागणः ॥ २९ ॥
पित्तश्लेष्मज्वरच्छर्दिदाहकण्डूविषापहः ।
पटोलं पिचुमन्दं च त्रिफला मधुकं बला ॥ ३० ॥
साधितोऽयं कषायः स्यात्पित्तश्लेष्मभवे ज्वरे ।

अथ संनिपातजे दशमूलादिः—

त्रिरात्रं पञ्चरात्रं वा दशरात्रमथापि वा ॥ ३१ ॥
लङ्घनं संनिपातेषु कुर्यादारोग्यदर्शनात् ।
कण्टकारीद्वयं शुण्ठी धान्यकं सुरदारु च ॥ ३२ ॥
एभिः शृतं पाचनं स्यात् सर्वज्वरनिवारणम् ।
शालिपर्णीपृश्निपर्णीबृहतीद्वयगोक्षुरैः ॥ ३३ ॥
बिल्वाग्निमन्थश्योनाकपाटलाकाश्मरीयुतैः ।
दशमूलमिति ख्यातं क्वथितं तज्जलं पिबेत् ।
पिप्पलीचूर्णसंयुक्तं संनिपातज्वरापहम् ॥ ३४ ॥

---

१ क. ग. °रा शास्त्रमी°।

भार्ग्यादिकाथ आरोग्यदर्पणतः—

भार्गीभूनिम्बनिम्बैर्जलदकटुवचाव्योषवासाविशाला
रास्नानन्तापटोलीसुरतरुरजनीपाटलाटुण्टुकाभिः ।
ब्राह्मीदार्वीगुडूची त्रिवृदतिविषयापुष्करत्रायमाणैः
पाठाऽपामार्गकलिङ्गैस्त्रिफलसटियुतैः कल्पितैस्तुल्यभागैः ॥ ३५ ॥
क्वाथो द्वात्रिंशकाख्यस्त्रिकदशकलितान्संनिपातान्निहन्ति
श्वासं शूलं च हिक्कां कसनगुदरुजाऽऽध्मानमन्यारुजश्च ।
ऊरुस्तम्भान्त्रवृद्धिं गलगदमरुतं सर्वसंधिग्रहार्तिं
हन्यादेकोऽपि सिंहो गजनिवहमिव प्रस्फुरद्दानधारम् ॥ ३६ ॥

अष्टादशाङ्गः—

भूनिम्बदारुदशमूलमहौषधाब्द-
तिक्तेन्द्रबीजधनिकेभकणाकषायः ।
तन्द्राप्रलापकसनारुचिदाहमोहश्वा-
सादियुक्तमखिलं ज्वरमाशु हन्यात् ॥ ३७ ॥

वृन्दात्—

क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत् ।
पूर्वस्यां शान्तवेगायां न क्रियासंकरो हितः ॥ ३८ ॥

चिकित्साकलिकातः—

निम्बाब्ददारुकटुकात्रिफलाहरिद्रा-
क्षुद्रापटोलदलनिष्क्वथितः कषायः ।
पेयस्त्रिदोषजनितज्वरनाशनाय
क्वाथः समं मगधया दशमूलजो वा ॥ ३९ ॥

पञ्चतिक्तकषायः—

क्षुद्रापुष्करभूनिम्बगुडूचीविश्वभेषजैः ।
पञ्चतिक्तकनामाऽयं क्वाथो हन्त्यष्टधा ज्वरम् ॥ ४० ॥

दार्व्यम्बुदौ तिक्तफलत्रिकं च क्षुद्रापटोलीरजनी सनिम्बा ।
क्वाथं विदध्याज्ज्वरसंनिपाते निश्चेतने पुंसि विबोधनार्थम् ॥ ४१ ॥

---

१ ख. "न्यधिकज्व" ।

इति योगशतात्।

अथाष्टाङ्गावलेहिका—

कट्फलं पौष्करं शृङ्गी व्योषं यासश्च कारवी।
श्लक्ष्णं चूर्णीकृतं चैतन्मधुना सह लेहयेत् ॥ ४२ ॥
एषाऽवलेहिका हन्ति संनिपातं सुदारुणम्।
हिक्कां श्वासं च कासं च कण्ठरोधं च घुर्घुरम् ॥ ४३ ॥
एतद्योज्यं कफोद्रेके चूर्णमार्द्रकजे रसैः ॥ ४४ ॥

इत्यष्टाङ्गावलेहिका।

अथ दशमूलाद्यष्टादशाङ्गः—

दशमूली सठी शृङ्गी पौष्करं सदुरालभम्।
शुण्ठी कुटजबीजं च पटोलं कटुरोहिणी ॥ ४५ ॥
अष्टादशाङ्ग इत्येष संनिपातज्वरापहः।
कासहृद्ग्रहपार्श्वार्तिश्वासहिक्कावमीहरः ॥ ४६ ॥

अथ चतुर्दशाङ्गः—

चिरज्वरे वातकफोल्बणे वा त्रिदोषजे वा दशमूलमिश्रः।
किराततिक्तादिगणः प्रयोज्यः शुद्ध्यर्थिने वा त्रिवृताविमिश्रः ४७

वृन्दात्—

किराते नागरं मुस्तं गुडूची चेत्ययं गणः।
भूनिम्बकारवीतिक्तावचाकट्फलजं रजः ॥ ४८ ॥
उद्धूलनं त्रिदोषोत्थे स्वेदाभिष्यन्दजे ज्वरे।
मरिचं पिप्पली शुण्ठी पथ्या लोध्रं सपुष्करम् ॥ ४९ ॥
भूनिम्बकटुकाकुष्ठं कारवीन्द्रयवा सठी।
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥ ५० ॥
प्रस्वेदे कण्ठरोधे च संधिमर्दनमिष्यते।
एतदुद्धूलनं श्रेष्ठं संनिपातहरं परम् ॥ ५१ ॥
स्वेदोद्गमे भृष्टकुलत्थचूर्णैरुद्धूलनं शस्तमिति ब्रुवन्ति।
जीर्णं शकृद्वालवणस्य भाण्डं स्वेदापहं गुण्ठनमुत्तमं हि ॥ ५२ ॥

१ क. °शि। भूर्व।

सारसंग्रहात्—

यवानिका वचा शुण्ठी पिप्पली कारवी तथा ।
एतैरुद्धूलनं शस्तं त्रिदोषोत्थे ज्वरे नृणाम् ॥
अतस्यास्तरणं शस्तं संनिपातमये नृणाम् ॥ ५३ ॥
लङ्घने वालुकास्वेदो नस्यं निष्ठीवनं तथा ।
अवलेहोऽञ्जनं चैव प्राक्प्रयोज्यं त्रिदोषजे ॥ ५४ ॥

अथ वालुकास्वेदः—

खर्परभृष्टपटस्थितकाञ्जिकसंसिक्तवालुकास्वेदः ।
शमयति वातकफामयमस्तकशूलाङ्गभङ्गादीन् ॥ ५५ ॥

अथ नस्यम्—

सैंधवं श्वेतमरिचं सर्षपाः कुष्ठमेव च ।
बस्तमूत्रेण पिष्टानि नस्यात्संज्ञाकराणि च ॥ ५६ ॥

अथ निष्ठीवनम्—

आर्द्रकस्य रसोपेतं सैन्धवं सकटुत्रयम् ।
आकण्ठं धारयेदास्ये निष्ठीवेच्च मुहुर्मुहुः ॥ ५७ ॥
तेनाऽऽस्यहृदयक्लोममन्यापार्श्वशिरोगलान् ।
लीनो ह्याकृष्यते श्लेष्मा लाघवं चास्य जायते ॥ ५८ ॥

अथ शिरीषाद्यञ्जनम्—

शिरीषबीजगोमूत्रकृष्णामरिचसैन्धवैः ।
अञ्जनं स्यात्प्रबोधाय सरसोनशिलावचैः ॥ ५९ ॥
अयोरजः श्वेतलोध्रमञ्जनं मरिचं तथा ।
गोपित्तेन समायुक्तं तन्द्रानाशनमुत्तमम् ॥ ६० ॥
अञ्जनं सम्यगारब्धं मधुसिन्धुशिलोषणैः ।
प्रमोहघ्नं हि भवति भाषितं भिषजां वरैः ॥ ६१ ॥

अथ धातुगतज्वरक्रिया—

रसस्थे रससंशुद्धी रक्तस्थे रक्तमोक्षणम् ।
मांसस्थे रेचनं शस्तं मेदस्थे चासहिष्णुता ॥ ६२ ॥
रेचनं वमनं स्वेदश्चास्थिस्थे स्वेदमर्दने ।
मज्जाशुक्राभयं दृष्ट्वा तमसाध्यं ज्वरं वदेत् ॥ ६३ ॥

इति योगरत्नावल्याम् ।

अथ सिद्धार्थादिः—

सिद्धार्थको वचा हिङ्गु करञ्जः सुरदारु च ।
मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक्कटुत्रयम् ॥ ६४ ॥
प्रियङ्गुश्च शिरीषं च निशा दार्वी समांशतः ।
अजामूत्रेण संपिष्टो गोमूत्रैर्वाऽथ चूर्णितः ॥ ६५ ॥
सर्वज्वरं निहन्त्याशु सिद्धार्थादिः प्रलेपतः ॥ ६६ ॥

अथोद्धूलनं सारसंग्रहात्—

रसविषमरिचमहेशप्रियफलमस्मैकमूचतुर्वसुभिः ।
भागैर्मितमुद्धूलनमिदममितस्वेदशैत्यहरम् ॥ ६७ ॥

अथ दम्भादिक्रियाः—

तप्तायोलाञ्छनं पञ्च मात्वादिषु त्रिदोषजे ।
द्विजाभिषेकमृद्वेवभोजनग्रहजाप्यतः ।
मन्त्ररक्षाविधिः कार्या संनिपाते प्रतिक्रिया ॥ ६८ ॥

इति सामान्यसंनिपातः ।

अथ संधिगादीनां चिकित्सा—

रसः सविश्वसिन्धूत्थः कौलत्थः कुरुतेतराम् ।
आमान्ध्यमनलस्याऽऽशु मारुतामयरुग्जयम् ॥ ६९ ॥
शठीसुरतरूत्तमास्थिरदारुरास्नाः समाः
सनागरसुधान्विताः पिब शतावरीसंयुताः ।
मृदुज्वलनपाचितास्सह पुरेण संधिग्रह-
व्यथापहृतये वृथाशिशिरसेवनं मा कृथाः ॥ ७० ॥
वचाकपचकच्छुराः सहचरामृतामङ्कुराः
धुराह्वघननागरातरुणदारुरास्नापुराः ।
*वृषातरुणभीरुभिः सह भवन्ति संधिग्रह-
व्यथोरुजडिमक्रमभ्रमणपक्षघातद्रुहः ॥ ७१ ॥

इति वचादिक्काथः ।

---

* क. एरण्डः ।

१ क. °र्न पचात्त° ।

## अथ संधिगः—

रास्नैरण्डशिफा विश्वा देवदार्वमृताऽभया ।
जयायाऽऽशु प्रगलमन्ते प्रभञ्जनभुवां रुजाम् ॥ ७२ ॥
सुरदारुशठीसुधालतासुवहाः शुण्ठियुताः शृता जले ।
सपुराः शमयन्ति सेविताः सततं संधिगतं सदागतिम् ॥ ७३ ॥
पथ्याशिवाग्रन्थिकसिंहवक्त्रादिभीतकारग्वधसिद्धमम्भः ।
पीतं सपञ्चाङ्गुलतैलमाशु प्रभञ्जनव्याधिमपाकरोति ॥ ७४ ॥
मुस्तैरण्डप्राणदाबाणदारुच्छिन्नारास्नाभीरुकर्चूरतिक्तम् ।
वासाविश्वापञ्चमूलीयुगाढ्यं हन्यान्मन्यास्तम्भसंधिग्रहार्तीः॥७५॥
संक्षुद्य सर्जरससर्षपसिन्दुवार-
निम्बच्छदाभिशिगद्रा(?)ननले निदध्यात् ।
धूपोऽयमाशु मरुदर्तिमपाकरोति
सिद्धार्थसर्जरसकुन्दुरुनिर्मितो वा ॥ ७६ ॥

इति संधिगः ।

## अथान्तकचिकित्सा—

विहाय वैद्योदितमुष्णवारि सर्वज्वरे ग्रीष्मगदापहारि ।
ज्वराच्छिदं जीवितदं च नित्यं मृत्युंजयं चेतसि चिन्तयस्व ॥७७॥
कर्पूरप्रकरावदातवपुषं सद्योगमुद्राजुषं
शश्वद्भक्तजनेषु भावुकजुषं भालस्फुरच्चक्षुषम् ।
संपूर्णामृतकुम्भसंभृतकरं शुभ्राक्षमालाधरं
पिङ्गोत्तुङ्गजटाकलापरुचिरं चन्द्रार्धमौलिं स्तुहि॥७८॥
भिषग्भिरिति निर्णीतं संनिपातेऽन्तकाभिधे ।
भेषजं जाह्नवीतीरं वैद्यो नारायणो हरिः ॥ ७९ ॥

इत्यन्तकचिकित्सा ।

## अथ रुग्दाहप्रतीकारः—

उशीरजलचन्दनाम्बुधरवर्मविश्वैरयं
षडङ्गगण उल्बणज्वरतृषार्तिदाहामयान् ।
जयेज्जलसहागुहायुगुलगोक्षुरैर्वा परं
किरातजलकम्बुरानलदपर्पटाम्भोधरम् ॥ ८० ॥

१ ग. 'रि ज्वरादिदूषादिग' ।

नृपद्रुकद्रुकामयाकषद्दारुद्राम्नैः
शृतं जलमिति द्रुतं हरति दाहमत्युद्धतम् ।
मृगाङ्कमलयोद्भयागरुतुरुष्कतोयाम्बुद-
स्सराङ्कुशशुरानतैः समधुमिश्च धूपोत्तमः ॥ ८१ ॥
इति धूपः ।

घनाभीरुब्राह्मीकलितरुपलानिम्बजटिला-
जपाद्राक्षाराजद्रुमकुलकपाठीनशकलम् ।
समं मूर्मीनिम्बामलकवृशमूलैरतिबलं
बलाद्व्याधियातं प्रशमयति रुग्दाहमतुलम् ॥ ८२ ॥
एभिः प्रयोगैर्यदि पक्वेष्वपि न शाम्यति ।
यदि दाहस्तदा कुर्यात्सुचिरं शिशिरं विधिम् ॥ ८३ ॥
प्रशमयति दाहमचिराद्रन्धुरकर्कन्धुपल्लवैर्लेपः ।
फेनोऽपि विमलमलयजरसमिश्रोऽरिष्टजः सपदि ॥ ८४ ॥
मलयजद्रवमिश्रितमुलसत्सितिमतत्सलिलेन सहस्रशः ।
हतमलं घृतमङ्गधृतं बलात्तरुणदारुणदाहमपोहति ॥ ८५ ॥
सद्यःस्फुरत्सदरविन्दमरन्दबिन्दु-
संदोहसङ्गसुरभीकृतशुद्धनीराम् ।
उद्यत्तरङ्गतरलीकृतहंसकान्ता-
स्साशु प्रयेत सरसीं तरुचारुतीराम् ॥ ८६ ॥
वरमरकतपुष्परागशुद्धस्फटिककृताखिलतलप्रसंनिवेशाम् ।
नवविकसितनीलशोणशुभ्रोत्पलललिताार्णसमाश्रयेत वापीम् ॥ ८७ ॥
परिरचितरिरंसाशंसियातानुयातै-
रविरतमुपहंसिप्रोज्ज्वला राजहंसैः ।
तटरुहतरुखण्डस्रस्तपुष्पावतंसा
प्रशमयति निकामं दीर्घिका दाहमाशु ॥ ८८ ॥
परिदहद्दुःसहदाहरुग्विधुरितः स्फुरितज्वरवेदनः ।
सुहरिचन्दनलिप्ततनुः स्रजः सरसिजप्रजमुग्रथिता भजेत् ॥ ८९ ॥
लसत्कुसुमकाननद्रुममनोरमक्ष्मातनु-
ज्वलत्कनककान्तिभिः कदलिकाप्रकाण्डैः कृतम् ।

१ प. °व पद्याः ।

विकाशिकमलावलीविहिततल्पशाः*षट्पद-
प्रयुक्तमृदुसीकरं विपुलकायमानं भजेत् ॥ ९० ॥
स्ववदनस्तनमध्यविनिर्जितद्विजपतिद्विपकुम्भमृगाद्विपः ।
युवतयः कथिता दवथुव्यथाप्रशमनाय बुधैः परमौषधम् ॥ ९१ ॥
कृतविमलजलप्लुतिरतिपृथुलस्तनयुगनिहितोत्तमशिशिररसाः ।
ध्रुवमुरसि धृताः क्षणमपि तापज्वरमवदवथुं शमयन्ति सहसा॥९२॥
वाप्यः कमलहासिन्यो जलयन्त्रगृहाः शुभाः ।
नार्यश्चन्दनदिग्धाङ्ग्यो दाहदैन्यहरा मताः ॥ ९३ ॥
मुक्तावलीचन्दनशीतलानां सुगन्धपुष्पाम्बरभूषितानाम् ।
नितम्बिनीनां सुपयोधराणामालिङ्गनान्याशु हरन्ति दाहम्॥ ९४ ॥
कान्ताबाहुलताश्लेषपद्मस्रक्चन्दनादिभिः ।
शान्तदाहः सदा हर्षपूर्णः स्यात्पथ्यभुङ्नरः ॥ ९५ ॥

इति ज्वरदाहप्रतीकारः ।

## अथ चित्तविभ्रमप्रतीकारः—

कणोपणोग्रालवणोत्तमानि करञ्जबीजं क्षणदामलानि ।
पथ्याक्षसिद्धार्थकहिङ्गुशुण्ठीयुतानि बस्ताम्बुविमिश्रितानि ॥९५॥
पिष्ट्वा गुटीयं नयने विधेया प्रचेतनेति प्रथिताऽन्वितार्था ।
चित्तभ्रमापस्मृतिभूतदोषशिरोक्षिरोगभ्रमनाशहेतुः ॥ ९६ ॥
कुम्भो+द्भवतरोरम्भो गुडविश्वाकणान्वितम् ।
निहन्ति नासि नूनं हि चित्तविभ्रमनाशनम् ॥ ९७ ॥
सुरामूर्धजमेषाह्वमधूकमलयोद्भवैः ।
×मरुत्तरुमधून्मिश्रैः पुरपाणिजपांशु‡भिः ॥ ९८ ॥
लोहलामज्जकेलाभिर्धूपश्चित्तभ्रमापहः ।
ग्रहदोषहरः श्रीदः सौभाग्यकर उत्तमः ॥ ९९ ॥
मृद्वीकामरदारुमत्स्यशकलामुस्तामलक्योऽमृता
पथ्यारेवतरामसेन⊙करजोरा◡जीफलैः संयुताः ।
हन्युश्चित्तरुजोऽथ दर्दुरदलाद्राक्षापटोलीपयः
पथ्यापर्पटराजवृक्षकटु÷काशम्बुकपुष्प्यः शृताः ॥ १०० ॥

इति चित्तविभ्रमप्रतीकारः ।

---

* क. स्यामतः षट् । + क. अगस्त्यवृक्षत्वक् । × क. देवदारः क. ‡ नरवस् । ⊙ क. रुद्र-रूक । ◡ क. पटोल: ÷ क. भोगवत्याधिपात इत्यमरः ।

अथ कर्णिकचिकित्सा—

मूर्मध्निचिकित्सामुचितोऽस्य धूपः प्रहर्षदः स्यात्कवलग्रहश्च ।
नस्यं मुखं संजनपथ्यवश्यं लेपस्तु सर्वेषु कृतोऽवलेपः ॥ १ ॥
प्रलेपस्तमस्तं नयत्यल्पमेकः समुद्रिक्तशोफे च रक्तावसेकः ।
विपक्के च शस्त्रक्रिया पूयजिरसा प्रणत्वं गतं चेद्रुतं तच्चिकित्सा॥२॥
निशाविशालाभयमाणिमन्थदार्वीक्षुन्दीमूलकृतप्रलेपः ।
प्रमार्करक्षीरयुतप्रभावाद्धस्तः समस्तोऽप्यथ कर्णकघ्नः ॥ ३ ॥
हिमाद्रिजाहर्पतिमूलसिन्धुपलंकषाः कर्णकमाशु हन्युः ।
लेपेन रोहीतकपीलुसिन्धुपुत्रीन्द्रवल्ली कुडहञ्जिका च ॥ ४ ॥

तुत्थालसर्षपशिलानवसारगन्ध-
कासीसकुष्ठपटुहंसपदीकरञ्जाः ।
लेपात्पलंकषयुताश्च सयावशूकाः
सस्वर्जिकाः सपदि कर्णकवेदनाघ्नाः ॥ ५ ॥

कट्फलकुलित्थकण्डनसुपवीशुण्ठीभिरीतिहा लेपः ।
अथ लवणसोमवल्कलगैरिकसठिनागरैरुदितः ॥ ६ ॥
जम्बीरनीरमर्दितमुग्राविषतिन्दुका*मकासीसम् ।
आसालकतुत्थयुतं कर्णककरिकेसरि प्रथितम् ॥ ७ ॥
मदनफलमातुलुङ्गीमूलामरदारुनागरानलयुक् ।
अपहरति गन्धमूला प्रलेपतः कर्णमूलानि ॥ ८ ॥

गुडदहनगदनिकुम्भाः पुष्करकासीसदिनकरक्षीरैः ।
रविकिरणैरहिमभिदं लेपनमुदितं कठोरकर्णकाजित् ॥ ९ ॥
अशिशिरजलपरिमृदितं मरिचकणालवणजं रजस्त्वरितम् ।
नस्यविधिसेवितं किल कर्णकरुङ्नाशनं कथितम् ॥ ११० ॥
मार्गाजयापुष्करकण्टकारीकटुत्रिकोग्राघनकुण्डलीभिः ।
कुलीरशृङ्गीकटुकारसाभिः कृतः कषायः किल कर्णकघ्नः॥ ११ ॥
दशमूलमत्स्यशकलाचपलात्रिफलामहौषधकिरातयुतम् ।
मरिचं क्वथितमाशु चलादपहन्ति कर्णकरुजः सकलाः ॥ १२ ॥

अथ कण्ठकुब्जचिकित्सा—

फलत्रिकत्र्यूषणमुस्त+कव्वीकलिङ्गसिंहाननशर्वरीभिः ।
क्वाथः कृतः कृन्तति कण्ठकुब्जं कण्ठीरवः कुञ्जरमाशु यद्वत् ॥१३॥

---

* कुष्ठं । + क. मूर्वी ।

विश्वपथ्यावचामुस्ताधान्यकत्तृणकट्फलम् ।
भार्ङ्गीदारुरजःशृङ्गीक्षौद्रहिङ्गुसमन्वितम् ॥ १४ ॥
कफवातमरुच्छूलकण्ठकुब्जहरं परम् ।
अथ गोमूत्रयुङ्मुस्तकट्वीकट्फलवत्सकम् ॥ १५ ॥
किराततिक्ताकणाकुटजकण्टकारीशठी-
कलिङ्गकिलिमाभयाकटुककट्फलाम्भोधरैः ।
विषामलकपुष्करानलकुलीरशृङ्गीवृषै-
र्महौषधसखैरयं जयति कण्ठकुब्जं गणः ॥ १६ ॥

## अथ शीताङ्गचिकित्सा—

भास्वन्मूलं जीरकव्योषमार्ङ्गीव्याघ्रीशृङ्गीपुष्करं गोजलेन ।
सिद्धं सद्यः शीतगात्रार्तिमोहश्वासश्लेष्मोद्रेककासान्निहन्ति ॥
कर्कोटिकाकन्दरजःकुलत्थकृष्णावचाकट्फलकृष्णजीरैः ।
किराततिक्ताग्निककट्फलाम्बुपथ्याभिरुद्वर्तनमत्र शस्तम् ॥ १८ ॥
रसविषमरिचमहेशे*प्रियफलमस्मीकभूचतुर्वसुभिः ।
भागैर्मितमुद्धूलनमिदममितस्वेदशैत्यहरम् ॥ १९ ॥
रसगन्धकद्युमणितीव्रविषं त्रिकटूनि टङ्कणयुतानि मुहुः ।
शिखिसूकराजतिमिपित्तवरैः परिमर्द्य भावितमथाग्निरसैः ॥२०॥
कुटकीकृतं द्विगुणवल्लमितं घनसारजीरककणार्द्ररसैः ।
अतिशैत्यमोहयुतमप्यचिराज्जयति ज्वरं तमपि मृत्युकरम् ॥ २१ ॥
दशमूलाम्भसा सिद्धो दशाङ्गः प्रथितो गणः ।
सार्द्रकः स्वरसः पीतः सादयत्युद्धतं ज्वरम् ॥ २२ ॥

इति शीतगात्रप्रतीकारः ।

## अथ तन्द्रिकचिकित्सा—

निदिग्धिका पुष्करमूलपथ्या विश्वाऽमृता तन्द्रिकरुक्षु पथ्या ।
शुण्ठीकणागस्तिरसोषणानि नस्येन तन्द्राविजयोल्बणानि ॥२३॥
मरिचकणपचम्पचा†रुक्मिहरनागरशर्वरीगवाक्ष्यः ।
छगलकजलकल्किता नितान्तं नसि निहिता ननु तन्द्रिकं जयन्ति ॥
तुरङ्गलालालवणोत्तमेन्दुमनःशिलामागधिकामधूनि ।
नियोजितान्यक्षिणि निश्चितं नृणां तन्द्रां सनिद्रां विनिवारयन्ति ॥

---

* क. कनकफलम् । † क. दारुहरिद्रा ।

किरातविषतिन्दुकाकलकरार्द्रकपूर्ववा-
ऽयवाञ्जयति तन्द्रिकं सुरसजायलीढो रसः ।
अथ त्रिकटुराजिकाकृमिजिदुग्रगन्धारजः
अवेच्छिरसि संततं वपुषि वाऽऽत्मगुप्तान्वितम् ॥ २६ ॥

इति तन्द्रिकप्रतीकारः ।

## अथ प्रलापकचिकित्सा—

सतगरवरतिक्तारेवताम्भोदतिक्ता-
नलदतुरगगन्धाभारती*ह्यारहूराः ।
प्रलपजवृशमूलीशङ्खपुष्प्यः सुवक्ताः
प्रलपनमपहन्युः पानतो नाति दूरात् ॥ २७ ॥
सान्त्वनैरञ्जनैस्तीक्ष्णैर्नस्यैस्तिमिरसेवनैः ।
सर्वतो विकृतं चित्तमस्य प्रकृतिमानयेत् ॥ २८ ॥

इति प्रलापकप्रतीकारः ।

## अथ रक्तष्ठीविप्रतीकारः—

रोहिषधन्वयवासकवासापर्पटगन्धलताकटुकाभिः ।
शर्करया सममेष कषायः संमयति क्षतजप्रशमाय ॥
पद्मकचन्दनपर्पटमुस्ताजातिवरारुणचन्दनवारि ।
शीतकनिम्बयुतं परिपक्वं वारि भवेदिह शोणितहारि ॥ २९ ॥
मधुकमधूकपरूपकवाथश्चन्दनपल्लवदारुसनाथः ।
श्रीपर्णीफलशीतकषायः ससित इह स्यादस्रजयाय ॥
तिल्वकहाटकगैरिकरक्तश्यामासारघ+शुभ्रायुक्तः ।
अञ्जनसिंहमुखस्वरसः संशमयितुमस्रमिहानलसक्तः ॥ ३० ॥

इति रक्तष्ठीविप्रतीकारः ।

## अथ भ्रमनेत्रचिकित्सा—

पिचुमन्दपर्पटपचापटोलीत्रिफलातिक्तनिदिग्धिकाब्दपीताः ।
ज्वरमुग्रतरं विपाच्य पीता अपि चैतन्यहरं हरन्त्यपशीताः ॥ ३१ ॥

* क. ब्राह्मी + क. मधुसिता ।

१ क. °न्यपवायम(प° ।

अरिष्टमुस्तत्रिफलापटोलक्षुद्राहरिद्रासुरदारुकद्वयम् । (?)
विपाच्य पीता मदमोहपित्तज्वरप्रणाशाय भवन्ति सद्यः ॥ ३२ ॥
किराततिक्ताकणराजिकाभिर्मधुप्लुताभिः प्रवरोऽवलेहः ।
मधूकसारोपणरामठोग्रं नस्येऽञ्जने स्यान्मधुसिन्धुकृष्णम् ॥ ३३ ॥
तुरङ्गगन्धालवणोग्रगन्धामधूकसारोपणमागधीभिः ।
मुस्ताम्बुशुण्ठीलशुनान्विताभिर्नस्ये त्वसंभुग्नदृशं करोति ॥ ३४ ॥
पिचुमन्दवचारविमूलमरुत्तरुगन्धवधूतगरागरुभिः ।
मृदुमाल्यसटीलुदसिन्दुकरुग्मधुसर्षपकैरिह धूपवरः ॥ ३५ ॥
इति भुग्ननेत्रप्रतीकारः ।

## अथाभिन्यासचिकित्सा—

अत एव विशेषज्ञैर्मुनिभिश्चरकादिभिः ।
एक एवायमुद्दिष्टः संनिपातात्मको ज्वरः ॥ ३६ ॥
स्नेहोऽवलीढः सितसर्षपाणां सहिङ्गुशृङ्गद्रवशृङ्गबेरः ।
हन्यादभिन्यासगदोग्रशक्तिं यथा विरक्तिं विषयाभिलाषः ॥ ३७ ॥
नस्यं हितं कोष्णजलेन कृष्णाशेफालिकासारविसिन्धु*तीक्ष्णैः ।
रसोनसिन्धूत्थकणोषणोग्राशिरीषगोमूत्रयवाग्रजैर्वा ॥ ३८ ॥
चरणतलालिकमौलिषु दाहाद्गलगर्ददंशनादपि यः ।
नो बुध्यते तु मन्त्रैर्वृश्चिकचरटीविषैर्व्यथयेत् ॥ ३९ ॥
क्षुद्रागन्धपलाशपुष्करजटादुःस्पर्शपद्मारसा-
शृङ्गीभिः क्वथितं पयः प्रशमयत्याश्वेव संज्ञाच्युतिम् ।
त्रायन्तीदशमूलपुष्करवृषव्याघ्रीसटीकारवी-
भार्ग्यैरण्डकटुत्रयामृतलता गोमूत्रसिद्धास्तथा ॥ ४० ॥
सटीक्षुद्राशुण्ठीशिखिमरिचभालूरविकसा-
रसारुक्त्रायन्तीवृषकणवचाभिः शृतजलम् ।
अभिन्यासं हन्यादुपलजिदरिष्टश्वसनाजि-
शैसाक्षुद्राम्बष्ठाः सुरभिजलपक्वास्तमथ वा ॥ ४१ ॥
सजीरकृष्णाकटुतुम्बिहेमवल्कलपत्रासितजीरकोग्रैः
हरीतकीकट्फलरुक्कुलत्थैरुद्धूलनं स्वेदमपाकरोति ॥ ४२ ॥

* क. पुस्तके तीक्ष्णैरिति पाठान्तरम् । तीमः, अकल्कर इति टिप्पनी च ।

१ ग. 'त. विशेष' । २ ग. भस्ता । ३ घ. 'षामाद्री स' । ४ क. 'ग्रमाधु' ।

मार्ङ्गीनिम्बघनामयामृतलतामूनिम्बवासाविषा-
त्रायन्तीकटुकावचात्रिकटुकस्योनाकशाकद्रुमैः ।
रास्नायासपटोलपाटलसटीदार्वीविशालात्रिवृ-
द्ब्राह्मीपुष्करसिंहिकाद्वयनिशाधोऽयक्षदेवद्रुमैः ॥ ४३ ॥
क्वाथोऽयं किल संनिपातनिवहान्द्वात्रिंशकाख्यो महा-
नुद्धर्पान्निजतेजसा विजयते सर्पान्गरुत्मानिव ।
किंवा श्वासबलासकासगुदरुग्हृद्रोगहिक्कामरु-
न्मन्यास्तम्भगलामयार्दितमलावष्टम्भवध्मानपि ॥ ४४ ॥

## अथ संनिपातभैरवो रसः—

लोहाभ्रतारफणिवङ्गविमाकरेभ्यः
शुद्धं रसं त्रिगुणितं समगन्धमिश्रम् ।
संमर्द्य * मेघरवसा + खशिग्रुबिल्व-
ज्वालामुखीजलजजम्बुरसेन यत्नात् ॥ १४५ ॥
सामुद्रसंपिहितनिस्तलकाचकुम्भे
विन्यस्य मन्ददहनेन विपाचयेत्तत् ।
उद्धृत्य तद्विमलविद्रुमचूर्णयुक्त-
मर्कांशमिश्रितविषं विषभृ×द्गराख्यम् ॥ ४६ ॥
संभावयेत्कुटिॐलवञ्जुलतालमूली-
नीलीदलानलनृपद्रुमकालमालैः ।
मुण्डीमुरामदनमालविकांशुमा◡लि-
⊙ मत्तामरद्रुमु )) निमालतिकामधूकैः ॥ ४७ ॥
बीजपूरद्रवेणैव मरिचैश्च समन्वितः ।
रसो वल्लमितः सर्वः संनिपातविघातकृत् ॥ ४८ ॥

इति संनिपातभैरवो रसः ।

## अथ संनिपातारिः—

* क. तण्डुलीयः । + मधुशिग्रुः । × क. भद्रिकेनाख्यम् । ॐ क. तगरम् । ◡ क. मर्क । ⊙ क. धत्तूरः । )) क. जाति ।

१ ग. °मान्यर्धरे° । २ ग. °रक्ष वि° ।

मार्गी पारदगन्धयोरमलयोर्दैयाख्यरूपणा-
देकश्चोज्ज्वलटङ्कणाद्दहनतस्ती*मोजमामृङ्गतः ।
नागोद्दौ चरणोऽहिफेनत इदं संचूर्ण्य भृङ्गद्रवे
स्थाप्यं सप्त दिनान्यथैकमखिलं जेपालनीरेऽपि च॥४९॥
रुद्रेण ज्वरमर्दितं जगदिदं दृष्ट्वा रसो निर्मितः
सेव्यो वल्लमितः क्षणादिह नृणामुग्रां ज्वरार्तिं जयेत् ।
संतापे शिशिरो विधिः समुदितः पथ्ये च शाल्योदनं
दध्ना शर्करयाऽथ दोषवशतो देशर्तुसात्म्येन च ॥ १५० ॥

इति संनिपातारिः ।

इत्यभिन्यासः ।

## अथ जिह्वकः—

कटुतैलारनालाभ्यां कुर्वीत कवलग्रहम् ।
केवलेनाथ वा सद्यः काञ्जिकेनाऽऽस्यशुद्धये ॥ ५१ ॥
किराततिक्ता+कलिङ्गरकु×लिञ्जकर्चूरकृष्णा कटुतैलयुक्ताः ।
श्म्लमुवः संशमयेद्रसज्ञादोषान्सुतो दाशरथिर्यथा ))ऽऽव्यः ॥ ५२ ॥
[ ]शालूरपर्णी◡मालूरमूला⊙मयमधुप्लुता ।
शम्बूकपुष्पीसहिता सेव्या वाचां विशुद्धये ॥ ५३ ॥
क्षुद्रानागरपुष्कराभृतलताब्राह्मीवचासुऱ्वता ।
मार्गीवासकपासपाटिसुर=साक्वाथो जयेज्जिह्वकम् ।
विश्वा(( वर्मविभावरीयुगवरावत्सादनीवारिद-
व्याघ्रीनिम्बपटोलपुष्करजटा÷रुग्दारुभिर्वा कृतः ॥ ५४ ॥
विषमहौषधिमागधिकोषणद्युमणिः-:रक्तकमार्द्रकमर्दितम् ।
क्रमविवर्धितमुद्दलितज्वरस्त्रिपुरभैरव एष रसो वरः ॥ १५५ ॥

इति जिह्वकः ।

## अथाऽऽगन्तुज्वराधिकारः—

आगन्तुजे ज्वरे नैव नरः कुर्वीत लङ्घनम् ॥ ५६ ॥

---

* क. भकलङ्कर: । + क. लाङ्गली । × क. कुरुंदनम् । (( क. पाऽऽशु इति पाठान्तरम् । [ ] क. भाङ्गी ◡ । क. बिल्वमूल । ⊙ क. कुष्ठम् । ꣾ क. गन्धपलाशी काश्मीरे प्रसिद्धः । = क. तुलसी । (( क. पर्पटः । ÷ क. रुग्भिः कषायः कृत इति पाठान्तरम् । :- क. हिङ्गुलः ।

---

१ क. °गा द्दौ च° । २ क. °रणोऽहि° ।

अन्यत्—

लङ्घनं न हितं कामशोकचिन्तामहाज्वरे ।
भयभूतश्रमक्रोधलङ्घनैश्च कृते ज्वरे ॥ ५७ ॥
अभिशापाभिचारोत्थौ ज्वरौ होमादिना जयेत् ।
दानस्वस्त्ययनातिथ्यैरुत्पातग्रहपीडजौ ॥ ५८ ॥
भूतविद्यासमुद्दिष्टैर्बन्धावेशनताडनैः ।
जयेद्भूताभिषङ्गोत्थं मनःसान्त्वैश्च मानसम् ॥ ५९ ॥
औषधीगन्धविषजौ विषपित्तप्रसाधनैः ।
जयेत्कषायैर्मतिमान्सर्वगन्धकृतं भिषक् ॥ १६० ॥
क्रोधजे पित्तजित्काम्या अर्थाः सद्वाक्यमेव च ।
आश्वासेनेष्टलाभेन वायोः प्रशमनेन च ॥ ६१ ॥
हर्षणैश्च शमं यान्ति कामशोकभयज्वराः ।
व्याघ्रचित्रकयातार्तं स्थापयेज्जलमध्यगम् ॥ ६२ ॥
अनया शीतक्रियया भयरोगः प्रणश्यति ।
कामात्क्रोधज्वरो नाशं क्रोधात्कामसमुद्भवः ॥ ६३ ॥
याति ताभ्यामुभाभ्यां वा भयशोकसमुत्थितः ।
विसर्पेण ज्वरो यस्तु यश्च विस्फोटजज्वरः ॥ ६४ ॥
तत्राऽऽदौ सर्पिषः पानं कफपित्तोत्तरे नचेत् ।
निम्बदारुकषायं वा हितं सौमनसं तथा ॥ १६५ ॥
श्रमक्षुधोत्थे भुञ्जीत घृताभ्यक्तं रसौदनम् ।
रोगोत्थानप्रपाकाभ्यां यो ज्वरो जायते नृणाम् ॥ ६६ ॥
शमयेत्पाचयेच्चापि यथा योगैश्चिकित्सकः* ।
अभिघातज्वरी कुर्यात्क्रियामुष्णविवर्जिताम् ॥ ६७ ॥
कषायान्मधुरान्स्निग्धान्यथादोषमथापि वा ।
अभिघातज्वरो नश्येत्पानाभ्यङ्गेन सर्पिषः ॥ ६८ ॥

* ग. पुस्तके चिकित्सक इत्यस्याग्रेऽयं ग्रन्थः—
स्त्रीणामपि प्रजातानां प्रजातानां तथा हितैः ।
स्तन्यावतरणेनैव ज्वरो दोषैः प्रकुप्यति ॥ १ ॥
तस्य प्रशमनं कार्यम् ।

१ ग. °प्रताप° । २ ग. °प्रकोधम° ।

रक्तावसेकैर्मध्यैश्च तथा मांसरसोदनैः ।
अध्वश्रान्तेषु चाभ्यङ्गं दिवा निद्रां च कारयेत् ॥ ६९ ॥
व्यधबन्धश्रमात्यध्वमङ्गभ्रंशसमुद्भवान् ।
ज्वरानुपाचरेत्पूर्वं क्षीरमांसरसोदनैः ॥ ७० ॥

इत्यागन्तुज्वराधिकारः ।

## अथ विषमज्वरः—

विषमज्वरनाशाय चिकित्सा वक्ष्यतेऽधुना ।
विषमेष्वथ कर्तव्यमूर्ध्वं वाऽधश्च शोधनम् ॥ ७१ ॥
शान्तिं नयेत्त्रिवृद्द्राऽपि सक्षौद्रा विषमज्वरम् ।
मधुना वाऽभया लीढा हन्त्याशु विषमज्वरम् ॥ ७२ ॥
वातप्रधानं सर्पिर्भिर्बस्तिभिः सानुवासनैः ।
स्निग्धोष्णैरम्लपानैश्च शमयेद्विषमज्वरम् ॥ ७३ ॥
विरेचनेन पयसा सर्पिषा संस्कृतेन च ।
विषमं तिक्तशीतैश्च ज्वरं पित्तोत्तरं जयेत् ॥ ७४ ॥
वमनं पाचनं रूक्षमन्नपानं च लङ्घनम् ।
कषायोष्णं च विषमज्वरे शस्तं कफोत्तरे ॥ ७५ ॥

इति विषमे क्रिया ।

त्रायन्तीकटुकानन्तासारिवाभिः शृतं जलम् ।
संतताख्ये ज्वरे देयं वातादीनां निवृत्तये ॥ ७६ ॥
द्राक्षापटोलनिम्बाब्दशक्राह्वत्रिफलामृतम् ।
जलं जन्तुः पिबेच्छीतमन्येद्युर्ज्वरशान्तये ॥ ७७ ॥
पटोलारिष्टमृद्वीकाशम्याकत्रिफलावृषैः ।
क्वाथ ऐकाहिकं हन्ति शर्करामधुसंयुतः ॥ ७८ ॥
षोडशाष्टचतुर्भागं वातपित्तकफार्तिषु ।
क्षौद्रं कषाये दातव्यं विपरीता तु शर्करा ॥ ७९ ॥
पटोलेन्द्रयवानन्तापथ्यारिष्टामृताजलम् ।
ज्वरं सततकं पानान्निहन्त्याशु प्रयोजितम् ॥ ८० ॥
उशीरं चन्दनं मुस्तं गुडूची धान्यनागरम् ।
अम्भसा क्वथितं पेयं शर्करामधुयोजितम् ॥ ८१ ॥

---

१ ब, 'मार्गेकभमभ्रष्ट' । २ ग, °र्वं मदिराक्षीरभोजनैः ।

ज्वरे तृतीयके पुंसां तृष्णादाहसमन्विते ।
स्थिरासामलकीद्राक्षाशिवावृषमहौषधैः ॥ ८२ ॥
शृतशीतं जलं दद्यात्सितामधुविमिश्रितम् ।
चातुर्थिकज्वरे तीव्रे मन्दे चैवाथ पावके ॥ ८३ ॥
शैलू*पमण्डनरजः पुरुषानुरूपं
शुभ्राङ्गवत्ससुरभीपयसाऽनुपीतम् ।
आदित्यवारमवपालिदिने नरेण
चातुर्थिकं सुचिरजं जयति क्षणेन ॥ ८४ ॥
कलिङ्गकः पटोलस्य पत्रं कटुकरोहिणी ।
पटोलं सारिवामुस्तं पाठा कटुकरोहिणी ॥ ८५ ॥
निम्बं पटोलं त्रिफला मृद्वीका मुस्तवत्सकौ ।
किराततिक्तममृताचन्दनं विश्वभेषजम् ॥ ८६ ॥
गुडूच्यामलकं मुस्तमर्धश्लोकसमापिताः ।
कषायाः शमयन्त्याशु पञ्च पञ्चविधं ज्वरम् ॥ ८७ ॥
कल्कः शिरीषपुष्पस्य रजनीद्वयसंयुतः ।
नस्यैः सर्पिः समायोगाज्ज्वरं चातुर्थिकं जयेत् ॥ ८८ ॥
अगस्तिपत्रस्वरसेन नस्यं निहन्ति चातुर्थिकमुग्रवीर्यम् ।
सहदेव्याया मूलं विधिना कण्ठे निबद्धमपहरति ॥ ८९ ॥
एकाह्नित्रिचतुर्भिर्दिवसैर्भूतज्वरं पुंसाम् ॥ ९० ॥
सरस्वतीनदीतीरे अपुत्रो ब्राह्मणो मृतः
चातुर्थज्वरनाशाय इदमस्तु तिलोदकम् ॥ ९१ ॥

इति मन्त्रेण तर्पणं १०००० कुर्यात् ।

सितवर्षाभवमूलं पयसा पीतं च पैत्तिकं जयति ।
चातुर्थिकं सुचिरजं ताम्बूलेनैव भक्षणादथ वा ॥ ९२ ॥
कृष्णामलकीरामठदार्वीवचासर्षपरसोनैः ।
छागलमूत्रपिष्टैर्नस्यं त्वैकाहिकादिहरम् ॥ ९३ ॥
क्षीराविकाज्वरविमर्दकसत्रपानां
मूलं ज्वरापहमवश्यमिदं शिखायाम् ।

* क. लूः ।

१ ग. °नं दिने न चा° । २ ग. °समापनाद् । का° ।

षष्ठं दिवाकरदिने यदिवाऽष्टमीषु
　रात्रिज्वरं हरति रक्षितसूत्रबद्धम् ॥ १४ ॥
शृतं पयः शर्करा च पिप्पल्यो मधुसर्पिषी ।
पञ्चसारमिदं देयं मथितं विषमज्वरे
क्षतक्षीणे क्षये कासे हृद्रोगे चोपदिश्यते ॥ १९५ ॥
मुस्तामलकगुडूचीविश्वौषधकण्टकारिकाक्वाथः ।
पीतः सकणाचूर्णः समधुर्विषमज्वरं हन्ति ॥ ९६ ॥

इति मुस्तादिक्वाथः ।

## अथ पिप्पलीवर्धमानम्—

महाबलामूलमहौषधाभ्यां क्वाथो निहन्याद्विषमज्वरं हि ।
शीतं सकम्पं परिदाहयुक्तं विनाशयेद्द्वित्रिदिनप्रयोगात् ॥ ९७ ॥
रसोनकल्कं तिलतैलमिश्रं योऽश्नाति नित्यं विषमज्वरार्तः ।
विमुच्यते सोऽप्यचिराज्ज्वरेण वातामयैश्चापि सुघोररूपैः ॥ ९८ ॥
जीरकं गुडसंयुक्तं विषमज्वरनाशनम् ।
अग्निमान्द्यं जयेच्छीघ्रं वातरोगापहं मतम् ॥ ९९ ॥
कालाजाजी तु सगुडा विषमज्वरनाशिनी ।
मधुना चामया लीढा हन्त्याशु विषमज्वरम् ॥ २०० ॥

का० मगरैल इति लोके सा च किंचिद्भृष्टा गुडतुल्या कर्षमिता भक्षणीया ।

पीतो मरिचचूर्णेन तुलसीपत्रजो रसः ।
द्रोणपुष्पीभवो वाऽपि निहन्ति विषमज्वरान् ॥ १ ॥
क्षीरेण पञ्चवृध्या* वा सप्तवृद्ध्याऽथ वा कणाः ।
पिबेत्पिष्ट्वा दश दिनं तास्तथैवापकर्षयेत् ॥ २ ॥
एवं विंशद्दिनैः सिद्धं पिपलीवर्धमानकम् ।
अनेन पाण्डुवातास्रकासश्वासारुचिज्वराः ।
उदरार्शःक्षयश्लेष्मवाता नश्यन्त्युरोग्रहाः ॥ ३ ॥
त्रिभिरथ परिवृद्धं पञ्चभिः सप्तभिर्वा
　दशभिरथ विवृद्धं पिप्पलीवर्धमानम् ।

---

* ग. पुस्तके °द्ध्या प्रवृद्धमाशाभिः कणा पिबेत् । यावत्पूर्णं शतं तस्यास्ता तथैवापकर्षयेत् ।

इति पिबति पयो यस्तस्य न श्वासकास-
ज्वरजठरगुदार्शोवातरक्तक्षयाः स्युः ॥ ४ ॥

इति वृन्दात् ।

ऊर्णनाभिस्थजालेन कज्जलं ग्राहयेत्ततः ।
अञ्जयेन्नेत्रयुगुलं ऽयाहिकं तु ज्वरं हरेत् ॥ ५ ॥

इति पिप्पलीवर्धमानम् ।

अथ क्षुद्रादिः—

सुरा समण्डाः पानार्थं भक्ष्यार्थं चरणायुधाः ।
तित्तिराश्च मयूराश्च प्रयोज्या विषमज्वरे ॥ ६ ॥
सैन्धवं पिप्पलीनां च तण्डुलाः पष्टितण्डुलाः ।
नेत्राञ्जनं तिलाः पिष्टा नश्यन्ति विषमज्वरम् ॥ ७ ॥
निम्बपत्रं वचा कुष्ठं पथ्या सिद्धार्थकं घृतम् ।
विषमज्वरनाशाय गुग्गुलुश्चेति धूपनम् ॥ ८ ॥
बैडालं वा शकृद्योज्यं वेपमानस्य धूपने ।
सहदेवीवचामद्रानाकुलीभिः प्रधूपनम् ॥ ९ ॥
प्रदेहोद्वर्तने कुर्यादेभिर्वा ज्वरशान्तये ।
मसूरातिसिकैर्धूपः सर्वज्वरग्रहापहः ॥ १० ॥
पलंकषावचाकुष्ठनिम्बपत्रयवैर्घृतैः ।
पथ्यासिद्धार्थकैर्धूपः शस्तः सर्वज्वरापहः ॥ ११ ॥
पुरध्यामवचासर्जनिम्बार्कागरुदारुभिः ।
सर्वज्वरहरो धूपः श्रेष्ठोऽयमपराजितः ॥ १२ ॥

इत्यपराजितो धूपः—

रुद्रजटा गोशृङ्गबिडालविठोरगस्य निर्मोकः ।
मदनफलं भूतकेशी वंशत्वग्रुद्रनिर्माल्यम् ॥ १३ ॥
घृतयवमयूरचन्द्रकच्छागरोमाणि सर्षपाः सवचाः ।
हिङ्गुभवास्थिमरीचाः समभागाश्छागमूत्रसंपिष्टाः ॥ १४ ॥
धूपनविधिना शमयन्त्येतान्सर्वज्वरान्नियतम् ।
ग्रहशाकिनीपिशाचप्रेतविकारानयं धूपः ॥ १५ ॥

इति माहेश्वरो धूपः ।

---

१ क. °रा विष्किराः पथ्याः कुक्कुटा वि° ।

ज्वरवेगं च कालं च चिन्तयञ्ज्वर्यते तु यः ।
तस्येष्टैरद्भुतैर्वाऽपि विषयैर्नाशयेत्स्मृतिम् ॥ १६ ॥
संततं विषमं वाऽपि क्षीणस्य सुचिरोत्थितम् ।
ज्वरं संभोजनैः पथ्यैर्ज्वरघ्नैः समुपाचरेत् ॥ १७ ॥
क्षुद्रानागरमुस्तपर्पटघनाभूनिम्बनिम्बामृता-
भार्गीचन्दनपुष्कराह्वकुलकैस्तिक्ताटरूपान्वितैः ।
पद्माख्येन्द्रयवान्वितैश्च रचितः क्वाथो निपीतः प्रगे
शीताद्यं ज्वरमुच्छिनत्ति विषमं त्रिद्वयेकपक्षोद्भवम् ॥ १८ ॥

इति क्षुद्रादिः ।

## अथ दार्व्यादिः—

दार्वीदारुकलिङ्गलोहितलताशम्याकपाठासठी-
शौण्डीवीरकिरातवारणकणात्रायन्तिकापद्मकैः ।
उग्राधान्यकनागराब्दसरलैः शिग्रुधम्नुसिंहीशिवा-
व्याघ्रीपर्पटदर्भमूलकटुकानन्तामृतापुष्करैः ॥ १९ ॥
धास्तुस्थं विषमं त्रिदोषजनितं चैकाहिकं द्व्याहिकम् ।
क्वाथो हन्ति तृतीयकं ज्वरमयं चातुर्थिकं भूतजम् ॥ २० ॥

इति दार्व्यादिः । आरोग्यदर्पणात् ।

## अथ शृङ्ग्यादिचतुःषष्टिकक्वाथः—

शृङ्गीरामठरामसेनरजनीरुग्रेणुकारोहिणी-
रास्नैरण्डरसोनदारुरजनीराजद्रुराजीफलैः ।
त्रायन्तीत्रिवृताहुताशननतानन्तामृतामुञ्जिता
दन्तीतुम्बुरुचित्रतण्डुलत्रुटित्वचितक्तनक्तंचरैः ॥ २१ ॥
वासावत्सकबीजवासवसुराबल्यावरीवह्निजं
ब्राह्मीब्राह्मणयष्टिवारणकणाविश्वावयस्थाविषैः ।
मूर्वामालविकासमूलमगधामुस्ताजमोदाद्वयं
मिश्रेपागकचन्दनैः सचविकास्फोतावचाकट्फलैः ॥ २२ ॥
इत्येतैर्दशमूलशुण्ठिसहितैः क्वाथश्चतुःषाष्टिकः ।
शृङ्ग्यादि[illegible]भिषजा सर्वामयोन्मूलने ॥

---

१ म. [illegible] । २ क. [illegible] ।

पुंसामष्टविधज्वरार्तिशमने वाताग्निसंधुक्षणे ।
सर्वाङ्गेषु समीरणत्रिपथगे शार्दूलविक्रीडितम् ॥ २३ ॥

इति शृङ्ग्यादिचतुःषष्टिकक्वाथः—

अथ कल्याणकं घृतम्–

ज्वराः कषायैर्वमनैर्लङ्घनैर्लघुभोजनैः ।
रूक्षस्य ये न शाम्यन्ति तेषां सर्पिर्भिषग्जितम् ॥ २४ ॥
विडङ्गमुस्तत्रिफलामञ्जिष्ठादाडिमोत्पलैः ।
श्यामैलावालुकैलाभिश्चन्दनामरदारुभिः ॥ २५ ॥
बर्हिष्ठकुष्ठरजनीपर्णिनीसारिवाद्वयैः ।
हरेणुकात्रिवृद्दन्तीवचातालीसपत्रकैः ॥ २६ ॥
बलाविशालाबृहतीमालतीपृश्निपर्णिभिः ।
नतैश्च कार्षिकैः कल्कैर्घृतप्रस्थं विपाचयेत् ॥ २७ ॥
चतुर्गुणेन पयसा द्विगुणेन जलेन च ।
एतत्कल्याणकं नामसर्पिरुक्तं त्रिदोषनुत् ॥
विषमज्वरसश्वासकासगुल्मोदरापहम् ॥ २८ ॥

इति कल्याणकं घृतम्—

अथ लघुषट्पलं घृतम्–

विश्वाग्निचव्यमगधामगधाजटाभि-
राभिः पलप्रमितिभिः सयवाग्रजाभिः ।
सर्पिः शृतं पयसि षट्पलमेतदर्शः-
प्लीहोदरज्वरिषु गुल्मिषु पथ्यमुक्तम् ॥ २९ ॥

इति लघुषट्पलं घृतम्—

अथ महाषट्पलं घृतम्–

पूतीकाग्निकपञ्चकोलरुचकैः साजाजियुग्मोद्भिदैः
सक्षारैः सविडैः सहिङ्गुहपुषासिन्धूद्भवैः कल्कितैः ।
सूक्तेनाऽऽर्द्रकसंभवेन च रसेनैतन्महाषट्पलम्
सर्पिः पक्वमरोचकाग्निसहनप्लीहज्वरश्वासजित् ॥ ३० ॥

इति महाषट्पलं घृतम्—

---

१ ग. "ज्रियुग्मोद्भि" ।

## अथ जीर्णज्वरप्रकरणम्—

यो द्वादशेभ्यो दिवसेभ्य ऊर्ध्वं दोषत्रयेभ्यो द्विगुणेभ्य ऊर्ध्वम् ।
नृणां तनौ तिष्ठति मन्दवेगो भिषग्भिरुक्तो ज्वरजीर्ण एषः॥३२॥

त्रिसप्ताहं विलीनस्तु ज्वरो यस्तनुतां गतः ।
प्लीहाग्निसादं कुरुते स जीर्णज्वर उच्यते ॥ ३३ ॥
जीर्णज्वरी नरः कुर्यान्नोपवासं कदाचन ।
लङ्घनात्स भवेत्क्षीणो ज्वरस्तु स्याद्बली यतः ॥ ३४ ॥

निदिग्धकानागरकामृतानां क्वाथं पिबेन्मिश्रितपिप्पलीकम् ।
जीर्णज्वरारोचककासशूलश्वासाग्निमान्द्यार्दितपीनसेषु ॥ ३५ ॥
हन्त्यूर्ध्वजानयं प्रायः सायं तेनोपयुज्यते ॥ ३६ ॥

इति निदिग्धिकादिः ।
पिप्पलीचूर्णसंयुक्तः क्वाथश्छिन्नोद्भवोद्भवः ।
जीर्णज्वरकफध्वंसी पञ्चमूलकृतोऽथ वा ॥ ३७ ॥
अमृतायाः कषायं तु शीतलीकृतमीरितम् ।
मधुपादयुतं पीतं जीर्णज्वहरं परम् ॥ ३८ ॥
पिप्पलीमधुसंमिश्रं गुडूचीस्वरसं पिबेत् ।
जीर्णज्वरकफप्लीहकासारोचकनाशनम् ॥ ३९ ॥
जीर्णज्वरेऽग्निमान्द्ये च शस्यते गुडपिप्पली ।
कासाजीर्णारुचिश्वासहृत्पाण्डुक्रिमिरोगनुत् ॥ ४० ॥
द्विगुणः पिप्पलीचूर्णाद्गुडोऽत्र भिषजां मतः ।
पिप्पलीमधुसंयुक्ता मेदःकफविनाशिनी ॥ ४१ ॥
श्वासकासज्वरहरी पाण्डुप्लीहोदरापहा ।

### अथ चूर्णानि—

### अथ द्राक्षादिचूर्णम्—

द्राक्षामृता शठी शृङ्गी मुस्तकं रक्तचन्दनम् ॥ ४२ ॥
नागरं कटुका पाठा मूनिम्बः सदुरालभा ।
उशीरं धान्यकं पद्मं वालकं कण्टकारिका ॥ ४३ ॥

---

१ प. °ठी शुण्ठी मु° ।

पुष्करं पिचुमन्दं च द्राक्षाद्यङ्गमिदं स्मृतम् ।
जीर्णज्वरारुचिश्वासकासश्वयथुनाशनम् ॥ ४४ ॥

इति द्राक्षादिचूर्णम् ।

अथाऽऽमलक्यादि—

आमलं चित्रकं पथ्या पिप्पली सैन्धवं तथा ।
चूर्णितोऽयं गणो ज्ञेयः सर्वज्वरहरः परः ॥ ४५ ॥
भेदी रुचिकरः श्लेष्महर्ता दीपनपाचनः ।

इत्यामलक्यादि ।

अथानन्तादिचूर्णम्—

अनन्ता बालकं मुस्ता नागरं कटुरोहिणी ॥ ४६ ॥
सुखाम्बुना मागुपयात्पिबेदक्षसमं रजः ।
एतत्सद्यो ज्वरान्हन्ति दीपयत्याशु चानलम् ॥ ४७ ॥

इत्यनन्तादिचूर्णम् ।

अथ नारायणाख्यं चूर्णम्—

पर्णी व्याघ्यौ निशे षट्कटुनतमधुकोऽग्नीन्द्रतिक्ताम्बुमूर्वा-
त्रायन्त्युग्रालयष्ट्यामराहिमकटुजत्र्यक्तुगाथात्र शिग्रुः ।
तोये मृन्मूलनिम्बामृतकुलकरजो दीप्यपद्माख्यपौष्कं
मार्गीतालीसजाख्यं कृमिहसटिचला जातिकोशं विषा च ॥ ४८ ॥
कैरातं सर्वतोऽर्धं दलितमिति मतं नाम नारायणाख्यम् ।
चूर्णं त्वष्टज्वरघ्नं सह हिमपयसा पीतमात्मानुरूपम् ॥ ४९ ॥

इति नारायणाख्यं चूर्णम् ।

अथ सुदर्शनं चूर्णम्—

मार्गीषट्कटुनिम्बवल्कुटजोशीराब्दतिक्तामृता
मूर्वात्रानतशीतपद्मकविषादीप्येन्द्रयष्टीबलाः ।
काकोली कचपौष्करामरसटी थेडा लवङ्गं निशे
क्षुद्रे जीवकपुण्डरीककृपमस्त्रायन्तिकापर्पटम् ॥ ५० ॥
जातीकोशसुराष्ट्रजादलशुभासोम्पापटोलीत्वचः
शिग्रोर्बीजमनन्तया सह गुहातालीसमेषां रजः ।

१ ग. °त्वरंज्व° । २ ग. °त्वक्षुण्णपत्र ।

सर्वार्धेन किरातकेन मिलितं शीतादि पाष्टौ ज्वरान्
चूर्णं हन्ति सुदर्शनं किल चतुष्पञ्चाशतं भेषजैः ॥ २५१ ॥

इति सुदर्शनं चूर्णम् ।

अथ लघुसुदर्शनं चूर्णम्—

गुडूची पिप्पलीमूलं कणा तिक्ता हरीतकी ।
नागरं देवकुसुमं निम्बत्वक्चन्दनं तथा ॥ ५२ ॥
सर्वचूर्णस्य चार्धांशं कैरातं प्रक्षिपेत्सुधीः ।
एतत्सुदर्शनं चूर्णं लघु दोषत्रयापहम् ॥
ज्वरांश्च निखिलान्हन्यान्नात्र कार्या विचारणा ॥ ५३ ॥

इति लघुसुदर्शनं चूर्णम् ।

अथ तालीसाद्यं चूर्णम्—

तालीसोषणविश्वपिप्पलितुगाः कर्षाभिवृद्धास्त्रुटिः
कर्षार्धा त्वगपि प्रकामधवला द्वात्रिंशकर्षा सिता ।
तालीसाद्यमिदं सुचूर्णमरुचावाध्मानमन्दानल-
श्वासच्छर्द्यतिसारशोषकसनप्लीहज्वरे शस्यते ॥ ५४ ॥

इति तालीसाद्यं चूर्णम् ।

अथ सितोपलाद्यं चूर्णम्—

चूर्णं षोडशकुञ्जराब्धिनयनक्ष्माभागभाजः सिता
वांशीभागधिकात्त्रुटिस्त्वच इह क्षौद्राज्ययुक्तं भगे ।
लीढं हन्ति सितोपलादिकमिदं सर्वाङ्गदाहं क्षयं
पार्श्वार्तिं ज्वररक्तपित्तकसनश्वासाग्निमान्द्यारुचीः ॥५५॥

इति सितोपलाद्यं चूर्णम् ।

अथ जीर्णज्वरे तैलानि—

षट्तक्रतैलम्—

सुवर्चिकानागरकुष्ठमूर्वालाक्षानिशालोहितयष्टिकाभिः ।
तैलं ज्वरे षड्गुणतक्रसिद्धमभ्यञ्जनाच्छीतविदाहनुत्स्यात् ॥५६॥
दध्नो रसः ससारः स्यात् षट्तक्रे तक्रमुत्तमम् ।

इति षट्तक्रतैलम् ।

---

१ क. °रवातपि°

अथ लाक्षारसविधिः—

वृक्षांशं लोध्रमादाय तद्दशांशां च सर्जिकाम् ॥ ५७ ॥
किंचिच्च बदरीपत्रं वारि षोडशधा स्रुतम् ।
वस्त्रपूतो रसो ग्राह्यो लाक्षायाः पादशेषतः ॥ ५८ ॥

इति लाक्षारसविधिः ।

अथ लघुलाक्षातैलम्—

लाक्षाहरिद्रामञ्जिष्ठाकल्कैस्तैलं विपाचयेत् ।
षड्गुणेनाऽऽरनालेन दाहशीतज्वरापहम् ॥ ५९ ॥

इति लघुलाक्षातैलम् ।

अथ बृहल्लाक्षादितैलम्—

तैलं लाक्षारसं क्षीरं पृथक्प्रस्थं समं पचेत् ।
चतुर्गुणेऽरिते क्वाथे द्रव्यैरेतैः पलोन्मितैः ॥ २६० ॥
लोध्रकट्फलमञ्जिष्ठामुस्तकेसरपद्मकैः ।
चन्दनोत्पलयष्ट्याह्वैस्तैलं गण्डूषधारणात् ॥ ६१ ॥
दन्तरोगाः प्रणश्यन्ति लेपात्सर्वज्वराञ्जयेत् ।
एतल्लाक्षादिकं तैलं बलपुष्टिप्रदायकम् ॥ ६२ ॥

इति बृहल्लाक्षादितैलम् ।

मध्यमलाक्षातैलम्—

तैलं प्रस्थमितं चतुर्गुणजतुक्वाथं चतुर्मस्तुरुक्-
यष्टीदारुनिशाब्दमूर्वकटुका मिश्यश्च कौन्तीहिमैः ।
रास्नाह्वैः पिचुसंमितैः कृतमिदं शस्तं तु जीर्णज्वरे
सर्वेऽस्मिन्विषमेऽपि यक्ष्मणि शिशौ वृद्धे सगर्भासु च॥६३॥

इति मध्यमलाक्षातैलम् ।

षट्चरणतैलम्—

लाक्षामधुकमञ्जिष्ठामूर्वाचन्दनसारिवा ।
तैलं षट्चरणं नाम चाभ्यङ्गाज्ज्वरनाशनम् ॥ ६४ ॥

इति षट्चरणतैलम् ।

अथाङ्गारकं तैलम्—

लाक्षामूर्वे हरिद्रे द्वे मञ्जिष्ठा चेन्द्रवारुणी ।
बृहतीसैन्धवं कुष्ठं रास्ना मांसी शतावरी ॥ ६५ ॥

आरनालाढकेनात्र तैलप्रस्थं विपाचयेत् ।
तैलमङ्गारकं नाम सर्वज्वरविमोक्षणम् ॥ ६६ ॥

इत्यङ्गारकं तैलम् ।

अथ दाहज्वरप्रतीकारः—

दाहाभिभूते तु विधिं कुर्याद्दाहविनाशनम् ।
मधुफाणितमिश्रेण निम्बपत्राम्भसाऽपि वा ।
दाहज्वरार्तं मतिमान्वामयेत्क्षिप्रमेव तु ॥ ६७ ॥
उत्तानसुप्तस्य गभीरमध्यं कांस्यादिपात्रं विनिधाय नाभौ ।
तत्राम्बुधारा बहुला पतन्ती निहन्ति दाहं त्वरितं सुशीता ॥६८॥
वाप्यः कमलहासिन्यो जलयन्त्रगृहाः शुभाः ।
नार्यश्चन्दनदिग्धाङ्ग्यो दाहदैन्यहरा मताः ॥ ६९ ॥
शृतशीतमथितपेषितमदनफलालेपनं सद्यः ।
अपनयति दाहमुग्रं ज्वरजं हस्ताङ्घ्रिमूर्धतले ॥ २७० ॥
शतधौतघृताभ्यक्तं दिहेद्वा यवसक्तुभिः ।
कोलामलकसंयुक्तैरन्याम्लेन च बुद्धिमान् ॥ ७१ ॥
अम्लपिष्टैः सुशीतैर्वा पलाशतरुजैर्दिहेत् ।
बदरीपल्लवोत्थेन फेनेनारिष्टकेन वा ॥ ७२ ॥
दाडिमं बदरं लोध्रं कपित्थं बीजपूरकम् ।
पिष्ट्वा मूर्ध्नि प्रलेपोऽयं पिपासादाहनाशनः ॥ ७३ ॥

अथ सप्तधातुगतज्वरचिकित्सा—

रसस्थे तु ज्वरे तस्मिन्कुर्याद्वमनलङ्घने ।
सेकसंशमनालेपरक्तमोक्षानसृग्गते ॥ ७४ ॥
तीक्ष्णान्विरेकांश्च तथा कुर्यान्मांसगते ज्वरे ।
मेदोगे मेदसो नाशमस्थिस्थे वातनाशनम् ॥ ७५ ॥
बस्तिकर्म प्रयोक्तव्यमभ्यङ्गोन्मर्दनं तथा ।
मज्जशुक्रे क्रिया नोक्ता मरणं तत्र भाषितम् ॥ ७६ ॥
कटुका रोहिणी मुस्ता पिप्पलीमूलमेव च ।
हरीतकी च तत्तोयमामाशयगते ज्वरे ॥ ७७ ॥

इति सप्तधातुगतज्वरचिकित्सा ।

---

१ क. 'इयं कान्तमासनम्।'

अथ रसाः—

एक भागो रसो भागद्वयं शुद्धं च गन्धकम् ।
विषस्य च त्रयो भागाश्चतुर्भागा हि*मावती ॥ ७८ ॥
जेपालजाः पञ्च भागा निम्बुद्रवविमर्दिताः ।
कृमिघ्नप्रमिता वट्यः कार्याः सर्वज्वरच्छिदः ॥ ७९ ॥
शृङ्गबेरेण दातव्या वटिकैका दिनानने ।
जीर्णज्वरे तथा जीर्णे सामे वा विषमे तथा ॥ ८० ॥
सर्वज्वरं निहन्त्याशु दावो वनमिवानलः ।

इति सर्वज्वरारिः ।

अथ संनिपाते वीरभद्राख्यो रसः—

त्र्यूषणं पञ्चलवणं शतपुष्पा द्विजीरकम् ॥ ८१ ॥
क्षारत्रयं समांशेन चूर्णमेषां पलत्रयम् ।
शुद्धसूतं मृतं चाभ्रं गन्धकं च पलं पलम् ॥ ८२ ॥
आर्द्रकस्य रसैः खल्वे दिनमेकं विमर्दयेत् ।
वीरभद्रो रसः ख्यातो माषकः संनिपातजित् ॥ ८३ ॥
चित्रकार्द्रकसिन्धूत्थमनुपानं जलैः सह ।
पथ्यं क्षीरोदनं देयं द्विवारं च रसो हितः ॥ ८४ ॥

इति संनिपाते वीरभद्राख्यो रसः ।

अथ ब्रह्मास्त्ररसः—

ब्रह्मास्त्रमथ वक्ष्यामि सद्यः प्रत्ययकारकम् ।
भस्म सूतं त्रिगन्धं च तत्समं गरलं स्नुहेः ॥ ८५ ॥
त्रिभिः समं विषं योज्यं मरिचं सर्वतुल्यकम् ।
वराहकेकिमहिषपित्तैः सप्तविभावितम् ॥ ८६ ॥
लाङ्गल्या देवदाल्या च ज्वालामुख्यार्द्रकद्रवैः ।
एकविंशतिधा भाव्यं प्रत्येकं घर्मशोषितम् ॥ ८७ ॥
द्विगुञ्जामात्रनस्येन मृतमुत्थापयेद्ध्रुवम् ।
दध्यन्नं ससितं पथ्यमुपचाराश्च शीतलाः ॥ ८८ ॥

* क. हेमाह्वाकनकक्षीरी हेमदुग्धा हिमावती ।

सर्वोदरगदघ्नोऽयमसाध्यमपि साधयेत् ।
अस्थिशूलानि सर्वाणि नाशयत्येव सर्वथा ॥ ८९ ॥

इति महाज्वरसः—

## अथ विद्याधररसः—

रसो गन्धस्ताम्रं त्रिकटु कटुका टङ्कणवरा
त्रिवृद्दन्ती हेम द्युमणिविषभेतत्सममिदम् ।
समस्तैस्तुल्यं स्याद्गिमलजयपालोद्भवरज-
स्ततस्तु क्षीरेण प्रगुणमुदितं दन्तिसलिलैः ॥ २९० ॥
त्रिगुञ्जाऽऽस्यप्रौढ्यं जयति वटिका साममतुलं
ज्वरं पाण्डुं गुल्मं ग्रहणिगुदकीलोदररुजः ।
मरुच्छूलाजीर्णं पवनमथ सामं क्रिमिगदं
विबन्धं प्लीहानं प्रचलमपि विद्याधररसः ॥ ९१ ॥

इति विद्याधररसः—

## अथ विनोदविद्याधरः—

रसं गन्धं मृतं ताम्रं त्रिकटु त्रिफला तथा ।
कटुका च त्रिवृद्दन्ती हेमार्कौ टङ्कणं विषम् ॥ ९२ ॥
एतानि सममागानि सर्वांशं दन्तिनीफलम् ।
चूर्णयित्वा तु तत्सम्यङ्मर्दयेद्वन्त्रिकाम्बुना ॥ ९३ ॥
दन्तीक्वाथैस्ततः सम्यग्वटी टङ्कार्धमानतः ।
विनोदविद्याधर इत्याख्यातस्तरुणज्वरम् ॥ ९४ ॥
शूलं गुल्मं तथा पाण्डुं ग्रहण्यर्शःक्रिमीञ्जयेत् ।
अजीर्णमामवातं च गुल्मोदरगदं तथा ॥ २९५ ॥

इति विनोदविद्याधरः—

## अथ ज्वरमुरारिः—

रसबलिफणिलोहव्योपताम्राणि तुल्या-
न्यथ रसदलभागो नाग एतत्प्रघृष्टम् ।
भवति गदमुरारिश्चास्य गुञ्जार्धमात्रा
क्षपयति दिवसेन प्रौढमामज्वराख्यम् ॥ ९६ ॥

इति ज्वरमुरारिः—

---

१ क. विषं । २ ख. "मात्रा प्र° ।

## अथ महाज्वराङ्कुशः—

शुद्धं सूतं विषं गन्धं धूर्तबीजं त्रिभिः समम् ।
चतुर्णां द्विगुणं व्योषं हेमक्षीरीविभावितम् ॥ १७ ॥
चतुर्वारं घर्मशुष्कं चूर्णं गुञ्जाद्वयोन्मितम् ।
जम्बीरकस्य मज्जाभिरार्द्रकस्य रसेन वा ॥ १८ ॥
महाज्वराङ्कुशो नाम समस्तज्वरनाशनः ।
ऐकाहिकं द्व्याहिकं वा त्र्याहिकं वा चतुर्थकम् ।
विषमं च त्रिदोषोत्थं हन्ति सद्यो न संशयः ॥ १९ ॥

इति महाज्वराङ्कुशः—

## अथ चिन्तामणिरसः—

सूतं गन्धकमभ्रकं समलयं सूतार्धभागं विषं
तद्द्व्यंशं जयपालमम्लमृदितं तद्गोलकं वेष्टितम् ।
पत्रैर्मञ्जुमजङ्गवल्लिजनितैर्निक्षिप्य खाते पुटं
दत्त्वा कुक्कुटसंज्ञकं सह दलैः संचूर्ण्य तत्र क्षिपेत् ॥२००॥
भागार्धं जयपालबीजममृतं तत्तुल्यमेकीकृतं
गुञ्जानागरसिन्धुचित्रकयुतं सर्वज्वराञ्नाशयेत् ।
शूलं संग्रहणीगदं सजठरं दध्यन्नसंसेविनां
तापे सेचनकारिणां हिततमश्चिन्तामणिर्नामतः ॥ १ ॥

इति चिन्तामणिरसः—

## अथ सूचिकाभरणो रसः—

खण्डं कृत्वा विषं कृष्णं सार्कदुग्धेऽल्पभाण्डके ।
सकाञ्जिके सगरले क्षिप्त्वा चुल्यां निधापयेत् ॥२॥
सप्ताहतः समुद्धृत्य श्लक्ष्णचूर्णीकृतं च तत् ।
सूचिकाभरणो नाम रसो गुप्ततमो भुवि ॥ ३ ॥
संज्ञानाशे विचेष्टे च वल्लः काञ्जिकपेषितः ।
ब्रह्मरन्ध्रे प्रयोक्तव्यो महामोहप्रणाशनः ॥ ४ ॥

इति सूचिकाभरणो रसः—

---

१ ख. ग. चतुर्थं ज०। २ ख. ग. त्रीं सर्वव्याधिमत्तां नृणां हि०। ३ क. दलवणे क्षि०।

अथ महाशीतज्वराङ्कुशः सारसंग्रहात्—

अष्टौ तालकमेतदर्धममलं शम्बूकचूर्णं क्षिपे-
त्पश्चादत्र नवांशको वरशिखी सर्वं पुनः पेषयेत् ।
तोयैस्तच्च कुमारिकादलभवैः पक्वं गजाख्ये पुटेऽ-
प्येकद्वित्रिचतुर्थशीतहरणः शीताङ्कुशोऽयं रसः ॥३०५॥
गुञ्जाद्वयमितं दद्यात्सितया सह वारिणा ।
सजीरकेण दध्यन्नं पथ्यं शीतज्वराङ्कुशे ॥ ६ ॥

इति महाशीतज्वराङ्कुशः सारसंग्रहात् ।

अथ चन्द्रशेखरः—

शुद्धसूतसमं गन्धं मरिचं टङ्कणं तथा ।
चतुस्तुल्या सिता योज्या मत्स्यपित्तेन भावयेत् ॥ ७ ॥
त्रिदिनं मर्दयेत्तेन रसोऽयं चन्द्रशेखरः ।
द्विगुञ्जमार्द्रकद्रावैर्देयं शीतोदकं पुनः ॥ ८ ॥
तक्रभक्तं च वृन्ताकं पथ्यं तत्र निधापयेत् ।
त्रिदिनाच्छ्लेष्मपित्तोत्थमत्युग्रं नाशयेज्ज्वरम् ॥ ९ ॥

इति चन्द्रशेखरः ।

अथ मृतसंजीवनी गुटिका—

अन्यत्रैतस्या नाम मोदकमञ्जरीति ।

विषं त्रिकटुकं गन्धं टङ्कणं मृतशुल्बकम् ।
धत्तूरस्य च बीजानि हिङ्गुलं नवमं स्मृतम् ॥ ३१० ॥
एतानि समभागानि दिनैकं विजयाद्रवैः ।
मर्दयेच्चणकाकारा कर्तव्या वटिकाऽथ सा ॥ ११ ॥
भक्षणीयाऽनु पातव्यो रविमूलकषायकः ।
मृतसंजीवनी नाम्ना संनिपातज्वरान्तकृत् ॥ १२ ॥

इति मृतसंजीवनी गुटिका ।

अथ भस्मेश्वरः—

भस्मषोडशनिष्कं स्यादारण्योत्पलसंभवम् ।
मरिचं निष्कमात्रं च विषं निष्कं विचूर्णयेत् ॥ १३ ॥

रसो भस्मेश्वरो नाम्ना संनिपातज्वरान्तकृत् ।
एकगुञ्जामितो भक्ष्य आर्द्रकस्य द्रवेण वै ॥ १४ ॥
इति भस्मेश्वरः ।

अथ पञ्चवक्त्रो रसः—

गन्धेशटङ्कमरिचं विषं धत्तूरजैर्द्रवैः ।
दिनं संमर्दितं शुष्कं पञ्चवक्त्रो रसो भवेत् ॥ १५ ॥
आर्द्रकस्य द्रवेणैव दातव्यो रक्तिकामितः ।
संनिपातज्वरं घोरं नाशयेन्नात्र संशयः ॥ १६ ॥
इति पञ्चवक्त्रो रसः ।

अथ स्वर्णमालिनीवसन्तः—

स्वर्णं मुक्तादरदमरिचं भागवृद्ध्या प्रदेयं
खर्परषष्ठं मसृणमृदितं निम्बुनीरेण पश्चात् ।
यावत्स्नेहो व्रजति विमलं मर्दयेत्तावदेव
गुञ्जाद्वंद्वं मधु चपलया मालिनीपूर्ववसन्तः ॥ १७ ॥
जीर्णज्वरे धातुगतेऽतिसारे रक्ताश्रिते रक्तजाविष्ठरोगे ।
घोरव्यथे नेत्रभवे च रोगे बलप्रदो दुग्धयुतं च पथ्यम् ॥ १८ ॥
प्रदरं नाशयत्याशु तथा दुर्नामशोणितम् ।
विषमं नेत्ररोगांश्च गजेन्द्रमिव केसरी ॥ १९ ॥
इति स्वर्णमालिनीवसन्तः ।

अथ ज्वरघ्नी वटिका रसरत्नप्रदीपे—

रसं गन्धं च दरदं जेपालं क्रमवर्धितम् ।
दन्तीरसेन संपिष्य वटी गुञ्जामिता कृता ॥ २० ॥
प्रभाते सितया सार्धमशिता शीतवारिणा ।
एकेन दिवसेनैषा नवज्वरहरी भवेत् ॥ २१ ॥
इति ज्वरघ्नी वटिका रसरत्नप्रदीपे ।

अथ नवज्वरहरा—

रसो गन्धो विषं शुण्ठी पिप्पली मरिचानि च ।
पथ्या विभीतकं धात्री दन्तीबीजं च शोधितम् ॥ २२ ॥
चूर्णमेषां समांशं तु द्रोणपुष्पीभवै रसैः ।
वटी माषनिभा कार्या भक्षयेन्नूतने ज्वरे ॥ २३ ॥
इति नवज्वरहरा ।

## अथोदकमञ्जरीरसः—

सूतो गन्धष्टङ्कणः शोषणश्च सर्वैस्तुल्या शर्करा मत्स्यपित्तैः ।
भूयो भूयो मर्दयेत्तं त्रिरात्रं वल्लो देयः शृङ्गवेरद्रवेण ॥ २४ ॥
तापे शीतं व्यञ्जनैस्तक्रभक्तं वृन्ताकाद्यं पथ्यमेतत्प्रदिष्टम् ।
अह्नैवोग्रं हन्ति सद्यो ज्वरं तु पित्ताधिक्ये मूर्छिते चापि दद्यात् ॥

इत्युदकमञ्जरीरसः ।

## अथ ज्वराङ्कुशः—

नवज्वरे सर्वज्वरे रसरत्नप्रदीपात् ।

दारुमूषा शिखिग्रीवा रसकं च पृथक्पृथक् ।
टङ्कत्रयानुमानेन गृहीत्वा कनकद्रवैः ॥ २६ ॥
मर्दयेत्त्रिदिनं कार्या वटी चणकमात्रया ।
मरिचैरेकविंशत्या सप्तभिस्तुलसीदलैः ॥ २७ ॥
खादेद्वटीद्वयं पथ्यं दुग्धभक्तं सशर्करम् ।
तरुणं विषमं जीर्णं हन्याज्जीर्णज्वरं ध्रुवम् ॥ २८ ॥

इति ज्वराङ्कुशः ।

## अथ हुताशनो रसः—

नागरं कर्षमात्रं स्यात्कर्षमात्रं च टङ्कणम् ।
मरिचं सार्धमात्रं स्यात्तावद्दग्धवराटकम् ॥ २९ ॥
विषं कर्षचतुर्थांशं सर्वमेकत्र चूर्णयेत् ।
रसो हुताशनो नाम्ना खाद्यो गुञ्जामितो ज्वरे ॥ ३० ॥

इति हुताशनो रसः ।

## अथ शीतभञ्जी रसः—

रसहिङ्गुलगन्धं च जेपालं मर्दितं त्रिभिः ।
दन्तीक्काथेन संमर्द्य रसो ज्वरहरः परः ॥ ३१ ॥
आर्द्रकस्य रसेनाथ दापयेद्रक्तिकाद्वयम् ।
नवज्वरं महाघोरं नाशयेद्यामामात्रतः ॥ ३२ ॥
शर्करादधिभक्तं च पथ्यं देयं प्रयत्नतः ।
शीततोयं पिबेच्चानु इक्षुमुद्गरसो हितः ॥ ३३ ॥

शीतमञ्जीरसो नाम्ना सर्वज्वरकुलान्तकृत् ।

इति शीतमञ्जीरसो रसेन्द्रचिन्तामणेः ।

### अथ भिषभारसो वृन्दात्—(?)

रसं गन्धकताम्रं च नागं वङ्गं विषं तथा ॥ ३४ ॥
जेपालं स्वर्णबीजानि समभागानि कारयेत् ।
आर्द्रके सप्त भाव्यानि सप्तभाव्यानि चित्रके ॥ ३५ ॥
निर्गुण्ड्यां सप्तभाव्यानि सिद्धोऽयं भिषभारसः॥(?)
गुञ्जामात्रप्रमाणेन वटकान्कारयेत्ततः ॥ ३६ ॥
वटीमेकां प्रयुञ्जीत शृङ्गबेररसेन तु ।
सर्वज्वरहरा ज्ञेया याममात्रं तु शाम्यति ॥ ३७ ॥

इति भिषभारसो वृन्दात् ।

### अथ शीतारिः—

सितमल्लमनःशिलाहिफेनरसकाम्भोधिजताप्यतुल्यभागैः ।
सुपर्वीरसमर्दितैस्त्रिवारं भज शीतारिमिमं सितार्धगुञ्जम् ॥ ३८ ॥
सेवनाद्धरते तीव्रं ज्वरं शीतं महोल्बणम् ।
मात्रात्रयेण निःशेषं पथ्यं मुद्गौदनं स्मृतम् ॥ ३९ ॥

इति शीतारिः ।

### अथ चातुर्थिकारिः—

दरदः पारदश्चैव सितमल्लश्च तालकः ।
समभागानि सर्वाणि गुन्द्रानीरेण मर्दयेत् ॥ ४० ॥
मुद्गमात्रां वटीं कृत्वा सितया शीतवारिणा ।
गिलेच्चातुर्थिके योज्यं सद्यः खिचडिकाघृतम् ।
भक्षयेत्त्रिदिनं योगी ज्वरः शाम्यति निश्चितम् ॥ ३४१ ॥

इति चातुर्थिकारिः ।

इति श्रीयोगतरङ्गिण्यां ज्वरे पथ्यादिविचारो नामैकोनषष्टितमस्तरङ्गः ॥ ५९ ॥

---

अथ षष्टितमस्तरङ्गः ।

---

### अथ संनिपाते मूर्छायां लोकनाथो रसः—

पञ्चभिर्लवणैः सूतं त्रिभिः क्षारैस्तथैव च ।
मर्दयेद्दोषनाशाय गुणाधिक्यविधीच्छया ॥ १ ॥

एवं संशोध्य सूतेन्द्रं राजिकाहिङ्गुशुण्ठिभिः ।
चूर्णितैः पिण्डिकां कृत्वा तन्मध्ये सूतकं क्षिपेत् ॥ २ ॥
ततस्तां स्वेदयेत्पिण्डीं वस्त्रे बद्ध्वा तु काञ्जिकैः ।
दोलायन्त्रगतां यत्नात्स्वेदो यामचतुष्टयम् ॥ ३ ॥
एवं शुद्धरसं कृत्वा क्रमेणानेन मर्दयेत् ।
गिरिकर्णी तथा भृङ्गवारा निर्गुण्डिका तथा ॥ ४ ॥
जयन्ती शृङ्गवेरं च मण्डूकी च तिलच्छदा ।
काकमाची तथोन्मत्तो रुचकश्च ततः परम् ॥ ५ ॥
एतासामौषधीनां च रसतुल्यै रसैः क्रमात् ।
ततस्तत्सूतराजस्य कार्या मरिचमात्रिका ॥ ६ ॥
वटिका संनिपातस्य निवृत्त्यर्थं भिषग्वरैः ।
इयं श्रीलोकनाथेन संनिपातनिवृत्तये ॥ ७ ॥
कीर्तिता गुटिका पुण्या दृष्टप्रत्ययकारिणी ।
इयं प्राप्य वटीं यस्मात्संनिपातान्विनश्यति ॥ ८ ॥
मयूरमीनवाराहछागमाहिषसंभवैः ।
प्रत्येकं वाऽथ सर्वैर्वा भाविता चेद्वियं भवेत् ॥ ९ ॥
ढालयेत्तत्र तोयानि सुशीतानि बहूनि च ।
शर्करादधिसंयुक्तं भक्तमस्मिन्प्रदापयेत् ॥ १० ॥
इक्षवश्च तथा योज्या रसवीर्यविवृद्धये ।
शीतद्रव्यैं भवेद्वीर्यं पित्तवद्धे महारसे ॥ ११ ॥

इति लोकनाथो रसो रसेन्द्रचिन्तामणौ ।

### अथ संनिपातसूर्यः—

रसेन गन्धं द्विगुणं प्रगृह्य तत्पादभागं रवितारहेम ।
भस्मीकृतं योजय मर्दयेत्तद्दिनत्रयं वह्निरसेन घर्मे ॥ १२ ॥
विषं च दत्त्वाऽत्र कलाप्रमाणमजादिपित्तैः परिभावयेच्च ।
वल्लद्वयं चास्य ददीत वह्निकटुत्रयार्द्रद्रवसंप्रयुक्तम् ॥ १३ ॥
तैलेन चाभ्यज्य वपुश्च कुर्यात्स्नानं जलेनापि च शीतलेन ।
यावद्भवेद्दुःसहशीतमस्य मूत्रं पुरीषं च शरीरकम्पः ॥ १४ ॥
पथ्ये यदिच्छा परिजायतेऽस्य मरीचखण्डं दधिभक्तकं च ।
स्वल्पं ददीताऽऽर्द्रकमत्स्यशाकं दिनाष्टकं स्नानविधिं च कुर्यात् ॥

इति संनिपातसूर्य

## अथ जलयौगिकः—

सूतभस्मसमं गन्धं गन्धपादा मनःशिला ।
माक्षिकं पिप्पलीव्योषं प्रत्येकं च शिलासमम् ॥ १६ ॥
चूर्णयेद्भावयेत्पित्तैर्मत्स्यमायूरकैः क्रमात् ।
सप्तधा भावयेच्छुष्के देयं गुञ्जाद्वयं द्वयम् ॥ १७ ॥
तालपर्णीरसं चानु पञ्चकोलमथापि वा ।
निहन्ति संनिपातादीन्रसोऽयं जलयौगिकः ॥ १८ ॥
जलयोगं विनाऽप्यत्र रसवीर्यं न वर्धते ।
ये रसाः पित्तसंयुक्ताः प्रोक्ताः सर्वत्र शंभुना ॥
जलसेकावगाहाद्यैर्बलिनस्ते तु नान्यथा ॥ १९ ॥

इति जलयौगिकः ।

वल्लप्रमाणमात्रा । अनुपानमार्द्रकरसः ।

## त्रिदोषनीहारसूर्यः—

रसेन गन्धं द्विगुणं कृशानुरसैर्विमर्द्याष्ट दिनानि घर्मे ।
रसाष्टभागं त्वमृतं च दत्त्वा विमर्दयेद्वह्निजलेन किंचित् ॥ २० ॥
पित्तैस्तु संभावित एष देयस्त्रिदोषनीहारविनाशसूर्यः ॥ २१ ॥

इति त्रिदोषनीहारसूर्यः ।

## अथ रसचूडामणिः—

सूतभस्म विषं ताम्रं जयपालं सुगन्धकम् ।
हेमतैलेन संमर्द्य ततो लघुपुटं ददेत् ॥ २२ ॥
भावयेत्कनकद्रावैरजामाहिषमीनजैः ।
पित्तैः पृथक्सप्तमितं विषधूमेन शोषयेत् ॥ २३ ॥
सप्तवारं त्रिवारं वा पश्चादार्द्रेण भावयेत् ।
रसचूडामणिः सिद्धः साक्षाच्छ्रीभैरवं महः ॥ २४ ॥
ततोऽस्य रक्तिकां गुञ्जपादगुञ्जार्धं चाऽऽर्द्रनिम्बुयुक् ।
महारोगे संनिपाते नवे वाऽप्यनवे ज्वरे ॥ २५ ॥
जलावगाहनं कुर्यात्सेचनं व्यजनानिलम् ।
तत्क्षणान्मङ्गलस्नानं कुसुमं चन्द्रचन्दनम् ॥ २६ ॥
पथ्ये यथेप्सितं खाद्यं स्वादु द्राक्षेक्षुदाडिमम् ।
सितां समुद्गकरसां काञ्जिकं स्नानमेव वा ॥ २७ ॥

शूले गुल्मेऽग्निमान्द्यादौ ग्रहण्युदरपाण्मसु ।
वाते सर्वाङ्गकैकाङ्गगते वाऽप्यनिले तथा ॥ २८ ॥
प्रसूतिवाते सामे वा स्वानुपानैः प्रयोजयेत् ।
रक्तशोषं विना चैनं योजयेद्वर्जयेदिह ॥ २९ ॥
तैलाम्लराजिकामीनक्रोधशोकाध्वचङ्क्रमम् ।
बिल्वारनालसुपर्णीफलवृन्ताकमैथुनम् ॥ ३० ॥

इति रसचूडामणिः ।

## अथ वडवो रसः—

पटुना पूरयेत्स्थालीं तन्मध्ये पटुमूषिकाम् ।
तन्मध्ये रामठीं मूषां तन्मध्ये पारदं क्षिपेत् ॥ ३१ ॥
विषं विघृष्य सूतांशं वारिणाऽऽलोड्य सप्तभिः ।
वह्निं प्रज्वालयेच्चुल्यां दृढं यामचतुष्टयम् ॥ ३२ ॥
तद्भस्म तिलमात्रं तु दद्यात्सर्वेषु पाप्मसु ।
ग्रहण्यां जठरे शूले मन्दाग्नौ पवनामये ॥ ३३ ॥
अयमेतन्निहन्त्येष कुर्याद्बहुतरां क्षुधाम् ।
तापे शीतक्रियाः कुर्याद्वाडवाख्ये रसोत्तमे ॥ ३४ ॥*

इति वडवो रसः ।

## अथ सूचिकाभरणो रसः—

विषं पलमितं सूतं शाणिकं चूर्णयेद्द्वयम् ।
तच्चूर्णं संपुटे कृत्वा काचलिप्ते शरावयोः ॥ ३५ ॥
मुद्रां कृत्वा च संशोष्य ततश्चुल्यां निवेशयेत् ।
वह्निं शनैः शनैः कुर्यात्प्रहरद्वयसंख्यया ॥ ३६ ॥
तत उद्घाट्य तन्मुद्रामुपरिस्थशरावकात् ।
संलग्नो यो भवेद्धूमस्तं गृह्णीयाच्छनैः शनैः ॥ ३७ ॥
वायुस्पर्शो यथा न स्यात्ततः कूप्यां निवेशयेत् ।
यावत्सूच्या मुखे लग्नं कूप्या निर्याति भेषजम् ॥ ३८ ॥
तावन्मात्रो रसो देयो मूर्छिते संनिपातिनि ।

---

* इत ऊर्ध्वं खर्परखण्डोर्लवणस्य अधस्तयेत् । दार्व्याय कूपिकायन्त्रे भूलगेन पुनः पचेत् ॥ मिर्च दिना रसकर्पूरोऽयं सर्वरोगापहारकः । क. पुस्तकद्वयोऽयं ग्रन्थोऽप्रबद्ध रसयो निर्दिष्टः ।

क्षुरेण प्रहते मूर्ध्नि तत्राङ्गुल्याऽवघर्षयेत् ॥ ३९ ॥
रक्तभेषजसंपर्कान्मूर्च्छितोऽपि हि जीवति ।
तथैव सर्पदष्टोऽपि मृतावस्थोऽपि जीवति ।
यदा तापो भवेत्तस्य मधुरं तत्र दीयते ॥ ४० ॥

इति सूचिकाभरणो रसः ।

## सूचिकाभरणो रसो रससिन्धोः—

रसवैक्रान्तहेमाभ्रं तीक्ष्णताम्रं मृतं समम् ।
पञ्चभिः समं शुद्धगन्धं सर्वं निर्गुण्डिकारसैः ॥ ४१ ॥
कषायैश्चित्रकस्यापि मर्दयेद्दिवसत्रयम् ।
सूर्यावर्तैर्मुनिभृङ्गस्तिलपर्णीन्द्रवारुणी ॥ ४२ ॥
काकमाची महाराष्ट्री कङ्गुणी गिरिकर्णिका ।
धत्तूरस्तुलसी दन्ती बृहती कण्टकारिका ॥ ४३ ॥
स्नुह्यर्कविजया मुण्डी काकतुण्डी जयाऽमृता ।
एतासां भावयेद्द्रावैश्चतुर्दशादिनावधि ॥ ४४ ॥
अर्कमूलकषायेण भावयेद्दिनपञ्चकम् ।
दत्त्वा संचूर्णितं पञ्चपित्तैर्भाव्यं दिनत्रयम् ॥ ४५ ॥
विषमुष्टिकषायेण भावयेद्दिवसत्रयम् ।
जेपालबीजमज्जोत्थतैलेन दिवसत्रयम् ॥ ४६ ॥
भावितं शोषितं चूर्णं मधुना सह मिश्रयेत् ।
सूचिकाभरणो नाम रसः स्यात्संनिपातजित् ॥ ४७ ॥
दापयेत्सूचिकाग्रेण सर्वेषां संनिपातिनाम् ।
ज्वरशूलोदराशांसां प्लीहानां पाण्डुरोगिणाम् ॥ ४८ ॥
आध्मानशूलमन्दाग्निकासश्वासादिरोगिणाम् ।
श्लेष्मिणां स्थूलदेहानामनुपानं पृथक् पृथक् ॥ ४९ ॥

इति सूचिकाभरणो रसो रससिन्धोः ।

## अथ त्रिपुरभैरवः—

विषटङ्कबलिम्लेच्छं दन्तीबीजं क्रमाद्वहु ।
दन्त्यम्बुमर्दितं यामं रसस्त्रिपुरभैरवः ॥ ५० ॥
वल्लव्योषेण चाऽऽर्द्रस्य रसेन सितयाऽथ वा ।
दत्तो नवज्वरं हन्ति मान्द्यमानिलशोथहा ॥ ५१ ॥

हन्ति शूलं सविष्टम्ममर्शांसि क्रिमिजान्गदान् ।
पथ्यं तक्रेण युञ्जीत रसेऽस्मिन्रोगहारिणि ॥ ५२ ॥

इति त्रिपुरभैरवः ।

## अथ गन्धलोहः—

गन्धं लोहं भस्म मध्वाज्ययुक्तं सेव्यं वर्षं वारिणा त्रैफलेन ।
शुभ्रे केशे कालिमा दीर्घदृष्टिः पुष्टिर्वीर्यं जायते दीर्घमायुः ॥ ५३ ॥
इति गन्धलोहः ।

इति योगतरङ्गिण्यां संनिपाते रसायनाधिकारकथनं
नाम षष्टितमस्तरङ्गः ॥ ६० ॥

---

अथैकषष्टितमस्तरङ्गः ।

---

## अथ प्रत्येकं ज्वरोपद्रवाणां चिकित्सा—

## अथ हिक्कायाम्—

ज्वराविरोधेन भिषग्विदध्यादेतेषु दोषोचितमेव कर्म ।
मूर्छातिसारौ वमिदाहहिक्का ज्वरे विशेषादतिदुश्चिकित्स्याः॥१॥

मूर्छायामिह कृतमालहारहूरा-
कृष्णाभिः सजलदपर्पटाभयाभिः ।
संशीतं जलमतिसिद्धमिष्टमुक्तं
लेहो वा मधुत्रिवृतासिताभयाभिः ॥ २ ॥

शीताम्भसाऽक्षिसेकः सुरभिर्धूपः सुमनसश्च शुभाः ।
मृदुतालवृन्तवाताः कदलीदलकमलसंस्पर्शाः ॥ ३ ॥
अरुचौ तु तिक्तकरसैरसकृत्कवलग्रहस्तथाऽम्लरसैः ।
मधुलवणमातुलुङ्गीफलकेसरधारणं वक्त्रे ॥ ४ ॥
श्वासे दशाङ्गयोगः सवल्लीविशदङ्गसंकोचे ।
लेहः कर्कटशृङ्गीकृष्णामधुसोमवल्कलैर्वेह ॥ ५ ॥
त्रिकटुसटी घनशृङ्गी गर्दभशाकं सपौष्करं सपदि ।
श्वासं जयति पयोधरसुधालतापञ्चमूलजलपीतम् ॥ ६ ॥
करकरसबीजपूरकविदारिकालोध्रलेपनं शिरसि ।
अरतिमपहरति दाहं हन्यान्मत्यातले भ्रान्तिम् ॥ ७ ॥

चन्नशठबीजपूरकधाडिमबदरैः समुकफैर्वदने ।
लेपो जयति पिपासामथ रजतगुटी मुखान्तस्था ॥ ८ ॥
शीतं पयः क्षौद्रयुतं निपीतमाकण्ठमाश्वेव तदुद्वमेच्च ।
तर्षप्रकर्षप्रशमाय वक्त्रे धरेद्दृढी क्षौद्रवटाम्रलाजान् ॥ ९ ॥
धरसावनी वत्सकवारिवाहविश्वमरानिम्बविषाः सविश्वाः ।
ज्वरातिसारं त्वरितं जयन्ति विश्वामृतावत्सकवारिवाश्च ॥ १० ॥
पाठामृतापर्पटमुस्तविश्वाकिराततिक्तेन्द्रयवान्विपाच्य ।
पिबेज्ज्वरध्येव जवेन सर्वज्वरातिसारानपि दुर्निवारान् ॥ ११ ॥
नीरेण सिन्धूत्थरजोऽतिसूक्ष्मं नस्येन नूनं विनिहन्ति हिक्काम् ।
शुण्ठी हरेद्वा सितया समेता धूपोऽथ वा हिङ्गुसमुद्भवश्च ॥ १२ ॥

इति हिक्कायाम् ।

मयूरपिच्छस्य मषी स कृष्णा मध्वन्विता वा कटुका सधातुः ।
क्काथो गुडूच्याः समधुः सुशीतः पीतः प्रशान्तिं वमनस्य कुर्यात् ॥
विण्मक्षिकाणां मधुनाऽवलीढा सचन्दना शर्करयाऽन्विता वा॥१३॥

कृष्णां माक्षिकवैदेहिदधित्थरसामिश्रिताम् ।
लिहन्निह नरो नूनं वमिं जयति वेगतः ॥ १४ ॥
कासे कणाकणामूलकलिङ्गफलजं रजः ।
सविश्वभेषजं लिह्यान्मधुना वा वृपारसम् ॥ १५ ॥

पुष्करमूलकटुत्रिकशृङ्गीकट्फलवासककारविकाभिः ।
मधुललिताभिरयं खलु लेहः कासरिपु कफगदहर एकः ॥ १६ ॥

विबन्धे वातजित्कर्म कुर्याद्वातानुलोमनम् ।
मूलं प्रवर्तयेदाशु तीक्ष्णाभिः फलवर्तिभिः ॥ १७ ॥

निद्रानाशे उपायानाह—

भृष्टं तु विजयाचूर्णं मधुना निशि भक्षयेत् ।
निद्रानाशेऽतिसारे च ग्रहण्यां पावके क्षये ॥ १८ ॥
गुडं पिप्पलिमूलस्य चूर्णेनाऽऽलोडितं लिहेत् ।
चिरादपि च संनष्टां निद्रामाप्नोति मानवः ॥ १९ ॥
मूलं तु काकमाच्या बद्धं सूत्रेण मस्तके नियतम् ।
विदधाति नष्टनिद्रे निद्रामाश्वेव सिद्धमिदम् ॥ २० ॥

शीलयेन्मन्दनिद्रस्तु *क्षीरमिक्षुरसं दधि ।
अभ्यङ्गोद्वर्तनस्नानमूर्धकर्णाक्षितर्पणम् ॥ २१ ॥
कान्ताबाहुलताश्लेषो निर्वृतिः कृतकृत्यता ।
मनोनुकूला विषयाः कामं निद्रासुखप्रदाः ॥ २२ ॥
रसे शाके च सूपे च सर्पिर्यूषपयःसु च ।
निद्रां संजनयत्याशु पलाण्डुरुपयोजितः ॥ २३ ॥
ऐक्षवं पोतकी माषाः सुरा मांसरसः पयः ।
गोधूमतिलमत्स्याश्च निद्रां कुर्वन्ति देहिनाम् ॥ २४ ॥

इति निद्रानाश उपायाः ।

दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः ।
लिम्पेत्कोष्णैरम्लपिष्टैः शूलाध्मानयुतोदरम् ॥ २५ ॥
दाहे ज्वराविरोधेन यथाशास्त्रं हिमो विधिः ।
ज्वरे शान्ते प्रणश्यन्ति सद्यः सर्वेऽप्युपद्रवाः ॥ २७ ॥
विष्णुं सहस्रमूर्धानं चराचरपतिं प्रभुम् ।
स्तुवन्नामसहस्रेण ज्वरान्सर्वानपोहति ॥ २८ ॥
इति किंचिज्ज्वरस्योक्तं चिकित्सितमसंशयम् ।
मया दैर्घ्यभयादस्य ग्रन्थस्य बहु नोदितम् ॥ २९ ॥

इति योगतरङ्गिण्यां ज्वरचिकित्सितं नामैकषष्टितमस्तरङ्गः ॥ ६१ ॥

---

अथ द्विषष्टितमस्तरङ्गः ।

---

## अथ दुर्जलजनितस्य ज्वरस्य चिकित्सा

### अथ शुण्ठीक्वाथः—

हरीतकीनिम्बपत्रं नागरं सैन्धवोऽनलः ।
एषां चूर्णं सदा खादेद्दुर्जलज्वरशान्तये ॥ १ ॥
अरुचिमनलमान्द्यं पीनसश्वासकासा-
नुदरमुदकदोषानाशु हन्यादशेषान् ।
जनयति मतिकान्तिं चित्तनेत्रप्रसादं
पलपरिमितशुण्ठीक्षोदसिद्धः कषायः ॥ २ ॥

इति शुण्ठीक्वाथः ।

---

* क. मद्य ।

## अथ पटोलादिः—

पटोलमुस्तामृतवल्लिवासकं सनागरं धान्यकिराततिक्तकम् ।
कषायमेषां मधुना पिबेन्नरो निवारयेद्दुर्जलदोषमुल्बणम् ॥ ३ ॥

इति पटोलादिः ।

## अथ किराततिक्तादिचूर्णम्—

किराततिक्तत्रिवृदम्बुपिप्पली विडङ्गविश्वाकटुरोहिणीरजः ।
निहन्ति लीढं मधुनाऽपि सत्वरं सुदुस्तरं दुर्जलदोषजं ज्वरम् ॥४॥

इति किराततिक्तादिचूर्णम् ।

## अथ दुर्जलजेता रसः—

भोजनादौ नरैर्भुक्तं शुण्ठीराज्यमयोत्थितम् ।
कल्कं तु सहते नित्यं नानादेशोद्भवं जलम् ॥ ५ ॥
महार्द्रकयवक्षारौ पीत्वा चोष्णेन वारिणा ।
नानादेशसमुद्धूतवारिदोषमपोहति ॥ ६ ॥
विषं भागद्वयं दग्धकपर्दः पञ्चभागिकः ।
मरिचं नवभागं च चूर्णं वस्त्रेण शोधयेत् ॥ ७ ॥
आर्द्रकस्य रसेनास्य कुर्यान्मुद्गनिभां वटीम् ।
वारिणा वटिकायुग्मं प्रातः सायं च भक्षयेत् ॥ ८ ॥
अयं रसो ज्वरे योज्यस्तस्मिन्दुर्जलजेऽपि च ।
अजीर्णाध्मानविष्टम्भशूलेषु श्वासकासयोः ॥ ९ ॥

इति दुर्जलजेता रसः ।

इति योगतरङ्गिण्यां दुर्जलजनितज्वरचिकित्सानाम द्विषष्टितमस्तरङ्गः ॥ ६२ ॥

---

अथ त्रिषष्टितमस्तरङ्गः ।

---

## अथातीसारनिदानम्—

गुर्वतिस्निग्धरूक्षोष्णद्रवस्थूलातिशीतलैः ।
विरुद्धाध्यशनाजीर्णैर्विषमैश्चापि भोजनैः ॥ १ ॥
स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषैर्भयैः ।
शोकदुष्टाम्बुमद्यातिपानैः सात्म्यर्तुपर्ययैः ॥ २ ॥

---

१ ग. °क्षतीक्ष्णोष्ण° । २ ग. °र्जरसात्म्यैश्च° । ३ ग. सात्म्यैर्विष° ।

जलातिरमणैर्वेगविघातैः क्रिमिदोषतः ।
नृणां भवत्यतीसारो लक्षणं तस्य वक्ष्यते ॥ ३ ॥

संशम्यापां धातुरग्निं प्रवृद्धो वर्चोन्मिश्रो वायुनाऽधः प्रणुन्नः ।
सरत्यतीवातिसारं तमाहुर्व्याधिं घोरं षड्विधं तं वदन्ति ॥ ४ ॥
एकैकशः सर्वशश्चापि दोषैः शोकेनान्यः षष्ठ आमेन चोक्तः ।
दोषावस्था नैकरूपप्रकाराः काले काले व्याधितस्योद्भवन्ति॥५॥
हृन्नाभिपायूदरकुक्षितोदगात्रावसादानिलसंनिरोधाः ।
विट्सङ्गआध्मानमथाविपाको भविष्यतस्तस्य पुरःसराणि ॥ ६ ॥

अरुणं फेनिलं रूक्षमल्पमल्पं मुहुर्मुहुः ।
शकृदामं सरुक्शब्दं मारुतेनातिसार्यते ॥ ७ ॥

पित्तात्पीतं नीलमालोहितं वा तृष्णामूर्छादाहपाकोपपन्नम् ।
शुक्लं सान्द्रं सकफं श्लेष्मणा तु विस्रं शीतं हृष्टरोमा मनुष्यः ॥८॥

वराहस्नेहमांसाम्बुसदृशं सर्वरूपिणम् ।
कृच्छ्रसाध्यमतीसारं विद्याद्दोषत्रयोद्भवम् ॥ ९ ॥

तैस्तैर्भावैः शोचतोऽल्पाशनस्य
बाष्पोष्मा वै वह्निमाविश्य जन्तोः ।
कोष्ठं गत्वा क्षोभयेत्तस्य रक्तं
तच्चाधस्तात्काकणन्तीप्रकाशम् ॥ १० ॥
निर्गच्छेद्वै विड्विमिश्रं ह्यविड्वा
निर्गन्धं वा गन्धवद्वाऽतिसारः ।
शोकोत्पन्नो दुश्चिकित्स्योऽतिमात्रं
रोगो वैद्यैः कष्ट एष प्रदिष्टः ॥ ११ ॥

अन्नाजीर्णात्प्रद्रुताः क्षोभयन्तः कोष्ठं दोषा धातुसंघान्मलांश्च ।
नानावर्णं नैकशः सारयन्ति शूलोपेतं षष्ठमेनं वदन्ति ॥ १२ ॥

संसृष्टमेभिर्दोषैस्तु न्यस्तमप्स्ववसीदति ।
पुरीषं भृशदुर्गन्धि पिच्छिलं चाऽऽमसंज्ञितम् ॥ १३ ॥
एतान्येव तु लिङ्गानि विपरीतानि यस्य वै ।
लाघवं च विशेषेण तस्य पक्वं विनिर्दिशेत् ॥ १४ ॥
पित्तकृन्ति यदाऽत्यर्थं द्रव्याण्यश्नाति पैत्तिकः ।
तद्दोषाज्जायतेऽभीक्ष्णं रक्तातीसार उल्बणः ॥ १५ ॥

---

१ ग. °मा च रोगी ।

वातः प्रवृद्धो निचितं बलासं नुदत्यधस्तादहिताशनस्य ।
प्रवाहतोऽल्पं बहुशो मलाक्तं प्रवाहिकां तां प्रवदन्ति तज्ज्ञाः॥१६॥
प्रवाहिका वातकृता सशूला पित्तात्सदाहा सकफा कफाच्च ।
सशोणिता शोणितसंभवा च ताः स्नेहरूक्षप्रभवा मतास्तु॥१७॥
तासामतीसारवदादिशेच्च लिङ्गक्रमं चाऽऽमविपक्वतां च ।

असाध्यलक्षणमाह—

पक्वजाम्बवसंकाशं यकृत्पिण्डनिभं तनु ।
घृततैलवसामज्जावेसवारपयोदधि ॥ १८ ॥
मांसधावनतोयाभं कृष्णनीलारुणप्रभम् ।
मेचकं कर्बुरं स्निग्धं चन्द्रकोपगतं घनम् ॥ १९ ॥
कुणपं मस्तुलुङ्गाभं सगन्धं क्वथितं बहु ।
तृष्णादाहक्लमश्वासहिक्कापार्श्वार्तिशूलिनम् ॥ २० ॥
संमूर्छारतिसंमोहयुक्तं पक्वबलीगुदम् ।
प्रलापयुक्तं च भिषग्वर्जयेदतिसारिणम् ॥ २१ ॥
असंवृतगुदं क्षीणं दुराध्मानमुपद्रुतम् ।
गुदे पक्वे गतोष्माणमतीसारिणमुत्सृजेत् ॥ २२ ॥
हस्तपादाङ्गुलीसंधिप्रपाको मूत्रनिग्रहः ।
पुरीषस्योष्णता चैव मरणायातिसारिणाम् ॥ २३ ॥
श्वासशूलपिपासार्तं क्षीणं ज्वरनिपीडितम् ।
विशेषेण नरं वृद्धमतीसारिणमुत्सृजेत् ॥ २४ ॥
अतीसारी राजरोगी ग्रहणीरोगवानपि ।
मांसाग्निबलहीनो यो दुर्लभं तस्य जीवनम् ॥ २५ ॥
बाले वृद्धे त्वसाध्योऽयं लिङ्गैरेतैरुपद्रुतः ।
अपि यूनामसाध्यः स्यादतिदुष्टेषु धातुषु ॥ २६ ॥
शोथं शूलं ज्वरं तृष्णां श्वासं कासमरोचकम् ।
छर्दिं मूर्छां च हिक्कां च दृष्ट्वाऽतीसारिणं त्यजेत् ॥ २७ ॥

अतीसारनिवृत्तिलक्षणमाह—

यस्योच्चारं विना मूत्रं सम्यग्वायुश्च गच्छति ।
दीप्ताग्नेर्लघुकोष्ठस्य स्थितस्तस्योदरामयः ॥ २८ ॥

योगतरङ्गिण्यामतीसारनिदानं नाम त्रिषष्टितमस्तरङ्गः ॥ ६३ ॥

———

अथ चतुष्षष्टितमस्तरङ्गः ।

## अतीसारपूर्वरूपचिकित्सा—

हितं लङ्घनमेवाऽऽदौ पूर्वरूपेषु देहिनः ।
कुर्याच्चानशनस्यान्ते द्रवं लघु च भोजनम् ॥ १ ॥
हरिद्रादिं वाऽपि +,+ पिबेच्छीते तु मानवः ।
षडङ्गं वा यवागूषु पिप्पल्यादिं प्रयोजयेत् ॥ २ ॥

## षडङ्गयूषः—

मुद्गयूषं रसं तक्रं धान्यं जीरकसंयुतम् ।
षडङ्गयूषमित्याहुः सैन्धवेन समन्वितम् ॥ ३ ॥
अग्निसंदीपनं पथ्यं ग्रहणीदोषनाशनम् ।
अरोचके ज्वरे चैव श्रेष्ठमेतत्प्रवाहिके ॥ ४ ॥

बिल्वं च धान्यं च सजीरकं च पाठां च शुण्ठीतिलसंयुतां च ।
सिद्धा षडङ्गः सुहितो नराणां यूषो ह्यतीसारहरः प्रदिष्टः ॥ ५ ॥
इति षडङ्गयूषः ।

तृष्णापनयनी लघ्वी दीपनी बस्तिशोधनी ।
ज्वरे चैवातिसारे च यवागूः सर्वदा हिता ॥ ६ ॥

इत्यतीसारपूर्वरूपचिकित्सा ।

## अथाऽऽमातिसारः—

आमपक्वक्रमं हित्वा नातिसारे क्रिया हिता ।
अतः सर्वातिसारेषु ज्ञेयं पक्वामलक्षणम् ॥ ७ ॥

संसृष्टमेभिरितिलक्षणं पूर्वोक्तम् ।

## अथ धान्यपञ्चकं चतुष्कं च—

न तु संग्राहणं दद्यात्पूर्वमामातिसारिणम् ।
दोषा ह्यादौ वर्धमाना जनयन्त्यामयान्बहून् ॥ ८ ॥
शोफपाण्ड्वामयप्लीहकुष्ठगुल्मोदरज्वरान् ।
दण्डकालसकाध्मानग्रहण्यर्शोगदांस्तथा ॥ ९ ॥
डिम्भस्य स्थविरस्यापि वातपित्तात्मकस्य च ।
क्षीणधातुबलार्तस्य बहुदोषोऽतिविस्रुतः ॥ १० ॥

---

१ क. °कथ यः । क्षी°।

आमोऽपि स्तम्भनीयः स्यात्पातनाग्मरणं मजेत् ।
स्तोकं स्तोकं विवद्धं वा सशूलं योऽतिसार्यते ॥ ११ ॥
अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत् ।
दीप्ताग्निर्बहुदोषो यो विबद्धमतिसार्यते ॥ १२ ॥
विडङ्गत्रिफलाकृष्णाकषायैस्तं विरेचयेत् ।
क्षुत्क्षामस्य विरिक्ते तु पेयां युञ्ज्याद्विचक्षणः ॥ १३ ॥
भेषजैर्मारुतघ्नैश्च दीपनीयैश्च कल्पितम् ।
यो विबन्धप्रभूतं च पुरीषमतिसार्यते ॥ १४ ॥
तस्याऽऽदौ वमनं योज्यं पश्चाल्लङ्घनमेव च ।
शूलानाहप्रसेकार्तं वामयेदतिसारिणम् ॥ १५ ॥
पिप्पलीलवणाभ्यां च साधितेन जलेन वा ।
पथ्यादारुवचामुस्तैर्नागरातिविषान्वितैः ॥ १६ ॥
आमातिसारनाशाय क्वाथमेभिः पिबेन्नरः ।
पाठाहिङ्ग्वजमोदोग्रापञ्चकोलावृतं रजः ॥ १७ ॥
उष्णाम्बु पीतं सरुजं जयत्यामं ससैन्धवम् ।
उग्रूपणातिविषाहिङ्गुवचासौवर्चलाभयाः ॥ १८ ॥
पीत्वोष्णेनाम्भसा जह्यादामातीसारमुद्धतम् ।
वचाबिल्वकणाविश्वकुठदीप्यककूलकम् ॥ १९ ॥
सविडङ्गं जयेत्पीतमाममुष्णाम्बुना शृतम् ।
हरीतकी सातिविषा हिङ्गुसौवर्चलं वचा ॥ २० ॥
सैन्धवं चातिपिष्टानि पाययेदुष्णवारिणा ।
आमातिसारयोगोऽयं पाचयित्वा चिकित्सति ॥ २१ ॥
आमातिसारयोगेन यस्त्वनेन न शाम्यति ।
न तु योगशतेनापि चिकित्सति चिकित्सकः ॥ २२ ॥
एरण्डरससंपिष्टं पक्वमामं च नागरम् ।
आमातिसारशूलघ्नं दीपनं पाचनं तथा ॥ २३ ॥
चित्रकं पिप्पलीमूलं वचाकटुकरोहिणी ।
पाठा वत्सकबीजानि हरीतक्यो महौषधम् ॥ २४ ॥

---

१ क. °त्साघ्ना° । २ क. °कोलकद्रुमं र° । ३ ग. °किरिवतैः । आ° ।

एतदामसमुत्थानमतिसारं सवेदनम् ।
कफात्मकं सपित्तं च सवातं हन्ति वै ध्रुवम् ॥ २५ ॥
श्वदंष्ट्रैरण्डधान्याम्लयवपुष्करसाधिता ।
पथ्या मधुयुता लीढा शूलातीसारनाशनी ॥ २६ ॥
नागरातिविषामुस्ताक्राथः स्यादामपाचनः ।
बिल्वं मोचरसः पाठा गुडूची विश्वमुस्तकम् ॥ २७ ॥
गुडतक्रेण दुर्वारं पीतं हन्त्युदरामयम् ।
धान्यनागरमुस्तं च वालकं बिल्वमेव च ॥ २८ ॥
आमशूलविबन्धघ्नं पाचनं वह्निदीपनम् ।
पित्ते धान्यचतुष्कं च शुण्ठीत्यागाद्वदन्ति हि ॥ २९ ॥
इति धान्यपञ्चकं चतुष्कं च ।

अथाभयादिचतुःसमा गुटिका—

देवदारुवचा मुस्ता नागराऽतिविषाऽभया ।
सर्वाजीर्णप्रशमनं पेयमेतैः शृतं जलम् ॥ ३० ॥
नागरातिविषामुस्तैरथ वा धान्यनागरैः ।
तृष्णाशूलातिसारघ्नं पाचनं दीपनं लघु ॥ ३१ ॥
धान्यकातिविषोदीच्ययवानीमुस्तनागरम् ।
बला द्विपर्णी बिल्वं च दद्याद्दीपनपाचनम् ॥ ३२ ॥
अभया नागरं मुस्तं गुडेन सह योजितम् ।
चतुःसमेयं गुटिका त्रिदोषघ्नी प्रकीर्तिता ॥ ३३ ॥
आमातिसारमानाहं सविबन्धं विषूचिकाम् ।
कामलारोचकं हन्याद्दीपयत्याशु चानलम् ॥ ३४ ॥
इत्यभयादि चतुःसमा गुटिका ।

अथ कलिङ्गादिचूर्णम्—

बिल्वोत्थः स्वरसः पेयो *हिङ्गुलस्य समाक्षिकः ।
जयत्याममतीसारं क्राथो वा कुटजत्वचः ॥ ३५ ॥
पयः संक्राथ्य मुस्तानां विंशतिस्त्रिगुणाम्भसा ।
क्षीरावशिष्टं तत्पीतं हन्त्यामं शूलमेव च ॥ ३६ ॥
एरण्डमूलसकलैरवति सोमेन मिश्रितैः सजवैः ।
स्विन्नां खादेदभयामामातीसारशूलार्तः ॥ ३७ ॥
इति काञ्जिकहरीतकी ।

---

* क. पुस्तके हिङ्गुलस्येति पाठान्तरम् ।

कैसंसज्जसुनिषण्णको जटा दाडिमस्य दलमर्जुनोदकम् ।
काथ एष परिशीलितो नृणां हन्ति साममथशूलमुद्धतम् ॥३८॥

कलिङ्गाऽतिविषा हिङ्गु पथ्या सौवर्चलं वचा ।
शूलस्तम्भं विबन्धघ्नं पेयं दीपनपाचनम् ॥ ३९ ॥

इति कलिङ्गादिचूर्णम् ।

निरामरूपं शूलार्तं लङ्घनाद्यैश्च कर्षितम् ।
नरं रूक्षमवेक्ष्याग्निं सक्षारं पाचयेद्घृतम् ॥ ४० ॥
क्षारनागरचाङ्गेरीकोलदध्यम्लसाधितम् ।
सर्पिरित्थं पिबेद्वाऽपि शूलातीसारशान्तये ॥ ४१ ॥

इत्यामातिसारः ।

## अथ पक्वातिसारः—

अरलुत्वक् प्रियङ्गुश्च मधुकं दाडिमाङ्कुरान् ।
अवाप्य पिष्ट्वा विपचेद्यवागूं दधि तां पिबेत् ॥ ४२ ॥
सर्वातिसारानेषा हि हन्ति पक्वान्न संशयः ।
सलोध्रं धातकी बिल्वं मुस्ताम्रास्थिकलिङ्गकम् ॥ ४३ ॥
पिबेन्माहिषतक्रेण पक्वातीसारनाशनम् ।
पद्मं समङ्गा मधुकं बिल्वं जतु शलाटु च ॥ ४४ ॥
पिबेत्तण्डुलतोयेन सक्षौद्रमगदं परम् ।
पक्वातिसारिणे देयो मुस्ताक्काथः समाक्षिकः ॥ ४५ ॥
समङ्गा धातकीपुष्पं मञ्जिष्ठा लोध्रमेव च ।
शाल्मली मधुकं लोध्रं वृक्षदाडिमयोस्त्वचम् ॥ ४६ ॥
आम्रास्थिमध्यं लोध्रं च बिल्वमज्जा प्रियङ्गवः ।
मधुकं शृङ्गवेरं च दीर्घवृन्तत्वगेव च ॥ ४७ ॥
चत्वार एते योगाः स्युः पक्वातीसारनाशनाः ।
पक्काम उपयोज्याः स्युः सक्षौद्रास्तण्डुलाम्बुना ॥ ४८ ॥
दीर्घवृन्तः स पथ्याह्वो महौषधसमन्वितः ।
पीतस्तण्डुलतोयेन पक्वातीसारनाशनः ॥ ४९ ॥

---

१ ग. °सरसु° । २ ग. °ली वेष्टके लो° । ३ ग. °मधं प्रि° ।

पथ्याजाजिदुरालम्भाघोण्टाफलकल्कसंयुतः पीतः ।
स्वरसो जम्बुकल्कात्पक्वातीसारहा चैव ॥ ५० ॥
समङ्गा धातकी लोध्रं तथा जम्बु शलाटु च ।
( * शाल्मलीवेष्टकं चैव वृक्षदाडिमयोस्त्वचः ॥ ५१ ॥
आम्रास्थिबिल्वमध्यं च मधुकं च प्रियङ्गवः ) ।
मुस्तकं शृङ्गवेरं च दीर्घवृन्तत्वगेव च ॥ ५२ ॥
नवपर्णानि चूतस्य कपित्थफलमेव च ।
पिष्ट्वा तण्डुलतोयेन गुटिकां कारयेत्ततः ॥ ५३ ॥
पिबेत्तेन ह्युपायेन पक्वातीसारशान्तये ।

इति समङ्गाद्या गुटिका ।

अथ कञ्चटकादि—

कुटजातिविषाचूर्णं मधुना सह लेहितम् ॥ ५४ ॥
चिरोत्थितमतीसारं पक्वं पित्तास्रजं जयेत् ।
पक्वोऽसकृदतीसारो ग्रहणीमार्दवाद्यदा ॥
प्रवर्तेत तदा कार्यः क्षिप्रं सांग्राहिको विधिः ॥ ५५ ॥
कञ्चटजम्बूदाडिमशृङ्गाटकपत्रबिल्वह्रीवेरम् ।
जलधरनागरसहितं गङ्गामपि वाहिनीं रुन्ध्यात् ॥ ५६ ॥

इति कञ्चटकादि ।

अथ लघुगङ्गाधरं चूर्णम्—

मोचरसमुस्तनागरपाठारलुधातकीकुसुमैः ।
चूर्णं मथितसमेतं रुणद्धि गङ्गाप्रवाहमपि ॥ ५७ ॥

इति लघुगङ्गाधरं चूर्णम् ।

अङ्कोलमूलकल्कः—

अङ्कोलमूलकल्कः सक्षौद्रस्तण्डुलाम्बुना पीतः ।
सेतुरिव वारिवेगं झटिति निरुन्ध्यादतीसारम् ॥ ५८ ॥
कृत्वाऽऽलवालं सुदृढं पिष्टैरामलकैर्भिषक् ।
आर्द्रकस्वरसेनाऽऽशु पूरयेन्नाभिमण्डलम् ॥ ५९ ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. पुस्तकस्थः ।

---

१ ग. ... ग. °ति कञ्चटादिः ।

नदीवेगोपमं घोरं प्रवृद्धं दुर्जरं नृणाम् ।
सद्योऽतिसारसञ्जयं नाशयत्येष योगराट् ॥ ६० ॥

इति पक्वातिसारः ।

## अथ वातातीसारचिकित्सा—

लङ्घनमेकं मुक्त्वा न चान्यदस्तीह भेषजं बलिनः ।
समुदीर्णं दोषचयं शमयति सत्पाचयत्यपि च ॥ ६१ ॥
कपित्थबिल्वचाङ्गेरी तक्रदाडिमसाधिता ।
ग्राहिणी पाचनी पेया वाते वा पञ्चमूलिका ॥ ६२ ॥
पञ्चमूली बला विश्वधान्यकोत्पलबिल्वजा ।
वातातिसारिणे देया सूक्तेनान्यतमेन वा ॥ ६३ ॥
वचा सातिविषा मुस्ता बीजानि कुटजस्य च ।
श्रेष्ठो वातातिसारे च योगोऽयं वैद्यपूजितः ॥ ६४ ॥
पूतीकं मागधीं शुण्ठीं बलाधान्यं हरीतकीम् ।
पक्त्वाऽम्बुना पिबेत्सामवातातीसारशान्तये ॥ ६५ ॥

## अथ पित्तातीसारचिकित्सा—

आमान्वयमतीसारं पैत्तिकं लङ्घनैर्जयेत् ।
लङ्घितस्य यथा सात्म्यं यवागूमण्डतर्पणैः ॥ ६६ ॥
शृतं चन्दनमुस्ताभ्यां पटोलोदीच्यनागरैः ।
पेयामम्लामतक्रां वा पाचनीं ग्राहिणीं पिबेत् ॥ ६७ ॥
धान्योदीच्यशृतं तोयं तृषादाहातिसारवान् ।
ताभ्यामेव सपाठाभ्यां सिद्धमाहारमाहरेत् ॥ ६८ ॥
बिल्वशक्रयवाम्भोदबालकातिविषाकृतः ।
कषायो हन्त्यतीसारं सामं पित्तसमुद्भवम् ॥ ६९ ॥
रसाञ्जनं सातिविषं कुटजस्य फलत्वचौ ।
धातकी शृङ्गबेरं च पाययेत्तण्डुलाम्बुना ॥ ७० ॥
माक्षिकेण युतं हन्यात्पित्तातीसारमुल्बणम् ।
मन्दं संदीपयेदग्निं शूलं चाऽऽशु निवर्तयेत् ॥ ७१ ॥
मधुकं कट्फलं लोध्रं दाडिमस्य फलत्वचम् ।
पित्तातिसारे मध्वक्तं पाययेत्तण्डुलाम्बुना ॥ ७२ ॥

---

१ ग. मापयेत् ।

समङ्गा धातकीपुष्पं बिल्वं सौवर्चलं बिडम् ।
सक्षौद्रं दाडिमं चैव पीतं तण्डुलवारिणा ॥ ७३ ॥
चूर्णं पित्तातिसारघ्नं शूलं चाऽऽशु नियच्छति ।
सक्षौद्रातिविषां पिष्ट्वा वत्सकस्य फलत्वचम् ॥ ७४ ॥
तण्डुलोदकसंयुक्तं पेयं पित्तातिसारनुत् ।
कट्फलातिविषाम्भोदवत्सकं नागरान्वितम् ॥ ७५ ॥
शृतं पित्तातिसारघ्नं पातव्यं मधुसंयुतम् ।
पलं वत्सकसंसिद्धं चतुर्गुणजले शृतम् ।
पित्तातिसारे भिषजा देयं दीपनपाचनम् ॥ ७६ ॥

इति धान्याकघृतम् ।

### अथ रक्तातीसारः—

तत्र तूर्णं क्रिया कार्या रक्तपित्तनिबर्हणी ।
छागे सार्धोदके क्षीरे नागरोत्पलवालकैः ॥ ७७ ॥
पेया रक्तातिसारघ्नी पृश्निपर्णी रसैर्युता ।
कषायो मधुना पीतस्त्वचो दाडिमवत्सकात् ॥ ७८ ॥
सद्यो जयेदतीसारं रक्तजं दुर्निवारकम् ।
समङ्गोत्पलमञ्जिष्ठा तिरीटतिलचन्दनम् ॥ ७९ ॥
छागीक्षीरेण संपीतं रक्तातीसारनाशनम् ।

इति समङ्गादिः ।

### अथ कुटजाष्टककाथः—

कुटजाऽतिविषा मुस्ता वालकं लोध्रचन्दनम् ॥ ८० ॥
धातकी दाडिमं पाठा क्वाथं क्षौद्रयुतं पिबेत् ।
दाहे रक्ते सशूले च आमरोगे च दुस्तरे ॥
कुटजाष्टमिदं ख्यातं सर्वातीसारनाशनम् ॥ ८१ ॥

इति कुटजाष्टकक्काथः ।

### अथ वत्सकादिक्काथः—

सवत्सकः सातिविषः सबिल्वः सोदीच्यमुस्तश्च कृतः कषायः ।
सामे सशूले च सशोणिते च चिरप्रवृत्तेऽपि हितोऽतिसारे ॥८२॥

इति वत्सकादिक्काथः ।

---

१ ग. °क्षीरसायुतैः । क. । २ ग. °तिलवत्सकात् । छा° ।

## अथ ह्रीवेरादिः—

ह्रीबेरातिविषा मुस्तं बिल्वधान्यकधत्तकम् ।
समङ्गा धातकी लोध्रं विश्वं दीपनपाचनम् ॥ ८३ ॥
हन्त्यरोचकपित्तामविबन्धं चातिवेदनम् ।
सशोणितमतीसारं सज्वरं वाऽथ विज्वरम् ॥ ८४ ॥

इति ह्रीवेरादिः ।

## अथ रसाञ्जनादिचूर्णम्—

आम्रवृक्षस्त्वचस्तक्रपिष्टायाः स्वरसं पिबेत् ॥
चूर्णं स्वच्छाम्बुना युक्तं रक्तातीसारशान्तये ॥ ८५ ॥
बिल्वं छागपयः सिद्धं सितामोचरसान्वितम् ।
कलिङ्गचूर्णसंयुक्तं रक्तातीसारनाशनम् ॥ ८६ ॥
गुडेन भक्षयेद्बिल्वं रक्तातीसारनशनम् ।
आमशूलविबन्धघ्नं कुक्षिरोगविनाशनम् ॥ ८७ ॥
रसाञ्जनं सातिविषं कुटजस्य फलत्वचम् ।
धातकी शृङ्गबेरं च पिबेत्तण्डुलवारिणा ॥
क्षौद्रेण युक्तं तद्देयं रक्तातीसारमुल्बणम्॥ ८८ ॥

इति रसाञ्जनादिचूर्णम् ।

बदरीमूलकल्कस्तु तिलकल्कस्तथैव च ।
मधुक्षीरयुतः पीतो रक्तातीसारनाशनः ॥ ८९ ॥
जम्ब्वाम्रामलकानां तु पल्लवानथ कुट्टयेत् ।
संगृह्य स्वरसं तेषामजाक्षीरेण योजयेत् ॥ ९० ॥
तत्पिबेन्मधुना युक्तं रक्तातीसारनाशनम् ।
यष्टी मधुस्तिलाः कृष्णाः पद्मकेसरमुत्पलम् ॥ ९१ ॥
क्षौद्रमत्स्यण्डिकायुक्तमाजेन पयसा पिबेत् ।
रक्तप्रवाहिकां शूलमेतत्पीतं नियच्छति ॥ ९२ ॥
रसाञ्जनं सातिविषं त्वग्बीजं कौटजं तथा ।
धातकी नागरं चैव पाययेत्तण्डुलाम्बुना ॥ ९३ ॥
सशूलरक्तपित्तघ्नो योगो मधुसमन्वितः ।

१ ग. बुरिति ।

## अथ पिच्छाबस्तिः—

अल्पाल्पं बहुशो रेक्तं सशूलमुपवेश्यते ॥ ९४ ॥ (?)
यदा वायुर्विबद्धश्च पिच्छाबस्तिस्तदा हितः ।
शाल्मलेरार्द्रपुष्पाणि पुटपाकीकृतानि च ॥ ९५ ॥
संकुट्योलूखले सम्यग्गृह्णीयात्पयसि शृते ।
गृहीत्वा पट्पलं तस्य त्रिपलं घृततैलयोः ॥ ९६ ॥
युक्तं मधुककल्केन माक्षिकत्रिपलेन च ।
तैलाक्तवपुषो दद्याद्वस्तौ प्रत्यागते रसे ।
भोजयेत्पयसा वाऽपि पित्तातीसारपीडितम् ॥ ९७ ॥

इति पिच्छाबस्तिः ।

## अथ क्षीरिवृक्षाद्यं घृतम्—

क्षीरिद्रुमाभीरुरसे विपक्वं तज्जे च कल्के पयसा च सर्पिः ।
सितोपलार्धं मधुपादयुक्तं रक्तातिसारं शमयत्युदीर्णम् ॥९८॥

इति क्षीरिवृक्षाद्यं घृतम् ।

## अथ कुटजक्षीरम्—

निष्क्वाथ्य मूलममलं गिरिमल्लिकायाः
सम्यक्पलद्वितयमम्बु चतुःशरावे ।
तत्पादशेषसलिलं खलु शोषणीयं
क्षीरे पलद्वयमिते कुशलैरजायाः ॥ ९९ ॥
प्रक्षिप्यमापकानष्टौ मधुनस्तत्र शीतले ।
रक्तातिसारी तं पीत्वा नैरुजं क्षिप्रमाप्नुयात् ॥ १०० ॥

इति कुटजक्षीरम् ।

## अथ शतावरीकल्कः—

पीत्वा शतावरीकल्कं पयसा क्षीरभुग्जयेत् ।
रक्तातिसारी पीत्वा वा तया सिद्धं घृतं नरः ॥ १ ॥

इति शतावरीकल्कः—

---

१ क. °रक्तं । २ ग. तद्देव कल्कैः प° ।

अथ नवनीतावलेहः—

गोदुग्धं नवनीतं च मधुना सितया सह ।
लीढं रक्तातिसारे तु ग्राहकं परमं मतम् ॥ २ ॥

इति नवनीतावलेहः ।

पीतं मधुसितायुक्तं चन्दनं तण्डुलाम्बुना ।
रक्तातिसारजिद्रक्तपित्ततृड्दाहमोहनुत् ॥ ३ ॥

चन्दनमत्र श्वेतम् ।

अथ चन्दनकल्कः—

रक्तातिसारिणामाजं पयः सक्षौद्रशर्करम् ।
गुदप्रक्षालने सेके प्रशस्तं पानभोजने ॥ ४ ॥

इति रक्तातीसारः—

अथ गुदपाके भ्रंशे दाहे च—

गुदो बहुभिरुद्घातैर्यस्य पित्तेर्न पच्यते ।
सेवयेत्तं तु शीतेन पटोलमधुकाम्बुना ॥ ५ ॥
विरेकैर्बहुधा यस्य गुदं पित्तेन दह्यते ।
पच्यते वा तयोः कार्यं तेनैव गुदसेचनम् ॥ ६ ॥
दाहे पाके हितं छागीक्षीरं सक्षौद्रशर्करम् ।
गुदस्य क्षालने सेके युक्तं पाने च भोजने ॥ ७ ॥
अतिप्रवृत्त्या महती मधेद्यदि गुदव्यथा ।
स्विन्नमूषकमांसेन तदा संस्वेदयेद्गुदम् ॥ ८ ॥
अथ गोधूमचूर्णस्य समितस्य तु वारिणा ।
साज्यस्य गोलकं कृत्वा मृदु संस्वेदयेद्गुदम् ॥ ९ ॥

व्यथायाम्—

गुदभ्रंशे गुदं स्नेहैरभ्यज्यान्तः प्रवेशयेत् ।
प्रविष्टं स्वेदयेन्मन्दं मूषकस्याऽऽमिषेण हि ॥ १[1]१० ॥
मूषकस्याथ वसया पायुं सम्यक् प्रलेपयेत् ।
गुदभ्रंशाभिधो व्याधिः प्रणश्यति न संशयः ॥ ११ ॥
शम्बूकमांसं सुस्विन्नं सतैललवणान्वितम् ।
ईषद्घृतेन चाभ्यक्तं स्वेदयेत्तेन यत्नतः ॥ १२ ॥

१ क, 'म मुष्य' ।

गुदभ्रंशमशेषेण नाशयेत्क्षिप्रमेव च ।
गुदनिःसरणे शस्तं चाङ्गेरीघृतमुत्तमम् ॥ १३ ॥

तद्यथा—

चाङ्गेरीकोलदध्यम्लक्षारनागरसंयुतम् ।
घृतं विपक्वं पातव्यं गुदभ्रंशगदापहम् ॥ १४ ॥

चाङ्गेर्यम्ललोणिका तस्याः स्वरसः, कोलस्य क्वाथः, दध्यम्लं दधिरूपसम्लमेतत्त्रयं मिलितं घृताच्चतुर्गुणं क्षारनागरयोः कल्क इदं चाङ्गेरीघृतम् ।

कोमलं पद्मिनीपत्रं यः खादेच्छर्करान्वितम् ।
एतन्निश्चित्य निर्दिष्टं न तस्य गुदनिर्गमः ॥ १५ ॥

अन्यत्क्षुद्ररोगे वक्ष्यति

अथ श्लेष्मातिसारः—

श्लेष्मातिसारे प्रथमं हितं लङ्घनपाचनम् ।
योज्यश्चाऽऽमातिसारघ्नो यथोक्तो दीपनो गणः ॥ १६ ॥
पूतीकव्योषबिल्वाग्निपाठादाडिमहिङ्गुभिः ।
भोजयेत्संस्कृतैर्यूषैः श्लेष्मातीसारपीडितम् ॥ १७ ॥
गोकण्टकगुहाव्याघ्रीकषाये सुशृतं पिबेत् ।
आमश्लेष्मातिसारघ्नं दीपनं पाचनं परम् ॥ १८ ॥
पथ्या सौवर्चलं हिङ्गु सैन्धवातिविषावचम् ।
आमातिसारं कफजं पीतमुष्णाम्बुना जयेत् ॥ १९ ॥
चव्यं सातिविषं कुष्ठं बालबिल्वं सनागरम् ।
वत्सकत्वक्फलं पथ्या छर्दिश्लेष्मातिसारजित् ॥ २० ॥
पथ्याग्निकटुकापाठवचामुस्तकवत्सकैः ।
सनागरैर्जयेत्क्वाथः कल्को वा श्लैष्मिकसृतिम् ॥ २१ ॥
पाठां वचां त्रिकटुकं कुष्ठं च कटुरोहिणीं ।
उष्णाम्बुपीतान्येतानि श्लेष्मातीसारनाशनम् ॥ २२ ॥

इति श्लेष्मातिसारः ।

---

१. ...ष्मिकासृति° ।

अथ संनिपातातिसारः—

समङ्गातिविषा मुस्ता बिल्वर्द्धधिरधातकी ।
कटुजत्वग्ड्‍ठोंर्बिल्वैः काथः सर्वातिसारनुत् ॥ २३ ॥
अभया नागरं मुस्तं गुडेन सह योजितम् ।
चतुः समेयं गुटिका त्रिदोषघ्नी प्रकीर्तिता ॥ २४ ॥
आमातिसारमानाहं सविषन्धं विषूचिकाम् ।
कृमीनरोचकं हन्याद्दीपयत्याशु पाचनम् ॥ २५ ॥

इत्यभयादिगुटिका ।

अथ बृहच्छालिपर्ण्यादि—

बिल्वाम्बुधातकीपाठाशुण्ठीमोचरसाः समाः ।
पीताघ्नन्त्यतीसारं गुडतक्रेण योजिताः ॥ २६ ॥
शालिपर्णी पृश्निपर्णी बृहती कण्टकारिका ।
बलाश्वदंष्ट्राबिल्वाग्निपाठानागरधान्यकम् ॥
एतदाहारसंयोगो हितं सर्वातिसारिणाम् ॥ २७ ॥

इति बृहच्छालिपर्ण्यादि ।

अथ कुटजपुटपाकः—

अवेदनं सुसंपक्वं दीप्ताग्नेः सुचिरोत्थितम् ।
नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥ २८ ॥
स्निग्धं घनं कुटजवल्कमजन्तु बुग्ध-
माद्राय तत्क्षणमतीव च कोथयित्वा ।
जम्बूपलाशपुटतण्डुलतोयसिक्तं
बद्धं कुशेन च बहिर्घनपङ्कलिप्तम् ॥ २९ ॥
सुस्विन्नमेतदवपीड्य रसं गृहीत्वा
क्षौद्रेण युक्तमतिसारवते प्रदद्यात् ।
कृष्णात्रिपुत्रमतपूजित एष योगः
सर्वातिसारहरणे स्वयमेव राजा ॥ ३० ॥

इति कुटजपुटपाकः ।

अथ स्योनाकपुटपाकः—

काश्मरीपद्मपत्राद्यात्पक्वात्कट्वङ्गवल्कलात् ।
सपद्मकेसराद्ग्राह्यी स्याद्रसो मधुसंयुतः ॥ ३१ ॥

पुटपाकस्य पाकोऽयं बहिरारक्तवर्णता ।
भेषजत्वात्पलं चास्य पानमिष्टं चिकित्सकैः ॥ ३२ ॥

इति स्योनाकपुटपाकः ।

कुटजत्वक्कृतः क्वाथो घनीभूतः सुशोभनः ।
लेहितोऽतिविषायुक्तः सर्वातीसारनुद्भवेत् ॥ ३३ ॥
इच्छन्त्यत्राष्टमांशेन क्वाथादतिविषारजः ।

## अथ कुटजावलेहः—

कुटजत्वक् पलशतं जलद्रोणे विपाचयेत् ॥ ३४ ॥
चतुर्भागावशेषं तु कषायमुपकल्पयेत् ।
वस्त्रपूते पुनः काथ्यं यावलेहत्वमागतम् ॥ १३५ ॥
भल्लातकं विडङ्गानि त्रिफला त्रिकटु तथा ।
रसाञ्जनं चित्रकं च कुटजस्य फलानि च ॥ ३६ ॥
वचामतिविषां बिल्वं पाठा मोचरसस्तथा ।
वालकं च समङ्गा च प्रत्येकं तु पलं पलम् ॥ ३७ ॥
त्रिंशत्पलं गुडस्यात्र चूर्णीकृत्य प्रवापयेत् ।
मधुनः कुडवं दत्त्वा घृतस्य कुडवं तथा ॥ ३८ ॥
एवं लेहस्तु शमयेदर्शोरक्तसमुद्भवम् ।
वातिकं पैत्तिकं चैव श्लैष्मिकं सांनिपातिकम् ॥ ३९ ॥
ये च दुर्नामजा रोगास्तांश्च सर्वान्व्यपोहति ।
रक्तपित्तमतीसारं पाण्डुरोगमरोचकम् ॥ १४० ॥
ग्रहणीमार्दवं कार्श्यं श्वयथुं कामलामपि ।
अनुपाने घृतं दद्याद्दधि तक्रं जलं पयः ॥ ४१ ॥
जीर्णान्नपथ्यभोजी स्यादर्शोऽल्पः प्रतिमुच्यते ।
रोगानीकविनाशाय कौटजो लेह ईरितः ॥ ४२ ॥

इति कुटजावलेहः ।

## अन्यच्च—

शतं कुटजमूलस्य क्षुण्णं तोयार्मणे पचेत् ।
क्वाथे पादावशेषेऽस्मिन्वस्त्रपूते पुनः पचेत् ॥ ४३ ॥
सौवर्चलयवक्षारबिडसैन्धवपिप्पली ।
धातकीन्द्रयवाजाजिचूर्णं दत्त्वा पलद्वयम् ॥ ४४ ॥

---

१ ग. 'दमथसारये' । २ क. 'अंखिप' । ३ ग. 'रिमेनाद क्वाथा पु' ।

लिह्याद्द्वरमात्रं तु तच्छीतं मधुसंयुतम् ।
पक्वापक्वमतीसारं नानावर्णं सवेदनम् ॥ ४५ ॥
दुर्वारं ग्रहणीरोगं जयेच्चैतत्प्रवाहिकाम् ।

इति कुटजावलेहः ।

## अथ षडङ्गघृतम्—

लेहे यत्रास्ति नो भागो निर्दिष्टो द्रवकल्कयोः ॥ ४६ ॥
तत्रापि पादिकः कार्यो द्रवकल्को विजानता ।
वत्सकस्य च बीजानि दार्व्याश्च त्वच उत्तमाः ॥ ४७ ॥
पिप्पली शृङ्गबेरं च लाक्षाकटुकरोहिणी ।
षड्भिरेतैर्घृतं सिद्धं पेया मण्डावचारितम् ॥ ४८ ॥
अतीसारं जयेच्छीघ्रं त्रिदोषमपि दारुणम् ।

इति षडङ्गघृतम् ।
इति संनिपातातिसारः ।

## अथ श्लेष्मपित्तातिसारः—

समङ्गा धातकी बिल्वमाम्रास्थ्यम्भोजकेसरम् ॥ ४९ ॥
बिल्वं मोचरसं लोध्रं कुटजस्य फलत्वचम् ।
पिबेत्तण्डुलतोयेन कषायं कल्कमेव च ॥ ५० ॥
श्लेष्मपित्तातिसारघ्नं रक्तं चाऽथ नियच्छति ।

इति समङ्गादिक्वाथश्चूर्णं च ।

## अथ वातश्लेष्मातिसारः—

रसैः स्वादुकटुप्रायैरुभौ वातकफौ नृणाम् ॥ ५१ ॥
कुरुतस्तावतीसारं क्रुद्धौ वह्निं निहत्य च ।
द्रवं सफेनं पुरिषं तच्चामं मन्दगन्धिकम् ॥ ५२ ॥
सशब्दवेदनावन्तं तत्राऽऽमं परिपच्यते ।
नित्यं गुडगुडायन्तं तन्द्रामूर्च्छाभ्रमक्लमैः ॥ ५३ ॥
प्रसक्तसक्थिकट्यूरुजानुपृष्ठास्थिशूलिनः ।
धान्यपञ्चकसंसिद्धो धान्यविश्वकृतोऽथ वा ॥ ५४ ॥
आहारो भिषजा योज्यो वातश्लेष्मातिसारिणे ।
वातातिसारे यच्चोक्तं पाचनं ग्राहि भेषजम् ॥ ५५ ॥
तदत्रापि प्रयुञ्जीत संचिन्त्य कफमारुतौ ।

इति वातश्लेष्मातिसारः ।

अथ च्छर्द्यतीसारः—

बिल्वचूतास्थिनिर्यूहः पीतः साक्षौद्रशर्करः ॥ ५६ ॥
निहन्याच्छर्द्यतीसारं वैश्वानर इवाऽऽहुतिम् ।
पटोलयवधान्याकक्काथः पीतः सुशीतलः ॥ ५७ ॥
शर्करामधुसंयुक्तश्छर्द्यतीसारनाशनः ।
प्रियङ्ग्वञ्जनमुस्ताख्यं पाययेत्तु यथाबलम् ॥ ५८ ॥
तृष्णातीसारच्छर्दिघ्नं सक्षौद्रं तण्डुलाम्बुना ।
जम्ब्वाम्रपल्लवोशीरं वटशृङ्ग्यवरोहकौ ॥ ५९ ॥
रसः कार्योऽथ वा चूर्णं क्षौद्रेण सह योजितम् ।
छर्दिज्वरमतीसारं मूर्छां तृष्णां च दुर्जयाम् ॥ ६० ॥
नियच्छत्यचिराद्युक्तं स्रुतिं वाऽनेकहेतुजाम् ।

इति च्छर्द्यतीसारः ।

अथ शोफातीसारः—

विडङ्गातिविषामुस्तादारुपाठाकलिङ्गकम् ॥ ६१ ॥
मरिचेन समायुक्तं शोफातीसारनाशनम् ।
किराताब्दामृतोदीच्यमुस्ताचन्दनधान्यकैः ॥ ६२ ॥
शोफातीसारहृत्कासतृड्दाहज्वरनाशनः ।

इति शोफातीसारः ।

अथ भयशोकजावतीसारौ—

भयशोकसमुद्भूतौ ज्ञेयौ वातातिसारवत् ॥ ६३ ॥
तयोर्वातहरी कार्या हर्षणाश्वासनैः क्रिया ।

तत्र प्रयोगाः—

विषार्शःकृमिसंभूते हिता चोभयशर्मदा ॥ ६४ ॥
शर्कराधातकीलोध्रपाठारलुपिप्पलीसमङ्गाभिः ।
मोचरसपद्मकेसरसितायुतः क्षौद्रसंमिश्रः ॥ ६५ ॥
अर्शःप्रभवं कृमिजं विरुद्धपानान्नदोषसंभूतम् ।
अतिसारमयं शमयति लेहः कल्याणको नाम्ना ॥ ६६ ॥

इति कल्याणकावलेहः ।

अथाऽऽमपाचनविधिः—

नागरातिविषामुस्ताक्राथः स्यादामपाचनः ।
नागरातिविषाहिङ्गुमुस्तावत्सकचित्रकाः ॥ ६७ ॥
घनतेजोवतीपाठापिप्पलीन्द्रयवाः समाः ।
सैन्धवं कौटजं बीजं वचा कटुकरोहिणी ॥ ६८ ॥
चिढं पाठामतिविषां विडङ्गं विश्वभेषजम् ।
एलाकुटजबीजानि लोध्रं सावरकं निशि ॥ ६९ ॥
वत्सकातिविषाशुण्ठीबिल्वं हिङ्गु वचाम्बु च ।
श्लोकार्धाभिहिता योगाः षडेते पाचना मताः ॥ ७० ॥
उष्णाम्बुमद्यधान्याद्यैः पीता वा श्लक्ष्णचूर्णिताः ।

इत्यामपाचनविधिः ।

अथ प्रवाहिका:—

तैलं सर्पिर्दधि क्षौद्रं सिता विश्वं सफाणितम् ॥ ७१ ॥
सर्वमालोड्य पातव्यं सद्यो हन्ति प्रवाहिकाम् ।
कल्कः स्याद्बालबिल्वानां तिलकल्कश्च तत्समः ॥ ७२ ॥
दध्नः सारोऽष्टमो भागः खण्डो हन्यात्प्रवाहिकाम् ।
बालबिल्वं गुडं तैलं पिप्पलीं विश्वभेषजम् ॥ ७३ ॥
लिह्याद्वाते प्रतिहते सशूले सप्रवाहिके ।

अथ त्र्यूषणाद्यं घृतम्—

त्र्यूषणं त्रिफला चैव चित्रको गजपिप्पली ॥ ७४ ॥
* बिल्वकर्कटिकाहिंस्राविडङ्गं सनिदिग्धिकम् ।
घृतप्रस्थं पचेदेभिर्गवां मूत्रे चतुर्गुणे ॥ ७५ ॥
तत्प्रयोगं पिबेत्काले हन्यात्तेन प्रवाहिकाम् । (?)

इति त्र्यूषणाद्यं घृतम् ।

अथ पुरीषक्षयः—

दीप्ताग्न्यतिपुरीषो यः सार्यते फेनिलं शकृत् ।
स पिबेत्फाणितं शुण्ठीदधितैलपयोऽन्वितम् ॥ ७६ ॥

---

* ग. पुस्तके बिल्वकर्कटिकाऽत्र बिल्वपोटिका ।

---

१ क. °धान्योर्वैः पी° ।

दध्ना ससारेण समाक्षिकेण भुञ्जीत निःसारकपीडितस्तु ।
सुतप्त*कुप्यक्कथितेन वाऽपि क्षीरेण शीतेन मधुप्लुतेन ॥ ७७ ॥

बलाविश्वशृतं क्षीरं गुडतैलानुयोजितम् ।
दीप्ताग्निं पाययेत्प्रातः सुखदं वर्चसः क्षये ॥ ७८ ॥
शशमांसं रुचिकरं सखण्डं सघृतं दधि ।
विपाच्य खादेत्सेवेच्च मुद्गान्नं शकृतः क्षये ॥ ७९ ॥

इति पुरीपक्षयः ।

तत्र सामान्यम्—

विबद्धवातो विट्शूलपरीतः सप्रवाहिकः ।
सरक्तपिच्छश्च पयः पिबेत्तृष्णासमन्वितः ॥ १८० ॥
यथाऽमृतं तथा क्षीरमतीसारेषु पूजितम् ।
सरक्तोत्थेषु तत्पेयमग्र्यं मार्गेषु संस्कृतम् ॥ ८१ ॥

अथ सर्वातीसारे—

यथा शृतं भवेद्वारि तथाऽतीसारनाशनम् ।
अतीसारं निहन्त्येव शतभागशृतं जलम् ।
अतीसारेषु पानीयमधिकस्याधिकं फलम् ॥ ८२ ॥

अथ कुटजाष्टकावलेहः—

पक्वाद्रीत्कुटजात्तुलां जलघटेऽष्टांशं पुनः पालिकैः
पाठा शाल्मलिधातकीघनविषालज्जाम्रबिल्वैः सह ।
तल्लिह्यात्कुटजाष्टकं जलगवाजाक्षीरमण्डानुपोऽ-
तीसारं ग्रहणीमसृग्दरसमृक्पित्तासृगर्शो जयेत् ॥ ८३ ॥

अथ कपित्थाष्टकम्—

धान्याजाजीयवानीरुचकजलचतुर्जातविश्वोपणाग्नि-
ग्रन्थ्यैकांशं त्रिभागं करिकणमगधादीप्यवृक्षाम्लबिल्वम् ।
श्वेताषट्कं कपित्थाष्टकमिदमरुचिं गुल्मयक्ष्मप्रतिश्या-
तीसारार्शोग्निसादग्रहणिगलगदश्वासकासान्निहन्ति ॥ ८४ ॥

इति कपित्थाष्टकम् ।

---

* क. पुस्तके—सुतप्तसुवर्णरजततास्रलोहनिर्वापणात्कथितेन ।

---

१ क. पक्वाद्री° । २ ग. करकणमगधा°।

अथ लघुलाईचूर्णम्—

कर्षं गन्धकमर्धपारदमुभौ कुर्याच्छुभां कज्जलीं
त्र्यक्षं त्र्यूषणतश्च पञ्चलवणं स्यादर्धकर्षं पृथक्।
तच्छक्रासनचूर्णतुल्यनिहितं तत्सर्वमेकीकृतं
स्वादेच्छाणमितं सकाञ्जिकपलं मन्दाग्न्यतीसारनुत् ॥८५॥

इति लघुलाईचूर्णम्।

अथ बृहल्लाईचूर्णम्—

दीप्यौ क्षारत्रयाग्नित्रिकटुगजकणावेल्लमल्लातकोग्रा
द्वे जीरे हिङ्गुकुष्ठाखिलपटुरसगन्धाभ्रधूमोत्तमाश्च।
एतेषां तुल्यगन्धं रज उदितमतीसारशूलग्रहण्या-
नाहप्लीहप्रमेहानलहतिषु बृहल्लाइचूर्णं प्रशस्तम् ॥ १८६ ॥

इति बृहल्लाईचूर्णम्।

अथ मृतसंजीवनो रसः—

रसगन्धौ विषं सूतात्पादभागं समं च तैः।
गगनं भावयेदेभी रसैः सर्वं विचूर्णयेत् ॥ ८७ ॥
सर्पाक्षी धातकी स्वर्णा विषा विश्वजयाऽम्बुदम्।
यवानी बिल्वधान्याकजीरपाठाः कणा शिवा ॥ ८८ ॥
कुटजत्वक्कपित्थं च दाडिमं सकलिङ्गकम्।
इत्येषां गोलकं कृत्वा वालुकायन्त्रगं पचेत् ॥ ८९ ॥
मृतसंजीवनो नाम रसः स्यादस्य वल्लकः।
षट्प्रकारमतीसारं हन्त्यनेनानुशीलितः ॥ ९० ॥
विश्वाब्दधातकीदारु यवान्यम्बुकणावचम्।
कुटजो धान्यकं बिल्वं पाठेन्द्रयवशाल्मलम् ॥ ९१ ॥
विषाभयं समं चैषां चूर्णेन मधुना सह।

इति मृतसंजीवनो रसः।

अथ चन्द्रप्रभावटी—

मृतं सूतं मृतं स्वर्णं मृतं चाभ्रं समं समम् ॥ ९२ ॥

---

१ क. °र्धकं गन्धक° । २ क, ख तद् । ३ ग. °तं ताम्रं सूतं च° ।

तुल्यं च खादिरं सारं तथा मोचरसं क्षिपेत् ।
द्रवैः शाल्मलिमूलोत्थैर्मर्दयेत्प्रहरद्वयम् ॥ ९३ ॥
चणमात्रां वटीं कृत्वा खादेज्जीरकसंयुताम् ।
त्रिदोषजमतीसारं सज्वरं नाशयेद्ध्रुवम् ॥ ९४ ॥

इति चन्द्रप्रभावटी ।

स्नानावगाहमभ्यङ्गं गुरुस्निग्धान्नभोजनम् ।
व्यायाममग्निसंतापमतीसारी विवर्जयेत् ॥ ९५ ॥
इति किंचिन्निगदितमतीसारचिकित्सितम् ।
ग्रन्थभूयस्त्वभीत्याऽत्र नाधिकं किंचिदीरितम् ॥ १९६ ॥

इति योगतरङ्गिण्यां त्रिमल्लभट्टग्रथितायामतीसारचिकित्सा नाम चतुष्षष्टितमस्तरङ्गः ॥ ६४ ॥

---

अथ पञ्चषष्टितमस्तरङ्गः ।

---

## अथ ज्वरातीसारः—

पृथगुक्तनिदानेन ज्वरातीसारनिर्णयः ।
कर्तव्यो भिषजा तत्र तत्क्रमेण विधिर्यतः ॥ १ ॥
ज्वरातीसारयोरुक्तं निदानं यत्पृथक् पृथक् ।
तस्माज्ज्वरातिसारस्य तेन नेहोदितं पुनः ॥ २ ॥
च्यवमानं ज्वरोत्क्लिष्टमुपेक्षेत मलं सदा ।
अतिप्रवर्तमानं तु साधयेत्स्वैश्चिकित्सितैः ॥ ३ ॥
ज्वरातिसारयोरुक्तं भेषजं यत्पृथक् पृथक् ।
न तन्मिलितयोः कार्यमन्योन्यं वर्धयेद्यतः ॥
अतस्तौ प्रतिकुर्वीत विशेषोक्तचिकित्सितैः ॥ ४ ॥
लङ्घनमुभयोरुक्तं मिलिते कार्यं विशेषतस्तदनु ।
उत्पलषष्टिकासिद्धं लाजकमण्डादिकं पेयम् ॥ ५ ॥

यथा—

पृश्निपर्णीबलाबिल्वनागरोत्पलधान्यकैः ।
ज्वरातिसारी पेयां वा पिबेत्साम्लां शृतां नरः ॥ ६ ॥

इत्युत्पलषट्कम् ।

अथ पाठासप्तकक्काथः—

धातकी क्काथसंसिद्धा विश्वभेषजकल्किता ।
दाडिमाम्लयुता पेया ज्वरातीसारशूलिनाम् ॥ ७ ॥
एरण्डमूलयवगोक्षुरकारनालैः
स्विन्नां लिहन्ति विजयां मधुनाऽन्वितां ये ।
तेषां प्रणाशमुपयान्त्युदरामयास्तु
सर्वे सशूलविषमज्वरकासहिक्काः ॥ ८ ॥
मुस्ताकरेणूपपदाक्काथो मधुसितायुतः ।
पीतो ज्वरातिसारस्य तृष्णावम्योश्च नाशनः ॥ ९ ॥
पाठेन्द्रयवभूनिम्बमुस्तापर्पटकामृता ।
जयत्याममतीसारं ज्वरं च समहौषधा ॥ १० ॥
इति पाठासप्तकक्काथः ।

अथ नागरादिः—

नागरातिविषामुस्ताभूनिम्बामृतवत्सकैः ।
सर्वज्वरहरः क्वाथः सर्वातीसारनाशनः ॥ ११ ॥
इति नागरादिः ।

अथ बृहद्गुडूच्यादिः—

गुडूचीप(पा)माल्याम्बुदकुटजयावपातिविषा-
किरातोशीरालाहिमसलिलविश्वौषधकृतः ।
कषायः पीतोऽसौ व्यपनयति बलाससहितम्
ज्वरातीसारं रुक्तृडरुचिवमीदाहशमनः ॥ १२ ॥
इति बृहद्गुडूच्यादिः ।

अथ ह्रीवेरादिः—

ह्रीवेराऽतिविषा मुस्ता बिल्वनागरधान्यकम् ।
पिबेत्पिच्छाविबन्धघ्नं शूलदोषामपाचनम् ॥ १३ ॥
सरक्तं हन्त्यतीसारं सज्वरं वाऽपि विज्वरम् ।
इति ह्रीवेरादिः ।

अथ कलिङ्गादिकाथः—

कलिङ्गाऽतिविषा शुण्ठी किराताम्बुयवासकम् ॥ १४ ॥

---

१ ग. °त्वविश्व° । २ ग. °क्काः । कणा६° । ३ क. °षधः ॥ १० ॥

ज्वरातिसारसंतापं नाशयेदविकल्पतः ।

इति कलिङ्गादिक्वाथः ।

अथोशीरादिक्वाथः—

उत्पलं दाडिमत्वक्च पद्मकेसरमेव च ॥ १५ ॥
पिबेत्तण्डुलतोयेन ज्वरातीसारनाशनम् ।
उशीरं वालकं मुस्तं धान्यकं बिल्वमेव च ॥ १६ ॥
समङ्गा धातकी लोध्रं विश्वं दीपनपाचनम् ।
हन्त्यरोचकपिच्छामविबन्धं सातिवेदनम् ॥ १७ ॥
सशोणितमतीसारं सज्वरं वाऽथ विज्वरम् ।

इत्युशीरादिक्वाथः ।

अथ बिल्वादिः—

बिल्वबालकमूनिम्बगुडूचीधान्यनागरैः ॥ १८ ॥
कुटजाब्दामृताक्वाथो ज्वरातीसारशूलनुत् ।

इति बिल्वादिः ।

अथ व्योषाद्यं चूर्णम्—

व्योषवत्सकबीजानि निम्बभूनिम्बमार्कवम् ॥ १९ ॥
चित्रकं रोहिणीं पाठां दार्वीमतिविषां वचाम् ।
श्लक्ष्णचूर्णीकृतानेतांस्तत्तुल्यां वत्सकत्वचम् ॥ २० ॥
सर्वमेकत्र संयुक्तं पातव्यं तण्डुलाम्बुना ।
सक्षौद्रं वा पिबेदेतत्पाचनं ग्राहि भेषजम् ॥ २१ ॥
तृष्णारुचिप्रशमनं ज्वरातीसारनाशनम् ।
कामलाग्रहणीदोषान् गुल्मान् प्लीहानमेव च ।
प्रमेहं पाण्डुरोगं च श्वयथुं चापकर्षति ॥ २२ ॥

इति व्योषाद्यं चूर्णम् ।

रसः पूर्वोक्त एव ।



इति श्रीयोगतरङ्गिण्यां ज्वरातीसारचिकित्साकथनं नाम पञ्चषष्टितमस्तरङ्गः ॥ ६५ ॥

अथ षट्पञ्चाशत्तमस्तरङ्गः ।

---

## अथ ग्रहण्यधिकारः—

### अथ ग्रहणीनिदानम्—

अतीसारे निवृत्तेऽपि मन्दाग्नेरहिताशिनः ।
भूयः संदूषितो वह्निर्ग्रहणीमपि दूषयेत् ॥ १ ॥

ग्रहणीं किं तामाह—

षष्ठी पित्तधरा नाम या कला परिकीर्तिता ।
पक्वामाशयमध्यस्था ग्रहणी साऽभिधीयते ॥ २ ॥

कला किं तामाह—

धात्वाशयान्तरे यस्य यः क्लेदस्त्ववतिष्ठते ।
देहोष्मणा विपक्वस्तु सा कलेत्यभिधीयते ॥ ३ ॥

ग्रहणीमाह—

एकैकशः सर्वशश्च दोषैरत्यर्थमूर्छितैः ।
सा दुष्टा बहुशो भुक्तमाममेव विमुञ्चति ॥ ४ ॥
पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम् ।
ग्रहणीरोगमाहुस्तमायुर्वेदविदो जनाः ॥ ५ ॥

पूर्वरूपमाह—

पूर्वरूपं तु तस्येदं तृष्णालस्यं बलक्षयः ।
विदाहोऽन्नस्यपाकश्च चिरात्कायस्य गौरवम् ॥ ६ ॥

तत्र वातः—

कटुतिक्तकषायातिरूक्षसंदुष्टभोजनैः ।
प्रमितानशनात्यध्ववेगनिग्रहमैथुनैः ॥ ७ ॥
मारुतः कुपितो वह्निं संदूष्य कुरुते गदान् ।

व्यथाः—

तस्यान्नं पच्यते दुःखं शुक्तपाकः खराङ्गता ॥ ८ ॥
कण्ठास्यशोषः क्षुत्तृष्णा तिमिरं कर्णयोः स्वनः ।
पार्श्वोरुवङ्क्षणग्रीवारुगभीक्ष्णविषूचिका ॥ ९ ॥
हृत्पीडाकार्श्यदौर्बल्यं वैरस्यं परिकर्तिका ।
गृद्धिः सर्वरसानां च मनसः सदनं तथा ॥ १० ॥

जीर्णे जीर्यति चाऽऽध्मानं भुक्ते स्वास्थ्यमुपैति च ।
स वातगुल्महृद्रोगप्लीहाशङ्की च मानवः ॥ ११ ॥
चिराद्दुःखं द्रवं शुष्कं तन्वामं शब्दफेनवत् ।
पुनः पुनः सृजेद्वर्चः कासश्वासार्दितोऽनिलात् ॥ १२ ॥

अथ पित्तजा—

कट्वजीर्णविदाह्यम्लक्षाराद्यैः पित्तमुल्बणम् ।
आप्लावयद्धन्त्यनिलं जलं तप्तमिवानलम् ॥ १३ ॥
सोऽजीर्णं नीलपीताभं पीताभः सार्यते द्रवम् ।
पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृडर्दितः ॥ १४ ॥

अथ कफजा—

गुर्वतिस्निग्धशीतादिभोजनादतिभोजनात् ।
भुक्तमात्रस्य च स्वप्नाद्धन्त्यग्निं कुपितः कफः ॥ १५ ॥
तस्यान्नं पच्यते दुःखं हृल्लासच्छर्द्यरोचकाः ।
आस्योपदेहमाधुर्यकासष्ठीवनपीनसाः ॥ १६ ॥
हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु ।
दुष्टो मधुर उद्गारः सदनं स्त्रीष्वहर्षणम् ॥ १७ ॥
भिन्नामश्लेष्मसंसृष्टं गुरुवर्चःप्रवर्तनम् ।
अकृशस्यापि दौर्बल्यमालस्यं च कफात्मके ॥ १८ ॥

अथ त्रिदोषजा—

पृथग्वातादि निर्दिष्टं हेतु लिङ्गसमागमे ।
त्रिदोषं निर्दिशेदेवं ग्रहणीदोषमुल्बणम् ॥ १९ ॥

घटीयन्त्राख्यं ग्रहणीरोगमाह—

प्रसुप्तिः पार्श्वयोः शूलं तथा जलघटीध्वनिः ।
तं वदन्ति घटीयन्त्रमसाध्यं ग्रहणीगदम् ॥ २० ॥

अथ संग्रहणीलक्षणम्—

अन्त्रकूजनमालस्यं दौर्बल्यं सदनं भ्रमः ।
द्रवं घनं सितं स्निग्धं सकटीवेदनं शकृत् ॥ २१ ॥

---

१ ग. °म् । संप्लाव° । २ ग. °तिमैथुनात् । ३ ग. °यंकफष्ठी° । ४ ग. °मं तस्या वक्ष्यामि लक्षणम् ।

आमं बहु सपैच्छिल्यं सशब्दं मन्दवेदनम् ।
पक्षान्मासाद्दशाहाद्वा द्वादशाहाद्विमुञ्चति ॥ २२ ॥
दिवा प्रकोपो भवति रात्रौ सात्म्यं च गच्छति ।
दुर्विज्ञेया दुर्निवारा चिरकालानुबन्धिनी ।
सा भवेदामवातेन संग्रहाद्ग्रहणी मता ॥ २३ ॥

अथ साध्यासाध्यलक्षणम्—

लिङ्गैरसाध्यो ग्रहणीविकारस्तैर्यैरतीसारगदो न सिध्येत् ।
वृद्धस्य नूनं ग्रहणीविकारो हत्वा तनुं नो विनिवर्तते वा ॥२४॥
बालके ग्रहणीसाध्या यूनि कृच्छ्रा प्रकीर्तिता ।
वृद्धे त्वसाध्या विज्ञेया मतं धन्वन्तरेरिदम् ॥ २५ ॥

इति योगतरङ्गिण्यां ग्रहणीनिदानं नाम षट्षष्टितमस्तरङ्गः ॥ ६६ ॥

---

अथ सप्तषष्टितमस्तरङ्गः ।

---

## अथ ग्रहणीचिकित्सा—

### तत्र वातजा—

ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत् ।
लङ्घनैर्दीपनीयैश्च सदाऽतीसारभेषजैः ॥ १ ॥
दोषं सामं निरामं च विद्यादत्रातिसारवत् ।
अतीसारोक्तविधिना तस्याऽऽमं च विपाचयेत् ॥ २ ॥
पेयादि पटु लध्वन्नं पञ्चकोलादिभिर्युतम् ।
दीपनानि च तक्रं च ग्रहण्यां योजयेद्भिषक् ॥ ३ ॥
कपित्थबिल्वचाङ्गेरीतक्रदाडिमसाधिता ।
यवागूः पाचयत्यामं शकृत्संवर्तयत्यपि ॥ ४ ॥

संवर्तयति घनी करोति ।

ज्ञात्वा तु परिपक्वं च वातजं ग्रहणीगदम् ।
दीपनैर्भेषजैः पक्वैः सर्पिर्भिः समुपाचरेत् ॥ ५ ॥

तस्या उपचाराः—

धान्यबिल्वबलाशुण्ठीशालिपर्णीशृतं जलम् ।
स्याद्वातग्रहणीदोषे सानाहे सपरिग्रहे ॥ ६ ॥

---

१ ग. शान्ति ।

अथ पञ्चमूलाद्यं घृतम्—

पञ्चमूलाभयाव्योषपिप्पलीमूलसैन्धवैः ।
रास्नाक्षारद्वयाजाजीविडङ्गसटिभिर्घृतम् ॥ ७ ॥
पक्वेन मातुलुङ्गस्य स्वरसेनाऽऽर्द्रकस्य च ।
शुष्कमूलककोलाम्बुचुक्रिकादाडिमस्य च ॥ ८ ॥
तक्रमस्तुसुरामण्डसौवीरकतुषोदकैः ।
काञ्जिकेन च तत्पक्त्वा पीतमग्निकरं परम् ॥ ९ ॥
शूलगुल्मोदरानाहकासयोनिगदापहम् ।

अत्र सुराभावे द्विगुणं काञ्जिकं देयम् ।

इति पञ्चमूलाद्यं घृतम् ।

अथ शुण्ठीघृतम्—

घृतं नागरकल्केन सिद्धं वातानुलोमनम् ।
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥

इति शुण्ठी घृतम् ।

इति वातग्रहणी ।

अथ पित्तग्रहणी—

रसाञ्जनादिचूर्णम्—

रसाञ्जनं प्रतिविषा वत्सकस्य फलत्वचौ ॥ ११ ॥
नागरं धातकी चैव सक्षौद्रं तण्डुलाम्बुना ।
पित्तग्रहणिदोषार्शोरक्तपित्तातिसारनुत् ॥ १२ ॥

इति रसाञ्जनादिचूर्णम् ।

अथ नागराद्यं चूर्णम्—

श्रीफलशलाटुकल्को नागरचूर्णेन मिश्रितः सगुडः ।
ग्रहणीगदमत्युग्रं तक्रभुजा शीलितो जयति ॥ १३ ॥
नागरातिविषामुस्तं धातकी च रसाञ्जनम् ।
वत्सकत्वक्फलं बिल्वं पाठातिक्तकरोहिणी ॥ १४ ॥
पिबेत्समांशं तच्चूर्णं सक्षौद्रं तण्डुलाम्बुना ।
पित्तजे ग्रहणीदोषे रक्तं यच्चोपवेश्यते ॥ १५ ॥

अर्शांस्यपि गुदे शूलं जयेच्चैव प्रवाहिकाम् ।
नागराद्यमिदं चूर्णं कृष्णात्रेयेण पूजितम् ॥ १६ ॥

इति नागराद्यं चूर्णम् ।

## अथ चन्दनाद्यं घृतम्—

चन्दनं पद्मकोशीरं पाठामूर्वाकटुत्रयम् ।
षड्ग्रन्थासारिवास्फोतासप्तपर्णाटरूषकम् ॥ १७ ॥
पटोलोदुम्बराश्वत्थवटप्लक्षकपीतकान् ।
कटुकारोहिणीमुस्तनिम्बं च द्विपलांशकम् ॥ १८ ॥
द्रोणेऽपां साधयेत्पादशेषे प्रस्थघृतात्पचेत् ।
किराततिक्तेन्द्रयवधवीरामागधिकोत्पलैः ॥ १९ ॥
कल्कैरक्षसमैः पेयं तत्पित्तग्रहणीगदे ।

इति चन्दनाद्यं घृतम् ।

व्रीहिप्रा(ण्य)ङ्गयोः क्राथमुषितं परिवर्जयेत् ॥ २० ॥
नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम् ।
विदाहि गुरु विष्टम्भि विरूढं वातकोपनम् ॥ २१ ॥

## अथ श्लेष्मग्रहणी—

## अथ रास्नादिचूर्णम्—

ग्रहण्यां कफदुष्टायां तीक्ष्णैः प्रच्छर्दने कृते ।
लवणाम्लकटुक्षारैः क्रमाद्वह्निं विवर्धयेत् ॥ २२ ॥
शठी व्योषाऽभयाक्षारो ग्रन्थिकं बीजपूरकम् ।
लवणाम्लाम्बुना पेयं श्लैष्मिके ग्रहणीगदे ॥ २३ ॥
रास्नापथ्याशटीव्योषं द्वौ क्षारौ लवणानि च ।
ग्रन्थिकं मातुलुङ्गस्य सममेकत्र चूर्णयेत् ॥ २४ ॥
पिबेदुष्णेन तोयेन श्लैष्मिके ग्रहणीगदे ।

इति रास्नादिचूर्णम् ।

## अथ सर्वजाग्रहणी—

## तत्र शुण्ठ्यादिः—

सर्वजायां ग्रहण्यां तु सामान्यो विधिरिष्यते ॥ २५ ॥

---

१ क. वाथा । २ ग. °वणीत° ।

दीपनान्यन्नपानानि चूर्णारिष्टघृतानि च ।
प्रविभज्य यथावस्थं सर्वजे बस्तिकर्म च ॥ २६ ॥
शुण्ठीं समुस्तातिविषां गुडूचीं पिबेज्जलेन क्वथितां समांशाम् ।
मन्दानलत्वे सततामतायामामानुबन्धे ग्रहणीगदे च ॥ २७ ॥

इति शुण्ठ्यादिः ।

अथ चित्रकादिगुटिका—

चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च ।
व्योषं हिङ्ग्वजमोदा च चव्यं चैकत्र चूर्णयेत् ॥ २८ ॥
गुटिका मातुलुङ्गस्य दाडिमस्य रसेन वा ।
कृता विपाचयत्यामं दीपयत्याशु चानलम् ॥ २९ ॥

इति चित्रकादिगुटिका ।

अथ कल्याणकावलेहः—

भैषज्यमेकतः सर्वं ग्रहण्यां तक्रमेकतः ।
पथ्यं मधुरपाकित्वान्न च पित्तप्रकोपनम् ॥ ३० ॥
कषायोष्णविकाशित्वाद्रौक्ष्याच्च कफे हितम् ।
वाते स्वाद्वम्लसान्द्रत्वात्सद्यस्कमविदाहि तत् ॥ ३१ ॥
तावत्संवर्धयेत्तक्रं यावत्स्याद्द्रविड्कृता ।
ततस्तु ह्रासयित्वा तदन्नं संभोजयेत्क्रमात् ॥ ३२ ॥
अरुचौ मातुलुङ्गस्य केसरं साज्यसैन्धवम् ।
दद्याद्भोजनकाले तु प्रातर्नक्तं च रोगिणे ॥ ३३ ॥
त्रिप्रस्थामलकीरसाद्गुडतुलार्धं च त्रिवृत्तैलयो-
र्मान्यौ पञ्चपटुर्विदीप्यहपुषाजाजीवरापट्कटु ।
पाठोल्लाकणवेल्लमाक्षिकसयं लेहस्त्रिजातव्रण-
स्वग्बीजोदरमेहरुग्ग्रहणिपाण्डूवर्शस्सु कल्याणकः ॥३४॥

इति कल्याणकावलेहः ।

अथ वृद्धगङ्गाधरं चूर्णम्—

मुस्तावालकलोध्रवत्सकवृकीविश्वारलुश्रीमदा-
लज्जामोचरसाभ्रकौटजविषाचूर्णस्तु गङ्गाधरः ।

१ ग. °टाल्वाक्र° ।

पीतस्तण्डुलवारिमाक्षिकयुतः कर्षोन्मितो वाहिका-
मुग्रां च ग्रहणीं निहन्ति सहसा सर्वातिसारामयान् ॥३५॥

इति वृद्धगङ्गाधरं चूर्णम् ।

अथ बृहल्लवङ्गादिचूर्णम्—

अर्धश्वेतालवङ्गागरुतगरतुगात्वक्कणा शीतशुण्ठी-
जीरोशीरेभजातीफलनलदजलाह्लोत्पलैलेन्दुचूर्णम् ।
दोषार्तेऽल्पास्रशुक्रज्वलनबलरुचौ गुल्ममेहप्रतिश्या-
हिक्काकासातिसारक्षयतमकगलोरुग्रहेषु ग्रहण्याम् ॥ ३६ ॥

इति बृहल्लवङ्गादिचूर्णम् ।

अथ जातीफलाद्यं चूर्णम्—

जातीफलाग्निहिमवेलतिलेन्दुजीर-
वांशीत्रिकत्रयमनक्षमितं नतं च ।
तालीसदेवकुसुमे अपि चूर्णमेषां
द्विःशर्करं च सममङ्गमिदं ग्रहण्याम् ॥ ३७ ॥

इति जातीफलाद्यं चूर्णम् ।

अथ महाकल्याणगुडः—

पिप्पली पिप्पलीमूलं चित्रको गजपिप्पली ।
धान्यकं च विडङ्गानि यवानी मरिचानि च ॥ ३८ ॥
त्रिफला चाजमोदा च नीलिनी जीरकस्तथा ।
सौवर्चलं सैन्धवं च सामुद्रं रुचकं विडम् ॥ ३९ ॥
आरग्वधस्त्वचं पत्रं सूक्ष्मैला चोपकुञ्चिका ।
नागरेन्द्रयवा चैव षड्विंशत्येककार्षिकम् ॥ ४० ॥
मृद्वीकायाः पलान्यत्र चत्वारि कथितानि हि ।
त्रिवृतायाः पलान्यष्टौ गुडस्यार्धतुलां तथा ॥ ४१ ॥
तिलतैलं पलान्यष्टौ रसमामलकं तथा ।
प्रस्थत्रयमिदं सर्वं शनैर्मृद्वग्निना पचेत् ॥ ४२ ॥
यदा पक्वं विजानीयात्तदैनमवतारयेत् ।
उदुम्बरं चाऽऽमलकं बद*रं वा यथाफलम् ॥ ४३ ॥

* ग. पुस्तके—'रं मा प्रकल्पयेत् । यथाबलं प्रयुञ्जीत समीक्ष्य मतिमान्भिषक् । सर्वांश्च प्र॰ ।

तावन्मात्रमिदं खादेद्भक्षयेद्वा यथाऽनलम् ।
निखिलान्ग्रहणीरोगान्प्रमेहांश्चैव विंशतिम् ॥ ४४ ॥
अर्शांसि पञ्च गुल्मांश्च कुष्ठानाहभगंदरम् ।
उरोघातं प्रतिश्यायं दौर्बल्यं वह्निसंक्षयम् ॥ ४५ ॥
धातुक्षीणो वयःक्षीणः स्त्रीभिः क्षीणः क्षयी तथा ।
नारीणां चैव संसेव्यो वन्ध्यानां चैव पुत्रदः ॥ ४६ ॥
रूपौदार्यं स्वरौदार्यं मेधामावहति स्थिराम् ।
महाकल्याणको ह्येष रसायनमनुत्तमम् ॥ ४७ ॥
कल्याणकगुडश्चैष पित्तपादं समश्नुयात् ।
ज्वरेऽपि च सदा योज्यो रक्तपित्ते सविड्ग्रहे ॥ ४८ ॥

इति महाकल्याणको गुडः ।

अथ सर्जरसचूर्णम्—

श्वेतो वा यदि वा रक्तः सुपक्वो ग्रहणीगदः ।
गुडेनाधिकसर्जेन भक्षितेनाऽऽशु शाम्यति ॥ ४९ ॥

सर्जः राळ इति लोके ।

इति सर्जरसचूर्णम् ।

अथ बिल्वादिघृतम्—

बिल्वाब्दशक्रयववालकमोचसिद्धं-
मार्जं पयः पिबति यो दिवसत्रयेण ।
सोऽतिप्रवृद्धचिरजं ग्रहणीविकारं
सामं सशोणितमसाध्यमपि क्षिणोति ॥ ५० ॥
बिल्वाग्निचव्यार्द्रकशृङ्गवेर-
क्वाथेन कल्केन च सिद्धमाज्यम् ।
सच्छागदुग्धं ग्रहणीगदोत्थे
शोफाग्निसादारुचिनुद्वरिष्ठम् ॥ ५१ ॥

इति बिल्वादिघृतम् ।

अथ तक्रहरीतकी—

त्रिकांशे तक्रस्य द्विकुडवपटौ पथ्यमभयाः
पचेद्यस्थीः सार्धं घृततिलजशुण्ठ्यग्निकुडवैः ।

१ क. °चिरप्रसृता सा° ।

पीतस्तण्डुलवारिमाक्षिकयुतः कर्षोन्मितो वाहिका-
मुग्रां च ग्रहणीं निहन्ति सहसा सर्वातिसारामयान् ॥३५॥

इति वृद्धपङ्काधरं चूर्णम् ।

अथ बृहल्लवङ्गादिचूर्णम्—

अर्धश्वेताललवङ्गागरुतगरतुगात्वक्कणा शीतशुण्ठी-
जीरोशीरेभजातीफलनलदजलालोत्पलैलेन्दुचूर्णम् ।
दोषार्तेऽल्पास्रशुक्रज्वलनबलरुचौ गुल्ममेहप्रतिश्या-
हिक्काकासातिसारक्षयतमकगलोरुग्रहेषु ग्रहण्याम् ॥ ३६ ॥

इति बृहल्लवङ्गादिचूर्णम् ।

अथ जातीफलाद्यं चूर्णम्—

जातीफलाग्निहिमवेल्लतिलेन्दुजीर-
धांशीत्रिकत्रयमनक्षमितं नतं च ।
तालीसदेवकुसुमे अपि चूर्णमेषां
द्विःशर्करं च सममङ्गमिदं ग्रहण्याम् ॥ ३७ ॥

इति जातीफलाद्यं चूर्णम् ।

अथ महाकल्याणगुडः—

पिप्पली पिप्पलीमूलं चित्रको गजपिप्पली ।
धान्यकं च विडङ्गानि यवानी मरिचानि च ॥ ३८ ॥
त्रिफला चाजमोदा च नीलिनी जीरकस्तथा ।
सौवर्चलं सैन्धवं च सामुद्रं रुचकं विडम् ॥ ३९ ॥
आरग्वधस्त्वचं पत्रं सूक्ष्मैला चोपकुञ्चिका ।
नागरेन्द्रयवा चैव षड्विंशत्येककार्षिकम् ॥ ४० ॥
मृद्वीकायाः पलान्यत्र चत्वारि कथितानि हि ।
त्रिवृतायाः पलान्यष्टौ गुडस्यार्धतुलां तथा ॥ ४१ ॥
तिलतैलं पलान्यष्टौ रसमामलकं तथा ।
प्रस्थत्रयमिदं सर्वं शनैर्मृद्वग्निना पचेत् ॥ ४२ ॥
यदा पक्वं विजानीयात्तदैनमवतारयेत् ।
उदुम्बरं चाऽऽमलकं बदरं* वा यथाफलम् ॥ ४३ ॥

* प. पुस्तके—°रं वा प्रकल्पयेत् । यथाबलं प्रयुञ्जीत समीक्ष्य मतिमान्भिषक् । सर्वांश्च प्र° ।

तावन्मात्रमिदं खादेद्भक्षयेद्वा यथाऽनलम् ।
निखिलान्ग्रहणीरोगान्प्रमेहांश्चैव विंशतिम् ॥ ४४ ॥
अर्शांसि पञ्च गुल्मांश्च कुष्ठानाहभगंदरम् ।
उरोघातं प्रतिश्यायं दौर्बल्यं वह्निसंक्षयम् ॥ ४५ ॥
धातुक्षीणो वयःक्षीणः स्त्रीभिः क्षीणः क्षयी तथा ।
नारीणां चैव संसेव्यो वन्ध्यानां चैव पुत्रदः ॥ ४६ ॥
रूपौदार्यं स्वरौदार्यं मेधामावहति स्थिराम् ।
महाकल्याणको ह्येष रसायनमनुत्तमम् ॥ ४७ ॥
कल्याणकगुडश्चैष पित्तुपादं समश्नुयात् ।
ज्वरेऽपि च सदा योज्यो रक्तपित्ते सविड्ग्रहे ॥ ४८ ॥

इति महाकल्याणको गुडः ।

## अथ सर्जरसचूर्णम्—

श्वेतो वा यदि वा रक्तः सुपक्वो ग्रहणीगदः ।
गुडेनाधिकसर्जेन भक्षितेनाऽऽशु शाम्यति ॥ ४९ ॥

सर्जः राळ इति लोके ।
इति सर्जरसचूर्णम् ।

## अथ बिल्वादिघृतम्—

बिल्वाब्दशक्रयववालकमोचसिद्ध-
माजं पयः पिबति यो दिवसत्रयेण ।
सोऽतिप्रवृद्धचिरजं ग्रहणीविकारं
सामं सशोणितमसाध्यमपि क्षिणोति ॥ ५० ॥
बिल्वाग्निचव्यार्द्रकशृङ्गबेर-
क्वाथेन कल्केन च सिद्धमाज्यम् ।
सच्छागदुग्धं ग्रहणीगदोत्थे
शोफाग्निसादारुचिनुद्वरिष्ठम् ॥ ५१ ॥

इति बिल्वादिघृतम् ।

## अथ तक्रहरीतकी—

समावाप्याजाजीमरिचचपलादीप्यकपलं
लिहन्नेता हन्ति ग्रहणिमनलं दीपयति च ॥ ५२ ॥

इति तक्रहरीतकी ।

अथ रसाः—

रसं गन्धं विषं व्योषं टङ्कणं लोहभस्म च ।
अजमोदाहिफेनौ च सर्वतुल्यं मृताभ्रकम् ॥ ५३ ॥
चित्रकस्य कषायेण मर्दयेद्याममात्रकम् ।
मरिचाभां वटीं कृत्वा खादेदेकां जयेद्रसैः ॥ ५४ ॥
चतुर्विधां च ग्रहणीं रहस्यं तदिदं स्मृतम् ।

इति ग्रहणीगजकेसरिरसः ।

अथ सुवर्णरसपर्पटी—

शुद्धं सूतं पलमितं तूर्यांशस्वर्णसंयुतम् ॥ ५५ ॥
मर्दयेन्निम्बुनीरेण यावदेकत्वमाप्नुयात् ।
प्रक्षाल्योष्णाम्बुना पश्चात्पलमात्रे सुगन्धके ॥ ५६ ॥
द्रुते लोहमये पात्रे बादरानलयोगतः ।
प्रक्षिप्य चालयेल्लोह्यां मन्दं लोहशलाकया ॥ ५७ ॥
ततः पाकं विदित्वा तु रम्भापत्रे शनैः क्षिपेत् ।
गोमयस्थे तदुपरि रम्भापत्रेण यन्त्रयेत् ॥ ५८ ॥
शीतं तच्चूर्णितं गुञ्जाक्रमवृद्धं निषेवयेत् ।
माषमात्रं भवेद्यावत्ततो मात्रां न वर्धयेत् ॥ ५९ ॥
सक्षौद्रेणोपणेनैव लेहयेद्भिषगुत्तमः ।
ग्रहणीं हन्ति शोषं च सुवर्णरसपर्पटी ॥ ६० ॥
सद्यो बलकरी शुक्रवर्धिनी वह्निदीपनी ।
क्षयकासश्वासमेहशूलातीसारपाण्डुनुत् ॥ ६१ ॥

इति सुवर्णरसपर्पटी ।

अथ ग्रहणीकपाटः—

शुद्धाहिफेनबलिसूतकपर्दभस्म-
हालाहलोपणविशुद्धसुवर्णबीजैः ।
अम्भोधिपङ्क्तिकरशैलधराष्टविंश-
त्यंशैर्विचूर्णिततमैर्ग्रहणीकपाटः ॥ ६२ ॥

१ ग. °बरवकपा° ।

वल्लोऽस्य हन्ति मधुना सह जीरकेण
मुक्तोऽतिसारमपि संग्रहणीमुदग्राम्।
आमं विपाच्य सहसा जनयत्यवश्यं
वैश्वानरं जठरवर्तिनमार्तिभाजः ॥ ६३ ॥

इति ग्रहणीकपाटः।

अथ ग्रहणीगजकेसरिरसः—

गन्धं पारदमभ्रकं च वरदं लोहं च जातीफलं
बिल्वं मोचरसं विषं प्रतिविषां व्योषं तथा धातकीम्।
मुस्तामप्यभयां कपित्थजलदौ दीप्यानलौ दाडिमं
टङ्कं रङ्गरसं कलिङ्गकात्कनकजं बीजं च पक्ष्मेक्षणम् ॥ ६४ ॥
एतत्तुर्यमफेनमेतदखिलं संमर्द्य संचूर्णये-
द्धत्तूरच्छदजै रसैश्च मतिमान्कुर्यान्मरीच्याकृतिम्।
वृत्तोऽसौ ग्रहणीगदं सरुधिरं सामं सशूलं चिरा-
तीसारं विनिहन्ति जूर्तिसहितां तीव्रां विषूचीमपि॥ ६५ ॥
दुःसाध्यामपि बिम्बिसीं परिहरेदुक्तानुपानैरयं
नाम्ना तु ग्रहणीमतङ्गजमदध्वंसीभकण्ठीरवः ॥ ६६ ॥

इति ग्रहणीगजकेसरिरसः।

अथ ग्रहणीकपाटम्—

रसेन्द्रगन्धातिविषाभयाभ्रं क्षारत्रयं मोचरसो वचा च।
जया च जम्बीररसेन पिष्टं पिण्डीकृतं स्याद्ग्रहणीकपाटम् ॥ ६७ ॥
तस्यार्धमाषं मधुना प्रभाते शम्बूकभस्माभियुतं निहन्ति।
उग्रं ग्रहण्यामयमग्निमान्द्यं क्षैण्यं क्षयं श्वासमुरःक्षतं च ॥ ६८ ॥

इति ग्रहणीकपाटम्।

अथ रसपर्पटी—

शुद्धपारदगन्धाभ्यां कृता पर्पटिका नृणाम्।
निहन्ति ग्रहणीं क्षौद्रयुक्ता पथ्यभुजां भृशम् ॥ ६९ ॥

इति रसपर्पटी।

अथ शम्बूकभस्मयोगो भेषजतन्त्रात्—

दग्धशम्बूकसिन्धूत्थतुल्यं क्षौद्रेण लेहयेत्।
निष्ककेन निहन्त्याशु ग्रहणीरोगमुत्कटम् ॥ ७० ॥

इति शम्बूकभस्मयोगो भेषजतन्त्रात्।

निषेधः—

पिच्छिलानि कठोराणि गुरूण्यन्नानि यानि च।
आमकृन्ति न सेव्यानि ग्रहणीरोगिभिः क्वचित् ॥ ७१ ॥

अथागस्तिसूतराजः—

रसबलिसमभागं तुल्यहिङ्गुलयुक्तं
द्विगुणितमहिफेनं धूर्तबीजेन तुल्यम्।
निखिलविहितचूर्णं षोडशांशं विषं स्या-
द्ग्रहणिजलधिशोषी सूतराजो ह्यगस्तिः ॥ ७२ ॥
घृतमरिचयुतोऽयं गुञ्जमात्रं प्रवाहं
हरति च तिसाराञ्जीरजातीफलेन।
त्रिकटुकमधुयुक्तः सर्ववान्तिं च शूलं
कफपवनविकारं वह्निमान्द्यं च निद्राम् ॥ ७३ ॥

इत्यगस्तिसूतराजः।

इति श्रीयोगतरङ्गिण्यां ग्रहणीनिदानचिकित्साकथनं नाम
सप्तषष्टितमस्तरङ्गः ॥ ६७ ॥

---

अथाष्टषष्टितमस्तरङ्गः।

---

अथार्शोधिकारः—

निदानम्—

पृथग्दोषैः समस्तैश्च शोणितात्सहजानि च।
अर्शांसि षट्प्रकाराणि विद्याद्गुदवलित्रये ॥ १ ॥
दोषास्त्वङ्मांसमेदांसि संदूष्य विविधाकृतीन्।
मांसाङ्कुरानपानादौ कुर्वन्त्यर्शांसि ताञ्जगुः ॥ २ ॥

अथ वातार्शोहेतुः—

कषायकटुतिक्तानि रूक्षशीतलघूनि च।
प्रमिताल्पाशनं तीक्ष्णं मद्यं मैथुनसेवनम् ॥ ३ ॥
लङ्घनं देशकालौ च शीतौ व्यायामकर्म च।
शोको वातातपस्पर्शो हेतुर्वातार्शसां मतः ॥ ४ ॥

---

१ क. "मेदांसि च"।

## अथ पित्तार्शोहेतुः—

कट्वम्ललवणोष्णानि व्यायामाग्न्यातपप्रभाः ।
देशकालावशिशिरौ क्रोधो मद्यमसूयनम् ॥ ५ ॥
विदाहि तीक्ष्णमुष्णं च सर्वं पानान्नभेषजम् ।
पित्तोल्बणानां विज्ञेयः प्रकोपे हेतुरर्शसाम् ॥ ६ ॥

## अथ कफार्शोहेतुः—

मधुरस्निग्धशीतानि लवणाम्लगुरूणि च ।
अव्यायामदिवास्वप्नशय्यासनसुखे रतिः ॥ ७ ॥
प्राग्वातसेवा शीतौ च देशकालावचिन्तनम् ।
श्लैष्मिकाणां समुद्दिष्टमेतत्कारणमर्शसाम् ॥ ८ ॥

## अथ त्रिदोषार्शोहेतुः—

हेतुलक्षणसंसर्गाद्विद्याद्द्वन्द्वोल्बणानि च ।
सर्वो हेतुस्त्रिदोषाणां सहजैर्लक्षणैः समम् ॥ ९ ॥

## पूर्वरूपमाह—

विष्टम्भोऽन्नस्य दौर्बल्यं कुक्षेराटोप एव च ।
कार्श्यमुद्गारबाहुल्यं सक्थिसादोऽल्पविट्कता ॥ १० ॥
ग्रहणीदोषपाण्ड्वर्तेराशङ्का चोदरस्य च ।
पूर्वरूपाणि निर्दिष्टान्यर्शसामभिवृद्धये ॥ ११ ॥

## वातार्शः—

गुदाङ्कुरा बह्वनिलाः शुष्काश्चिमिचिमान्विताः ।
म्लानाः श्यावारुणाः स्तब्धा विषमाः कर्कशाः खराः ॥ १२ ॥
मिथो विसदृशा वक्रास्तीक्ष्णा विस्फुटिताननाः ।
बिम्बीकर्कन्धुखर्जूरकार्पासीफलसंनिभाः ॥ १३ ॥
केचित्कदम्बपुष्पाभाः केचित्सिद्धार्थकोपमाः ।
शिरःपार्श्वांसकट्यूरुवङ्क्षणाभ्यधिकव्यथाः ॥ १४ ॥
क्षवथूद्गारविष्टम्भहृद्ग्रहारोचकप्रदाः ।
श्वासकासाग्निवैषम्यकर्णनादभ्रमावहाः ॥ १५ ॥
तैरार्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकम् ।
रुक्फेनपिच्छानुगतं विबद्धमुपवेश्यते ॥ १६ ॥

---

१ क. °म्भोऽस्यस्य । २ क. °धीरोपक° । ३ क. 'शिरसः क' ।

कृष्णत्वङ्नखविण्मूत्रनेत्रवक्त्रश्च जायते ।
गुल्मप्लीहोदराष्ठीलासंभवस्तत एव च ॥ १७ ॥

पित्तार्शः—

पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः ।
तन्वस्रस्राविणो विस्रास्तनवो मृदवः श्लथाः ॥ १८ ॥
शुकजिह्वायकृत्खण्डजलौकावक्त्रसंनिभाः ।
दाहपाकज्वरस्वेदतृण्मूर्छारुचिमोहदाः ॥ १९ ॥
सोष्माणो द्रवनीलोष्णपीतरक्तामवर्चसः ।
यवमध्या हरित्पीतहारिद्रत्वङ्नखाद्यः ॥ २० ॥

कफार्शः—

श्लेष्मोल्बणा महामूला घना मन्दरुजः सिताः ।
उत्सन्नोपचिताः स्निग्धाः स्तब्धवृत्तगुरुस्थिराः ॥ २१ ॥
पिच्छिलाः स्तिमिताः श्लक्ष्णाः कण्ड्वाढ्याः स्पर्शनप्रियाः ।
करीरपनसास्थ्याभास्तथा गोस्तनसंनिभाः ॥ २२ ॥
वङ्क्षणानाहिनः पायुबस्तिनाभिविकर्षिणः ।
सकासश्वासहृल्लासप्रसेकारुचिपीनसाः ॥ २३ ॥
मेहकृच्छ्रशिरोजाड्यशिशिरज्वरकारिणः ।
क्लैब्याग्निमार्दवच्छर्दिरामप्रायविकारदाः ॥ २४ ॥
वसाभसकफप्रायपुरीषाः सप्रवाहिकाः ।
न स्रवन्ति न भिद्यन्ते पाण्डुस्निग्धत्वगादयः ॥ २५ ॥

त्रिदोषार्शः—

सर्वैः सर्वात्मकान्याहुर्लक्षणैः सहजानि च ।

रक्तार्शः—

रक्तोल्बणा गुदे कीलाः पित्ताकृतिसमन्विताः ॥ २६ ॥
वटप्ररोहसदृशा गुञ्जाविद्रुमसंनिभाः ।
तेऽत्यर्थं दुष्टमुष्णं च गाढविट्कप्रपीडिताः ॥ २७ ॥
स्रवन्ति सहसा रक्तं तस्य चातिप्रवृत्तितः ।
भेकाभः पीड्यते दुःखैः शोणितक्षयसंभवैः ॥ २८ ॥

१ क. °प्रभवि° । २ क. °रत्तुल्° ।

हीनवर्णबलोत्साहो हतौजाः कलुषेन्द्रियः ।
विड्श्यावं कठिनं रूक्षमधोवायुर्न गच्छति ॥ २९ ॥
तनु चारुणवर्णं च फेनिलं चासृगर्शसाम् ।

## अथ वातानुबन्धः—

कट्यूरुगुदशूलं च दौर्बल्यं यदि वाऽधिकम् ॥ ३० ॥
तत्रानुबन्धो वातस्य हेतुर्यदि विरूक्षणम् ।

## कफानुबन्धमाह—

शिथिलं श्वेतपीतं च विट्स्निग्धं गुरुशीतलम् ॥ ३१ ॥
यद्यर्शसां घनं चासृकतन्तुमत्पाण्डु पिच्छिलम् ।
गुदं सपिच्छं स्तिमितं गुरु स्निग्धं च कारणम् ॥ ३२ ॥
श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः ।
पञ्चात्मा मारुतः पित्तं कफो गुदवलित्रयम् ॥ ३३ ॥
सर्व एव प्रकुप्यन्ति गुदजानां समुद्भवे ।
तस्मादर्शांसि दुःखानि बहुव्याधिकराणि च ॥ ३४ ॥
सर्वदेहोपतापीनि प्रायः कृच्छ्रतमानि च ।

## साध्यत्वादि—

बाह्यायां तु वलौ जातान्येकदोषोल्बणानि च ॥ ३५ ॥
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ।
द्वंद्वजानि द्वीतीयायां वलौ यान्याश्रितानि तु ॥ ३६ ॥
कृच्छ्रसाध्यानि तान्याहुः परि संवत्सराणि च
सहजानि त्रिदोषाणि यानि चाभ्यन्तरे वलौ ॥ ३७ ॥
जायन्तेऽर्शांसि संश्रित्य तान्यसाध्यानि निर्दिशेत् ।
शेषत्वादायुषस्तानि चतुष्पादसमन्विते ॥ ३८ ॥
याप्यन्ते दीप्तकायाग्नेः प्रत्याख्येयान्यतोऽन्यथा ।
हस्ते पादे मुखे नाभ्यां गुदे वृषणयोस्तथा ॥ ३९ ॥
शोथो हृत्पार्श्वशूलं च यस्यासाध्योऽर्शसो हि सः ।
हृत्पार्श्वशूलसंमोहौ छर्दिरङ्गस्य रुग्ज्वरः ॥ ४० ॥

तृष्णागुदास्यपाकश्च निहन्युर्गुदजा नरम् ।
तृष्णारोचकशूलार्तमतिप्रसृतशोणितम् ॥ ४१ ॥
शोथातीसारसंयुक्तमर्शांसि क्षपयन्ति हि ।
मेढ्रादिष्वपि लक्ष्यन्ते यथास्वं नाभिजानि तु ॥ ४२ ॥
गण्डूपदस्य रूपाणि पिच्छिलानि मृदूनि च ।
व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहिः ॥ ४३ ॥
कीलोपमं स्थिरकरं चर्मकीलं तु तं विदुः ।
वातेन तोदपारुष्यं पित्तादसितरक्तता ।
श्लेष्मणा स्निग्धता तस्य ग्रथितत्वं सवर्णता ॥ ४४ ॥

इति श्रीयोगतरङ्गिण्यामर्शोनिदानकथनं नामाष्टषष्टितमस्तरङ्गः ॥ ६८ ॥

---

अथैकोनसप्ततितमस्तरङ्गः ।

---

## अथार्शश्चिकित्सा—

सन्त्यर्शसामुपदिशन्ति चतुष्प्रकार-
मारोग्यमेकमगदैरपरं च शस्त्रैः ।
क्षारेण चान्यदनलेन चतुर्थमित्थ-
मित्यागमैककृतिनः किल सुश्रुताद्याः ॥ १ ॥
स्यादौषधैरचिरजेषु चिरोद्गतेषु
क्षारेण च क्षतजपित्तसमुद्भवेषु
स्थूलेषु वातकफजेष्वनलेन शस्त्रैः
सत्त्वाधिकस्य बलिनश्च ततश्चिकित्सा ॥ २ ॥

चिकित्साकलिकातः ।

## तस्य प्रतिक्रिया—

स्नेहस्वेदादयो वाते पित्ते स्यू रेचनादयः ।
कफे वान्त्यादयोऽर्शस्सु मिश्रे मिश्रा प्रतिक्रिया ।
पित्तवद्रक्तजे कार्यः प्रतीकारोऽर्शसि भ्रुवः ॥ ३ ॥
अर्शोतिसारग्रहणीविकाराः प्रायेण चान्योन्यनिदानभूताः ।
छन्नेऽनले सन्ति न सन्ति दीप्ते रक्षेदतस्तेषु विशेषतोऽग्निम् ॥ ४ ॥

---

१ क. °ताः शस्त्रैः ।

यद्वापोरानुलोम्याय यदग्निबलवृद्धये ।
अन्नपानौषधं सर्वं तत्सेव्यं नित्यमर्शसि ॥ ५ ॥
वातातिसारवद्भिन्नवर्चांस्यर्शांस्युपाचरेत् ।
उदावर्तविधानेन गाढविट्कानि वाऽसकृत् ॥ ६ ॥
प्रवृत्तबहुलास्राणि पित्तशोणितनाशनैः ।
विड्विबन्धे हितं तक्रं यवानीविश्वसंयुतम् ॥ ७ ॥
न प्ररोहन्ति गुदजाः प्रायस्तक्रसमाहताः ।

अथ तिलादिमोदकः—

तिलं भल्लातकं पथ्या गुडश्चेति समांशकम् ।
दुर्नामश्वासकासघ्नं प्लीहपाण्डुज्वरापहम् ॥ ८ ॥

इति तिलादिमोदकः ।

अथ मरीचादिमोदकः—

मरिचमहौषधचित्रकसूरणभागा यथोत्तरं द्विगुणाः ।
सर्वसमो गुडभागः प्रोक्तोऽयं मोदकः प्रसिद्धफलः ॥
ज्वलनं ज्वलयति जाठरमुन्मूलयति प्रभूतगुल्मगदान् ।
निःशेषयति श्लीपदमर्शांसि च नाशयत्याशु ॥ १० ॥

इति मरिचादिमोदकः ।

अथ नागकेसराद्यवलेहिका—

कुलिशे सौरणं कन्दं पक्त्वाऽग्नौ पुटपाकवत् ।
अद्यात्सतैललवणं दुर्नामविनिवृत्तये ॥ ११ ॥
नवनीततिलाभ्यासात्केसरनवनीतशर्कराभ्यासात् ।
दधिसरमथिताभ्यासाद्गुदजाः शाम्यन्ति रक्तवहाः ॥ १२
अपामार्गस्य बीजानां कल्कस्तण्डुलवारिणा ।
पीतो रक्तार्शसां नाशं कुरुते नात्र संशयः ॥ १३ ॥
समङ्गोत्पलमोचाह्वतिरीटतिलचन्दनैः ।
सिद्धं छागीपयो दद्याद्गुदजे शोणितात्मके ॥ १४ ॥
त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भं प्रलेपयेत् ।
तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत् ॥ १५ ॥

---

१ ग. तालकर्णं समादाय गु° ।

चिरिबिल्वाग्निसिन्धूत्थनागरेन्द्रयवारलून् ।
तक्रेण पिबतोऽर्शांसि निपतन्त्यसृजा सह ॥ १६ ॥
नागकेसरमल्लातनवनीततिलैः कृतः ।
कल्कः शुक्तिमितो लीढो रक्तार्शःकुलकण्डनः ॥ १७ ॥

इति नागकेसराद्यवलेहिका ।

## अथ शिरीषबीजादिलेपः—

शिरीषबीजं द्वौ क्षारौ लाङ्गली सैन्धवं यवा ।
स्नुहीक्षीरेण पिष्टानि गवां पित्तेन भावयेत् ॥ १८ ॥
अर्शांसि लेपयेत्तेन सप्तरात्रं पुनः पुनः ।
लिप्तान्येतानि सर्वाणि विनश्यन्ति न संशयः ॥ १९ ॥

इति शिरीषबीजादिलेपः ।

## अथ रालाधूमादिः—

लेपं रजनिचूर्णेन सुधादुग्धयुतेन च ।
अर्शोरोगनिवृत्त्यर्थं कारयेत चिकित्सकः ॥ २० ॥
पिप्पली सैन्धवं कुष्ठं शिरीशस्य फलं तथा ।
स्नुग्दुग्धमर्कदुग्धं वा लेपोऽयं गुदजान्हरेत् ॥ २१ ॥
हरिद्राजालिनीचूर्णं कटुतैलसमन्वितम् ।
एष लेपो वरः प्रोक्तो ह्यर्शसामन्तकारकः ॥ २२ ॥
शस्त्रेवाऽथ जलूकाभिः प्रोच्छन्नकठिनार्शसः ।
शोणितं संचितं दृष्ट्वा हरेत्प्राज्ञः पुनः पुनः ॥ २३ ॥
रालाचूर्णस्य तैलेन सार्षपेण युतस्य च ।
धूमदानेन युक्त्याऽर्शोरक्तस्रावो निवर्तते ॥ २४ ॥

इति रालाधूमादिः ।

## अथ सूरणपिण्डी—

यथा सर्वाणि कुष्ठानि हतः खदिरबीजकौ ।
तथैवार्शांसि सर्वाणि प्रसकारुष्करौ हतः ॥ २५ ॥
हरिद्रायाः प्रयोगेण प्रमेहा इव षोडश ।
क्षाराग्निभ्यां निवर्तन्ते तथा दृष्या गुदोद्भवाः ॥ २६ ॥
भागाः षोडशवृद्धदारुसहितात्कन्दात्कृतात्कर्कशा-
दष्टौ चित्रकमूलतश्च तुलिताः स्युस्तालमूलीयुतात् ।

तालीसत्रिफलाविडङ्गमगधाविश्वोपकुल्याजटा-
भल्लातैश्च चतुष्पलैर्द्विपलिकैरेलालवङ्गोषणैः ॥ २७ ॥
इत्येभिः सकलैर्गुडाद्द्विगुणितैः कुर्याद्द्विपन्मोदकान्-
यैर्भुक्तैर्न नृणां भवन्ति गुदजाः प्लीहाश्च पाण्ड्वामयाः ।
नो गुल्मग्रहणीगदोदररुजः कोष्ठे च शूलानि च
श्वासश्लीपदशोफविद्रधिपक्षुद्भ्रन्थ्यर्बुदादीनि च ॥ २८ ॥

इति सूरणपिण्डी ।

## अथ काङ्कायनगुडचिकित्सा—

पथ्यादलस्य गुरुणः पलपञ्चकं स्या-
देकं पलं च मरिचादपि जीरकाच्च ।
कृष्णातदुद्भवजटाचविकाग्निशुण्ठ्यः
कृष्णादिपञ्चकमिदं पलतः प्रवृद्धम् ॥ २९ ॥
एतैररुष्करपलाष्टकसंयुतैः स्या-
त्कन्दस्त्वरुष्करफलाद्द्विगुणः प्रकल्प्यः ।
स्याद्यावशूकुडवार्धमतः समस्ता-
द्योऽयो गुडो द्विगुणितो वटकीकृतश्च ॥ ३० ॥
काङ्कायनेन मुनिना गदितः किलायं
श्रेयस्करेण वटकोऽत्र गुदामयघ्नः ।
क्षाराग्निशस्त्रतपनैरपि येन सिद्धाः
सिध्यन्त्यनेन वटकेन गुदामयास्ते ॥ ३१ ॥

इति काङ्कायनगुडश्चिकित्सातः ।

## अथ समशर्करं चूर्णम्—

शुण्ठीकणामरिचनागदलत्वगेलं
चूर्णीकृतं क्रमादिवर्धितमूर्ध्वमन्त्यात् ।
खादेन्नरः समसितं गुदजाग्निमान्द्य-
गुल्मारुचिश्वसनकण्ठहृदामयेषु ॥ ३२ ॥

इति समशर्करं चूर्णम् ।

## अथ चतुःसमो मोदकः—

सनागरारुष्करवृद्धदारकं गुडेन यो मोदकमत्त्युदारकम् ।
अशेषदुर्नामकरोगदारकं करोति वृद्धिं सहसैव पारकम् ॥ ३३ ॥

इति चतुःसमो मोदकः ।

अथ सिन्धूत्थदेवदाल्यादिलेपः-

सिन्धूत्थं देवदाल्याश्च बीजं काञ्जिकपेषितम् ।
गुदाङ्कुरान्प्रलेपेन पातयत्यचलानपि ॥ ३४ ॥

इति सिन्धूत्थदेवदाल्यादिलेपः ।

अथ क्षारसूत्रम्-

देवदालीकषायेण शौचमाचरतां नृणाम् ।
किं वा तद्धूमसेवाभिः कुतः स्युर्गुदजाङ्कुराः ॥ ३५ ॥
तप्तायोलाञ्छनं केचिद्दुर्नामघ्नं जगुर्बुधाः ।
तक्रं सकृष्णं पिबतां दुर्नामश्रवणं कुतः ॥ ३६ ॥
भावितं रजनीचूर्णं स्नुहीक्षीरैः पुनः पुनः ।
बन्धनात्सुदृढं सूत्रं छिनत्त्यर्शोभगन्दरम् ॥ ३७ ॥

इति क्षारसूत्रम् ।

अथ प्राणदो मोदकः-

तालीसज्वलनोषणाः रुचविडाः तुल्या द्विभागा मिषे-
त्कृष्णामूलसमन्विता त्रिपलिका शुण्ठी चतुर्जातकम् ।
स्यान्मुष्टिप्रमितं गुडत्रिगुणितैरेभिः कृता मोदकाः
कासश्वासमदाग्निमान्द्यगुदजप्लीहप्रमेहापहाः ॥ ३८ ॥

इति प्राणदो मोदकः ।

श्रीबाहुशालो गुडः-

त्रिवृत्तेजोवती दन्ती श्वदंष्ट्रा चित्रकं शठी ।
गवाक्षीमुस्तविश्वाह्वविडङ्गानि हरीतकी ॥ ३९ ॥
पलोन्मितानि चैतानि पलान्यष्टावरुष्करात् ।
वृद्धदारुपलान्यष्टौ सूरणस्य च षोडश ॥ ४० ॥
जलद्रोणद्वये क्वाथ्यं चतुर्भागावशेषितम् ।
पूतं तु तं रसं भूयः क्वाथ्येभ्यस्त्रिगुणं गुडम् ॥ ४१ ॥
लेहं पचेत्पुनस्तावद्यावद्दर्वीप्रलेपनम् ।
अवतार्य ततः पश्चाच्चूर्णानीमानि दापयेत् ॥ ४२ ॥
त्रिवृत्तेजोवतीकन्द*चित्रकाद्विपलांशकान् ।
एलात्वङ्मरिचं चापि नागाह्वं चापि षट्पलम् ॥ ४३ ॥

---

* क. पुस्तके कन्दः ।

दुर्नामशोफगरकुष्ठशकृद्विबन्ध-
मग्नेर्जयत्यबलतां कृमिपाण्डुतां च ॥ ५५ ॥
चूर्णे चूर्णसमो देयो मोदके द्विगुणो गुडः ॥ ५६ ॥

इति व्योषाद्यं चूर्णम् ।

अथ विजयचूर्णम्—

श्रीदीप्योग्राग्निहिङ्गुद्विपिपलिशिवकीचव्यतिक्तापटूनि
ग्रन्थिक्षारेन्द्रजातित्रिकमिति विजयः सोष्णकैरण्डतैलः ।
हन्त्यर्शःकासगुल्मग्रहणिकृमिरुजः पाण्डुरुग्मूर्धवात-
श्वासप्लीहप्रमेहज्वरमरुचिमुदावर्तवर्धमिवातान् ॥ ५७ ॥

इति विजयचूर्णम् ।

अथ बृहद्भल्लातकलेहः—

सुपक्वभल्लातफलानि सम्यग्द्विधा विधायाऽऽढकसंमितानि ।
विपाच्य तोयेन चतुर्गुणेन चतुर्थशेषे व्यपनीय तानि ॥ ५८ ॥
पुनः पचेत्क्षीरचतुर्गुणेन घृतांशयुक्तेन घनं यथा स्यात् ।
सितोपलाषोडशभिः पलैश्च विमर्द्य संस्थाप्य दिनानि सप्त ॥५९॥
ततः प्रयुञ्ज्याग्निबलेन मात्रां जयेद्विकारानखिलान्गुदोत्थान् ।
कचान्सुनीलान्घनकुञ्चिताग्रान्सुपर्णदृष्टिं च शशाङ्ककान्तिम् ॥६०॥
जवं हयानां बलमुत्तमं च स्वरं मयूरस्य हुताशदीप्तिम् ।
स्त्रीवल्लभत्वं विविधं प्रभावं नीरोगतां द्वित्रिशतायुषं च ॥ ६१ ॥
न चान्नपाने परिहारमस्ति न चाऽऽतपे नाध्वनि मैथुने च ।
प्रयोगकाले सकलामयानां राजा ह्ययं सर्वरसायनानाम् ॥ ६२ ॥

इति बृहद्भल्लातकलेहः ।

नासानाभिसमुत्थेषु तथा मेढ्रादिजेष्वपि ।
क्रियामर्शस्सु कुर्वीत तत्र तत्र यथोचितम् ।
चर्मकीलं तु संछिद्य दहेत्क्षारेण वाऽग्निना ॥ ६३ ॥

अथ रसाः—

विषरविगगनायःसूतगन्धं समांशं
समहुतभुगथाऽऽर्द्रकन्दकैः सप्तवारम् ।

१ प. 'भेपूत्थ' ।

प्रबलगुदजकीलं हन्ति नित्योदितः सोऽ-
नलहतिमलबन्धं माषमात्रः ससर्पिः ॥ ६४ ॥
इति नित्योदितो रसः ।

अथार्शःकुठारो रसः—

भागः शुद्धरसस्य भागयुगुलं गन्धस्य लोहाभ्रयोः
पञ्चबिल्वाग्निदलोपणात्रयरजो दन्ती च भागैः पृथक् ।
पञ्च स्युः स्फुटटङ्कणस्य च यवक्षारस्य सिन्धूद्भवा
भागाः पञ्च गवां जलं सुविमलं द्वात्रिंशदेतत्पचेत् ॥ ६५ ॥
स्नुग्दुग्धं च गवां जलावधि शनैः पिण्डीकृतं तद्भवे-
द्वौ माषौ गुदकीलकाननजटाच्छेदे कुठारो रसः ॥ ६६ ॥
इत्यर्शःकुठारो रसः ।

निषेधः—

वेगावरोधस्त्रीपानं कटुकं चोत्कटाशनम् ।
यथास्वं दोषलं चान्नमर्शसः परिवर्जयेत् ॥ ६७ ॥

हितमाह—

शालिगोधूमवार्ताकमुद्गकन्दकठिल्लकान् ।
जाङ्गलामिषवास्तूकमरिचं चार्शसो हितम् ॥ ६८ ॥
पथ्या गुडान्विता सेव्या नित्यमर्शोविकारिभिः ।
अर्शांसि तेन शाम्यन्ति न प्ररोहन्ति चापरे ॥ ६९ ॥
कफकृन्ति च खेद्यानि द्रव्याण्यर्शोयुतैर्नरैः ।
विना तक्रसमं गन्धं विनाऽन्नं लघुपाकि च ॥ ७० ॥
इति योगतरङ्गिण्यामर्शोनिदानचिकित्साकथनं नामैकोन-
सप्ततितमस्तरङ्गः ॥ ६९ ॥

---

अथ सप्ततितमस्तरङ्गः ।

---

अथाग्निमान्द्याधिकारः—

मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्विधः ।
कफपित्तानिलाधिक्यात्तत्साम्याज्जाठरोऽनलः ॥ १ ॥
समा समाग्नेरशिता मात्रा सम्यग्विपच्यते ।
स्वल्पाऽपि नैव मन्दाग्नेर्विषमाग्नेस्तु देहिनः ॥ २ ॥

अजीर्णं पञ्चमं केचिन्निर्दोषं दिनपाकि च ।
वदन्ति षष्ठं चाजीर्णं प्राकृतं प्रतिवासरम् ॥ ४ ॥

अजीर्णसामान्यलक्षणमाह—

ग्लानिर्गौरवविष्टम्भभ्रममारुतमूढताः ।
विबन्धोऽतिप्रवृत्तिर्वा सामान्याजीर्णलक्षणम् ॥ ५ ॥

अथाऽऽमाजीर्णम्—

तत्राऽऽमे गुरुतोत्क्लेदः शोथो गण्डाक्षिकूटगः ।
उद्गारश्च यथाभुक्तमविदग्धः प्रवर्तते ॥ ६ ॥

अथ विष्टब्धाजीर्णम्—

विष्टब्धे शूलमाध्माने विविधा वातवेदनाः ।
मलवाताप्रवृत्तिश्च स्तम्भो मोहोऽङ्गपीडनम् ॥ ७ ॥

अथ विदग्धाजीर्णम्—

विदग्धे भ्रमतृण्मूर्छाः पित्ताच्च विविधा रुजः ।
उद्गारश्च सधूमाम्लः स्वेदो दाहश्च जायते ॥ ८ ॥

अथ रसशेषाजीर्णम्—

रसशेषेऽन्नविद्वेषो हृदयाशुद्धिगौरवे ।
प्रायेणाऽऽहारवैषम्यादजीर्णं जायते नृणाम् ॥ ९ ॥
तन्मूलो रोगसंघातस्तद्विनाशाद्विनश्यति ।
अजीर्णमामं विष्टब्धं विदग्धं च यदीरितम् ॥ १० ॥
विषूच्यलसकौ तस्माद्भवेच्चापि विलम्बिका ।

अथ विषूचीलक्षणम्—

सूचीभिरिव गात्राणि तुदन्संतिष्ठतेऽनिलः ॥ ११ ॥
यस्याजीर्णेन सा वैद्यैर्विषूचीति निगद्यते ।
न तां परिमिताहारा लभन्ते विदितागमाः ॥
मूढास्तामजितात्मानो लभन्तेऽशनलोलुपाः ॥ १२ ॥

विषूच्या लक्षणमाह—

मूर्छातिसारौ वमथुः पिपासा शूलभ्रमोद्वेष्टनजृम्भदाहाः ।
वैवर्ण्यकम्पौ हृदये रुजश्च विषूचिकायां च शिरोविभेदः ॥ १३ ॥

---

१ ग. °विद्विष्यन्ति द्वि°।

कदाचित्पच्यते सम्यक्कदाचिन्न विपच्यते ।
मात्राऽतिमात्राऽप्यशिता सुखं यस्य विपच्यते ॥ ३ ॥
तीक्ष्णाग्निरिति तं विद्यात्समाग्निः श्रेष्ठ उच्यते ।

त्रिदोषजमाह—

विषमो वातजान्रोगांस्तीक्ष्णः पित्तनिमित्तजान् ॥ ४ ॥
करोत्यग्निस्तथा मन्दो विकारान्कफसंभवान् ।
समस्य रक्षणं कार्यं विषमे वातनिग्रहः ॥ ५ ॥
तीक्ष्णे पित्तप्रतीकारो मन्दे श्लेष्मविशोधनम् ।

तस्य क्रियां रक्षामाह—

सममग्निं स्निग्धरूक्षान्नपानैर्नृणां हितैः ॥ ६ ॥
मन्दं संवर्धयेदग्निं कटुतिक्तकषायकैः ।
तीक्ष्णमग्निं घृतक्षीरपायसैः समतां नयेत् ॥ ७ ॥
स्नेहाम्ललवणाद्यैश्च विषमाग्निमुपाचरेत् ।

तत्रोपचारः—

जरणलवणशुण्ठीपिप्पलीतीक्ष्णवेल्लं
लवणयवजमोदा हिङ्गु पथ्येति कर्षम् ।
पृथगथ पलमग्नः स्यात्त्रिवृच्चूर्णमेषां
अनलवृषपटोलैः पाचनं रेचनं च ॥ ८ ॥

इति श्रीयोगतरङ्गिण्यामग्निमान्द्यनिदानचिकित्साकथनं नाम सप्ततितमस्तरङ्गः ॥ ७० ॥

---

अथैकसप्ततितमस्तरङ्गः ।

---

अजीर्णस्य विप्रकृष्टनिदानमाह—

अत्यम्बुपानाद्विषमाशनाच्च संधारणात्स्वप्नविपर्ययाच्च ।
कालेऽपि सात्म्यं लघु चापि भुक्तमन्नं न पाकं भजते नरस्य ॥ १ ॥
ईर्ष्याभयक्रोधपरिक्षतेन लुब्धेन शुग्दैन्यनिपीडितेन ।
प्रद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक्परिपाकमेति ॥ २ ॥
आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः ।
अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः ॥ ३ ॥

अजीर्णं पञ्चमं केचिन्निर्दोषं दिनपाकि च ।
वदन्ति षष्ठं चाजीर्णं प्राकृतं प्रतिवासरम् ॥ ४ ॥

अजीर्णसामान्यलक्षणमाह—

ग्लानिर्गौरवविष्टम्भभ्रममारुतमूढता: ।
विबन्धोऽतिप्रवृत्तिर्वा सामान्याजीर्णलक्षणम् ॥ ५ ॥

अथाऽऽमाजीर्णम्—

तत्राऽऽमे गुरुतोत्क्लेदः शोथो गण्डाक्षिकूटगः ।
उद्गारश्च यथाभुक्तमविदग्धः प्रवर्तते ॥ ६ ॥

अथ विष्टब्धाजीर्णम्—

विष्टब्धे शूलमाध्मानं विविधा वातवेदनाः ।
मलवाताप्रवृत्तिश्च स्तम्भो मोहोऽङ्गपीडनम् ॥ ७ ॥

अथ विदग्धाजीर्णम्—

विदग्धे भ्रमतृण्मूर्छाः पित्ताच्च विविधा रुजः ।
उद्गारश्च सधूमाम्लः स्वेदो दाहश्च जायते ॥ ८ ॥

अथ रसशेषाजीर्णम्—

रसशेषेऽन्नविद्वेषो हृदयाशुद्धिगौरवे ।
प्रायेणाऽऽहारवैषम्यादजीर्णं जायते नृणाम् ॥ ९ ॥
तन्मूलो रोगसंघातस्तद्विनाशाद्विनश्यति ।
अजीर्णमामं विष्टब्धं विदग्धं च यदीरितम् ॥ १० ॥
विषूच्यलसकौ तस्माद्भवेच्चापि विलम्बिका ।

अथ विषूचीलक्षणम्—

सूचीभिरिव गात्राणि तुदन्संतिष्ठतेऽनिलः ॥ ११ ॥
यस्याजीर्णेन सा वैद्यैर्विषूचीति निगद्यते ।
न तां परिमिताहारा लभन्ते विदितागमाः ॥
मूढास्तामजितात्मानो लभन्तेऽशनलोलुपाः ॥ १२ ॥

विषूच्या लक्षणमाह—

मूर्छातिसारौ वमथुः पिपासा शूलभ्रमोद्वेष्टनजृम्भदाहाः ।
वैवर्ण्यकम्पौ हृदये रुजश्च विषूचिकायां च शिरोविभेदः ॥ १३ ॥

---

१ ग. °विदिग्धमिति दि° ।

कदाचित्पच्यते सम्यक्कदाचिन्न विपच्यते ।
मात्राऽतिमात्राऽप्यशिता सुखं यस्य विपच्यते ॥ ३ ॥
तीक्ष्णाग्निरिति तं विद्यात्समाग्निः श्रेष्ठ उच्यते ।

त्रिदोषजमाह—

विषमो वातजान्रोगांस्तीक्ष्णः पित्तनिमित्तजान् ॥ ४ ॥
करोत्यग्निस्तथा मन्दो विकारान्कफसंभवान् ।
समस्य रक्षणं कार्यं विषमे वातनिग्रहः ॥ ५ ॥
तीक्ष्णे पित्तप्रतीकारो मन्दे श्लेष्मविशोधनम् ।

तस्य क्रियां समानामाह—

सममग्निं स्निग्धलेह्यान्नपानैर्नृणां हितैः ॥ ६ ॥
मन्दं संवर्धयेदग्निं कटुतिक्तकषायकैः ।
तीक्ष्णमग्निं घृतक्षीरपायसैः समतां नयेत् ॥ ७ ॥
स्नेहाम्ललवणाद्यैश्च विषमाग्निमुपाचरेत् ।

तत्रोपचारः—

जरणरुचकशुण्ठीपिप्पलीतीक्ष्णवेल्लं
लवणमजमोदा हिङ्गु पथ्येति कर्षम् ।
पृथगथ सकलानां स्यात्त्रिवृच्चूर्णमेषां
जनयति कृतपदैः पाचनं रेचनं च ॥ ८ ॥

इति श्रीयोगतरङ्गिण्यामग्निमान्द्यनिदानचिकित्साकथनं नाम सप्ततितमस्तरङ्गः ॥ ७० ॥

---

अथैकसप्ततितमस्तरङ्गः ।

---

अजीर्णस्य विशिष्टनिदानमाह—

अत्यम्बुपानाद्विषमाशनाच्च संधारणात्स्वप्नविपर्ययाच्च ।
कालेऽपि सात्म्यं लघु चापि भुक्तमन्नं न पाकं भजते नरस्य ॥ १ ॥
ईर्ष्याभयक्रोधपरिक्षतेन लुब्धेन रुग्दैन्यनिपीडितेन ।
प्रद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक्परिपाकमेति ॥ २ ॥
आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः ।
अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः ॥ ३ ॥

अजीर्णं पञ्चमं केचिन्निर्दोषं दिनपाकि च ।
वदन्ति षष्ठं चाजीर्णं प्राकृतं प्रतिवासरम् ॥ ४ ॥

अजीर्णसामान्यलक्षणमाह—

ग्लानिर्गौरवविष्टम्भभ्रममारुतमूढताः ।
विबन्धोऽतिप्रवृत्तिर्वा सामान्याजीर्णलक्षणम् ॥ ५ ॥

अथाऽऽमाजीर्णम्—

तत्राऽऽमे गुरुतोत्क्लेदः शोथो गण्डाक्षिकूटगः ।
उद्गारश्च यथाभुक्तमविदग्धः प्रवर्तते ॥ ६ ॥

अथ विष्टब्धाजीर्णम्—

विष्टब्धे शूलमाध्मानं विविधा वातवेदनाः ।
मलवाताप्रवृत्तिश्च स्तम्भो मोहोऽङ्गपीडनम् ॥ ७ ॥

अथ विदग्धाजीर्णम्—

विदग्धे भ्रमतृण्मूर्छाः पित्ताच्च विविधा रुजः ।
उद्गारश्च सधूमाम्लः स्वेदो दाहश्च जायते ॥ ८ ॥

अथ रसशेषाजीर्णम्—

रसशेषेऽन्नविद्वेषो हृदयाशुद्धिगौरवे ।
प्रायेणाऽऽहारवैषम्यादजीर्णं जायते नृणाम् ॥ ९ ॥
तन्मूलो रोगसंघातस्तद्विनाशाद्विनश्यति ।
अजीर्णमामं विष्टब्धं विदग्धं च यदीरितम् ॥ १० ॥
विषूच्यलसकौ तस्माद्भवेच्चापि विलम्बिका ।

अथ विषूचीलक्षणम्—

सूचीभिरिव गात्राणि तुदन्संतिष्ठतेऽनिलः ॥ ११ ॥
यस्याजीर्णेन सा वैद्यैर्विषूचीति निगद्यते ।
न तां परिमिताहारा लभन्ते विदितागमाः ॥
मूढास्तामजितात्मानो लभन्तेऽशनलोलुपाः ॥ १२ ॥

विषूच्या लक्षणमाह—

मूर्छातिसारौ वमथुः पिपासा शूलभ्रमोद्वेष्टनजृम्भदाहाः ।
वैवर्ण्यकम्पौ हृदये रुजश्च विषूचिकायां च शिरोविभेदः ॥ १३ ॥

---

१ ग. °चिद्दिष्यन्ति दि°।

प्रकम्पानाहशूलयादीन्वायुस्त्र करोति हि ।
पित्तं ज्वरातिसाराङ्गदाहादीन्वेदनानि च ॥ १४ ॥
श्लेष्माङ्गगुरुताछर्दिर्वाक्सङ्गष्ठीवनानि च ।

पञ्चोपद्रवानाह—

निद्रानाशोऽरतिः कम्पो मूत्रघातो विसंज्ञता ॥ १५ ॥
अमी उपद्रवा घोरा विषूच्यां पञ्च दारुणाः ।

अथालसकलक्षणम्—

कुक्षिरानह्यतेऽत्यर्थं प्रताम्येत्परिकूजति ॥ १६ ॥
निरुद्धो मारुतश्चैव कुक्षावुपरि धावति ।
वातवर्चोनिरोधश्च यस्यात्यर्थं भवेदपि ॥ १७ ॥
तस्यालसकमाचष्टे तृष्णोद्गारौ तु यस्य वै ।
अधो गच्छति नो चोर्ध्वमोदनं न च पच्यते ॥ १८ ॥
तेन सोऽलसको नाम शीघ्रं देहविनाशकृत् ।
क्षुद्रास्तेऽलसके दोषाश्छर्द्यतीसारवर्जिताः ॥ १९ ॥

अथ दण्डालसकस्य लक्षणम्—

कारकास्तीव्रपीडाद्यैः स्रोतसां च निरोधकाः ।
तिर्यगन्तस्तनुस्तम्भान्दण्डवत्स्तम्भयन्ति च ।
स दण्डालसकस्त्याज्यः शीघ्रं देहविनाशकृत् ॥ २० ॥

अथ विलम्बिका—

दुष्टं तु भुक्तं कफमारुताभ्यां प्रवर्तते नोर्ध्वमधश्च यस्य ।
विलम्बिकां तां भृशदुश्चिकित्स्यामाचक्षते शास्त्रविदः पुराणाः॥२१॥

अथ देशजातामसमुद्भवलक्षणम्—

यत्रस्थमामं विरुजेत्तमेव देशं विशेषेण विकारजातैः ।
दोषेण येनावततं शरीरं तल्लक्षणैरामसमुद्भवैश्च ॥ २२ ॥

अलसे विषूच्यामरिष्टमाह—

यः श्यावदन्तोष्ठनखोऽल्पसंज्ञो वम्यर्दितोऽभ्यन्तरयातनेत्रः ।
क्षामस्वरः सर्वविमुक्तसंधिर्यायान्नरोऽसौ पुनरागमाय ॥ २३ ॥

---

१ क. °राङ्गदाहादीनतीसारं करोति हि ।

अथ भस्मकमाह—

कट्वादिरूक्षान्नभुजां नराणां क्षीणे कफे मारुतसंप्रवृद्धौ ।
अतिप्रवृद्धः पवनान्वितोऽग्निः क्षणाद्रसं शोषयति प्रसह्य ॥ २४ ॥
भुक्तं क्षणाद्भस्म करोति यस्मात्तस्मादसौ भस्मकनामकोऽभूत् ।
तृड्श्वासकासभ्रमदाहशोषविशेषमोहश्रमकर्मकारी ॥ २५ ॥

इत्यजीर्णनिदानम् ।

अथोपचारः—

वचालवणतोयेन वान्तिरामे प्रशस्यते ।
धान्यनागरसिद्धं वा तोयं दद्याद्विचक्षणः ।
आमाजीर्णप्रशमनं शूलघ्नं बस्तिशोधनम् ॥ २६ ॥
अन्नं विदग्धस्य नरस्य शीघ्रं शीताम्बुना वै परिपाकमेति ।
यद्वाऽस्य शैत्येन निहन्ति पित्तमाक्लेदिभावाच्च नयत्यधस्तात्॥२७॥

अथ षट्प्रकाराजीर्णोपशममाह—

विष्टब्धे स्वेदनं कार्यं पेयं च लवणोदकम् ।
रसशेषे दिवा स्वप्नं लङ्घनं वातवर्जनम् ॥ २८ ॥

लेपमाह—

आलिप्य जठरं प्राज्ञो हिङ्गुत्र्यूषणसैन्धवैः ।
दिवा स्वप्नं प्रकुर्वीत सर्वाजीर्णप्रणाशनम् ॥ २९ ॥

एतेषां दिवास्वापमाह—

व्यायामप्रमदाध्ववाहनरतान्क्लान्तानतीसारिणः
शूलश्वासवतस्तृषापरिगतान्हिक्कामरुत्पीडितान् ।
क्षीणान्क्षीणकफाञ्शिशून्मदहतान्वृद्धान्रसाजीर्णिनो
रात्रौ जागरितान्नरान्निरशनान्कामं दिवा स्वापयेत् ॥ ३० ॥

अथ गुडाष्टकम्—

हरीतकी तथा शुण्ठी भक्ष्यमाणा गुडेन वा ।
सैन्धवेन युता वा स्यात्सातत्येनाग्निदीपनी ॥ ३१ ॥
गुडेन शुण्ठीमथ वोपकुल्यां पथ्यां तृतीयामथ दाडिमं वा ।
आमेष्वजीर्णेषु गुदामयेषु वर्चोविबन्धेषु च नित्यमद्यात् ॥ ३२ ॥

---

१ ग. कोपोऽधिकं ।

व्योषदन्तीत्रिवृच्चित्राकृष्णामूलं विचूर्णितम् ।
तच्चूर्णं गुडसंमिश्रं भक्षयेत्प्रातरुत्थितः ॥ ३३ ॥
एतद्गुडाष्टकं नाम बलवर्णाग्निवर्धनम् ।
शोथोदावर्तशूलघ्नं प्लीहपाण्ड्वामयापहम् ॥ ३४ ॥

इति गुडाष्टकम् ।

अन्यच्च—

तत्राऽऽमे वमनं कार्यं विदग्धे लङ्घनं हितम् ।
विष्टब्धे स्वेदनं शस्तं रसशेषे शयीत च ॥ ३५ ॥
पथ्यापिप्पलिसंयुक्तं चूर्णं सौवर्चलं पिबेत् ।
मस्तुनोष्णोदकेनाथ मत्वा दोषगतिं भिषक् ॥ ३६ ॥
चतुर्विधमजीर्णं च मन्दानलमथारुचिम् ।
आध्मानं वातगुल्मं च शूलं चाऽऽशु नियच्छति ॥ ३७ ॥
भवेदजीर्णं प्रति यस्य शङ्का स्निग्धस्य जन्तोर्बलिनोऽन्नकाले ।
पूर्वं स शुण्ठीमभयामशङ्को भुञ्जीत संप्राश्य हितं हिताशी॥ ३८ ॥
विदह्यते यस्य तु भुक्तमात्रं दह्येत हृत्कण्ठगलोऽपि यस्य ।
द्राक्षां सितां माक्षिकसंप्रयुक्तां लीढ्वाऽभयां वै स सुखं लभेत॥३९॥

अथ चित्रकादियवागूः—

चित्रकचविकानागरमागधिकाग्रन्थिकैर्यवागूः स्यात् ।
गुल्मानिलशूलहारिणी रुचिप्रदा वह्निजननी च ॥ ४० ॥

इति चित्रकादियवागूः ।

अथ संजीवनी गुटिका—

लवङ्गपथ्ययोः क्वाथः सैन्धवेनावधूलितः ।
पीतः प्रशमयत्युग्रमजीर्णं रेचयत्यपि ॥ ४१ ॥
विडङ्गं नागरं कृष्णां पथ्यावह्निबिभीतकान् ।
वचां गुडूचीं भल्लातं विषं चात्र प्रयोजयेत् ॥ ४२ ॥
एतानि समभागानि गोमूत्रेणैव पेषयेत् ।
गुञ्जाभा गुटिकाः कार्या दद्यादार्द्रकजै रसैः ॥ ४३ ॥
एकामजीर्णयुक्तस्य द्वे विषूच्यां प्रदापयेत् ।
तिस्रो भुजङ्गदष्टस्य चतस्रः संनिपातिनः ॥ ४४ ॥
गुटिका जीवनी नाम्ना संजीवयति मानवम् ।

इति संजीवनी गुटिका ।

## अथ विषूचिकाञ्जनम्—

मातुलुङ्गीजटाव्योषं निशाबीजं करञ्जकम् ॥ ४५ ॥
काञ्जिकेनाञ्जनं हन्याद्विषूचीमतिदारुणाम् ।

इति विषूचिकाञ्जनम् ।

## अथाग्निमुखं चूर्णम्—

हिङ्गुभागो भवेदेको वचा च द्विगुणा मता ॥ ४६ ॥
पिप्पली त्रिगुणा देया शृङ्गवेरं चतुर्गुणम् ।
यवानी पञ्चगुणिता षड्गुणा च हरीतकी ॥ ४७ ॥
चित्रकं सप्तगुणितं कुष्ठं चाष्टगुणं मतम् ।
एतद्वातहरं चूर्णं पीतमामप्रशान्तये ॥ ४८ ॥
पिबेद्दध्ना मस्तुना वा सुरया कोष्णवारिणा ।
सोदावर्तमजीर्णं च प्लीहानमुदरं तथा ॥ ४९ ॥
अङ्गानि यस्य शीर्यन्ते विषं वा येन भक्षितम् ।
चूर्णमग्निमुखं नाम पाचनं वह्निदीपनम् ॥ ५० ॥

इत्यग्निमुखं चूर्णम् ।

## अथ हिङ्ग्वष्टकं चूर्णम्—

त्रिकटुकमजमोदा सैन्धवं जीरके द्वे
समधरणधृतानामष्टमो हिङ्गुभागः ।
प्रथमकवलभुक्तं सर्पिषा चूर्णमेत-
ज्जनयति जठराग्निं वातरोगान्निहन्ति ॥ ५१ ॥

इति हिङ्ग्वष्टकं चूर्णम् ।

## अथ लघुवैश्वानरं चूर्णम्—

सिन्धूत्थपथ्यमगधोद्भववह्निचूर्ण-
मुष्णाम्बुना पिबति यः खलु नष्टवह्निः ।
तस्याऽऽमिषेण सघृतेन सहान्नपानं
भस्मी भवत्यशितमात्रमपि क्षणेन ॥ ५२ ॥

इति लघुवैश्वानरं चूर्णम् ।

## अथ लवणभास्करं चूर्णम्—

तालीसग्रन्थिधान्येभवरविडकणाकृष्णजीरच्छदोऽम्लं
सामुद्रं विश्वजीरोपणमथ रुचकं त्वक्त्रुटीदाडिमान्तैः ।

विंशत्यष्टाग्निपञ्चैकचतुरथयवैर्भास्करोऽत्राथ चाऽम्लै-
गुंल्माद्यर्शोऽग्निकासग्रहणिजठरहृत्स्थगदे श्लेष्मवाते ॥ ५३ ॥

इति लवणभास्करं चूर्णम् ।

अथ लवणभास्करं चूर्णम्—

पिप्पली पिप्पलीमूलं धान्यकं कृष्णजीरकम् ।
सैन्धवं च विडं चैव पत्रतालीसकेसराः ॥ ५४ ॥
एषां द्विपलिका भागा पञ्च सौवर्चलस्य च ।
मरिचाजाजिशुण्ठीनामेकैकस्य पलं पलम् ॥ ५५ ॥
त्वगेला चार्धभागा स्यात्सामुद्रात्कुडवद्वयम् ।
दाडिमात्कुडवं चैव द्विपलं चाम्लवेतसम् ॥ ५६ ॥
एतच्चूर्णीकृतं श्लक्ष्णं गन्धाढ्यममृतोपमम् ।
लवणं भास्करो नाम भास्करेण विनिर्मितम् ॥ ५७ ॥
श्लेष्मवातं वातगुल्मं शूलमन्दाग्न्यरोचकान् ।
अन्यानपि निहन्त्याशु रोगाँल्लवणभास्करम् ॥ ५८ ॥

इति लवणभास्करं चूर्णम् ।

अथ धनंजयवटी—

जीरकं चित्रकश्चव्यं ससुगन्धं यवात्त्वचौ ।
एलाकर्पूरहपुषाकारवीनागकेसरम् ॥ ५५ ॥
पृथक्कर्षमिता ह्येते मिसिः कर्षार्धसंमिता ।
यवानी पिप्पलीमूलं स्वर्जिका च हरीतकी ॥ ६० ॥
जातीफलं लवङ्गं च पृथक्कर्षयुगं मतम् ।
धान्यकं पत्रकं चापि कर्षत्रयमितं पृथक् ॥ ६१ ॥
कृष्णा पलप्रमाणा स्यात्पलमानं तु रोमकम् ।
मरिचात्पिचवः सप्त त्रिवृन्मूलात्पलद्वयम् ॥ ६२ ॥
पृथग्दशाक्षं सामुद्रं सैन्धवं नागरं तथा ।
शरावसंमितं शुक्तं तदर्धं तिन्तिडीफलम् ॥ ६३ ॥
धनंजयवटी ह्येषा धनंजयविवर्धिनी ।
अजीर्णं जरयत्याशु शूलमुन्मूलयेद्द्रुतम् ॥ ६४ ॥
हरेद्विबन्धसंबन्धमाध्मानं कर्पपत्यपि ।
ग्रहण्या निग्रहं कुर्याद्रेचयेद्दुचिमुत्तमाम् ॥ ६५ ॥

इति धनंजयवटी ।

### अथ शङ्खद्रावः—

अर्कस्नुहीतिलाश्वत्थचिञ्चापामार्गवह्निजम् ।
गृहीत्वा भस्म तस्मात्तु वस्त्रपूतं जलं हरेत् ॥ ६६ ॥
मृद्वग्निना पचेत्तत्तु यावल्लवणतां व्रजेत् ।
तत्तुल्यावेव संग्राह्यौ द्वौ क्षारौ टङ्कणं तथा ॥ ६७ ॥
सामुद्रं चापि गोदन्ता कासीसं चापि सोरकम् ।
द्विगुणं पञ्चलवणं शङ्खद्रावरसे तु तत् ॥ ६८ ॥
काचकूप्यां विनिक्षिप्य सप्ताहं चाम्लयोगतः ।
साधितं सकलं चूर्णं वारुणीयन्त्रमुद्धरेत् ॥ ६९ ॥
स्रुतं तेजोजलप्रख्यं स्वच्छं स्रवति तत्तदा ।
सर्वान्धातून्द्रावयति वराटानपि शङ्खकान् ॥ ७० ॥
अजीर्णस्याथ मन्दाग्नेः का वार्ता द्रावणे पुनः ।
गुल्मप्लीहोदरं शूलमष्टधाऽपि विनाशयेत् ॥ ७१ ॥
वैद्यजीवनहेतुश्च शङ्खद्रावरसो ह्ययम् ।

इति शङ्खद्रावः ।

### अथामृतार्णवो रसः—

चिञ्चाश्वत्थस्नुहीमुष्कापामार्गार्कस्य भस्मतः ॥ ७२ ॥
पृथक्समुद्धरेद्युक्त्या लवणानि भिषग्वरः ।
टङ्कणं च यवक्षारं स्वर्जिकां लवणानि च ॥ ७३ ॥
रामठं तालकं चैव लोणारं नवसागरम् ।
सोमक्षारं च गोदन्तां ताप्यं गन्धकजं रजः ॥ ७४ ॥
विडं समुद्रफेनं च सौराष्ट्रीं सोरकं विषम् ।
शङ्खचूर्णं शङ्खनाभिचूर्णं पाषाणजं रजः ॥ ७५ ॥
मनःशिलां च कासीसं सममेतत्तु कारयेत् ।
अम्लवेतसजद्रावैरातपे भावयेद्दिनम् ॥ ७६ ॥
सप्तधा तद्द्रवैस्तु जम्बीराम्लेन तत्त्रिधा ।
अतिशुष्कमिदं काचकूपिकाजठरे क्षिपेत् ॥ ७७ ॥
कूपीद्वयं नियोज्यान्यद्वारुणीयन्त्रमाचरेत् ।
तत्तेजस्तु ततो ग्राह्यं भिषजा गुरुमार्गतः ॥ ७८ ॥
काचपात्रे क्षिपेदेतदिष्टमन्त्राभिमन्त्रितम् ।
गुञ्जैकं पर्णखण्डेन गुञ्जाद्वयमथापि वा ॥ ७९ ॥

भक्षयेद्रुथ या देहपटाग्न्युचितमात्रया ।
कासश्वासं क्षयाजीर्णं ग्रहणीमुदराणि च ॥ ८० ॥
गुल्मारोचकमन्दाग्नि प्लीहकच्छ्रपिकाकृमीन् ।
अर्शांस्यश्मरीमूत्रकृच्छ्रमूत्राघातांश्च पाण्डुताम् ॥ ८१ ॥
आमवातं च कुष्ठानि पक्षाघातादिकान्गदान् ।
अशीतिसंख्यान्वातोत्थाञ्श्लेष्मोत्थान्विंशतिं तथा ॥८२॥
शूलानि शोथान्यक्ष्माणमजीर्णानि निहन्ति च ।
भुक्त्वा तु कण्ठपर्यन्तं रसं गुञ्जामितं लिहेत् ॥ ८३ ॥
भस्मी भवति तद्भुक्तं पुनर्भोजनमिच्छति ।
यामार्धाद्द्रावयत्येव शङ्खचाल्यश्मवज्रकम् ॥ ८४ ॥
मांसे दत्त्वाऽऽतपे स्थाप्यं मांसं द्रवति तत्क्षणात् ।

इत्यमृतार्णवो रसः ।

## अथ बृहदग्निमुखं चूर्णम्—

क्षारौ जीरे मिसिनतचतुर्जातपट्वद्रिमाया-
मार्गीवार्षीन्द्रयवहपुषासारधान्यः पटूनि ।
कुम्भाम्भोग्रानलपृथुविषापौष्कराम्लोऽम्लिशीप्यौ
पूतीपथ्यापार्श्वघसटिवृकीवेल्लरीहिङ्गुचेलम् ॥ ८५ ॥
शिग्रोर्मुष्के क्षुरतिलयटोर्भस्मतस्तोऽसकृद्वा
या:सिक्तोऽयोमल इति समैर्लुङ्गशुक्ताद्रकाम्भः ।
त्रिक्षि: पीतोऽग्निमुख उदराजीर्णगुल्मग्रहण्या-
नाहोन्मादश्वसनकसनार्शःशुले कुष्ठवृष्ण्योः ॥ ८६ ॥

इति बृहदग्निमुखं चूर्णम् ।

सौवर्चलाभयाक्षीव्यशुण्ठीरुष्णाम्बुना पिबेत् ।
सर्वाजीर्णविनाशाय लवङ्गं वाऽपि केवलम् ॥ ८७ ॥

अथैकैकाहारजनिताजीर्णस्यैकैकमौषधं यथा—

पनसे कदलं कदले च घृतं घृतपाकविधावपि जम्भरसः ।
तदुपद्रवशान्तिकरं लवणं लवणेऽपि च तण्डुलवारि परम् ॥ ८८ ॥

---

१ क. 'दुर्यदेवाणी' । २ ग. 'राम्काविनदी' ।

पट्टो वेसवाराल्लवङ्गेन फेणी
शमं पर्पटः शिग्रुबीजेन याति ।
कणामूलतो लड्डुकापूप*शट्ठा-
विपाको भवेच्छष्कुलीमण्डयोश्च ॥ ८९ ॥
नारिकेलफलतालबीजयोः
पाचनं सपदि ताण्डुलं जलम् ।
क्षीरमाशु सहकारपाचनं
चारमज्जानि शिवाफलं वरम् ॥ ९० ॥
मधूकमालूरनृपादनानां परूषखर्जूरकपित्थकानम् ।
पाकाय पेयं पिचुमन्दबीजं घृतेऽपि तक्रेऽपि तदेव पेयम् ॥ ९१ ॥
खर्जूरशृङ्गाटकयोः प्रशस्तं
विश्वौषधं कुत्र च भद्रमुस्तम् ।
यज्ञाङ्गबोधिद्रुफलेषु शीतं
प्लक्षे तथा वार्युचितं प्रणीतम् ॥ ९२ ॥
तण्डुलेषु पयसः पयो हितं दीप्यकस्तु चिपिटे कणायुतः ।
पट्टिको दधिजलेन जीर्यते मांसमाशु तुषवारिणा पचेत् ॥ ९३ ॥
गोधूमे कर्कटिका माषे तक्रं च मूलकं चणके ।
आमलकं किल मुद्गे दीप्यः पक्तौ तु यावनाले स्यात्॥९४॥
खण्डं च खण्डयति माषभवं ह्यजीर्णं
तैलं कुलत्थजमिति प्रवदन्ति केचित् ।
द्राक्षामुकूलकनिकोचकसेवितं वा
वातामवृत्तफलपाककरं लवङ्गम् ॥ ९५ ॥
कङ्गुश्यामाकनीवारकोरदूषमकुष्ठकाः ।
दध्नो जलेन जीर्यन्ते काञ्जिकेनाऽऽढकीं पचेत् ॥ ९६ ॥
पिष्टान्ने शीतलं वारि कृशरान्ने तु सैन्धवम् ।
माषेण्डर्यां निम्बमूलं मुद्गयूषस्तु पायसे ॥ ९७ ॥
गोधूममाषहरिमन्थसतीनमुद्ग-
पाको भवेज्झटिति +मातुलपुत्रकेण ॥ ९८ ॥

* क. शठा शठकः पानकविशेषः । + क. धत्तूरफलम् ।

१ ग. °षम टावि° ।

किमत्र चित्रं बहुमत्स्यमांसभोजी सुखी काञ्जिकपानतः स्यात् ।
इत्यद्भुतं कदलवह्निपक्वमांसेन मत्स्यः परिपाकमेति ॥ ९९ ॥
शाकानि सर्वाण्यपि यान्ति पाकं क्षारेण सद्यस्तिलनालजेन ।
चञ्चूकसिद्धार्थकवास्तुकानां गायत्रिसारक्वथनेन पाकः ॥ १०० ॥
आममाम्रफलं मीने तद्बीजं पिशिते हितम् ।
कूर्ममांसं यवक्षाराच्छीघ्रं पाकमुपैति हि ॥ १ ॥
कपोतपारावतनीलकण्ठकपिञ्जलानां पिशितानि भुक्त्वा ।
कासस्य मूलं परिपीय पिष्टं सुखी भवेन्ना बहुशो हि दृष्टम् ॥ २ ॥
पटोलवंशाङ्कुरकारवल्लीफलानि निम्बक्वथितानि जग्ध्वा ।
क्षारोदकं ब्रह्मतरोर्निपीय भोक्तुं पुनर्वाञ्छति तावदेव ॥ ३ ॥
विपच्यते सूरणको गुडेन तथाऽऽलुकं तण्डुलजोदकेन ।
पिण्डालुकं जीर्यति कोरदूषारकसेरुपाकः खलु नागरेण ॥ ४ ॥
लवणं तण्डुलतोयात्सर्पिर्जम्बीरवारिणा च पचेत् ।
मरिचादपि तत्पाकं शीघ्रं यात्येव काञ्जिकात्तैलम् ॥ ५ ॥
क्षीरं जीर्यति तक्रेण तद्द्वयं कोष्णमण्डतः ।
माहिषं मणिमन्थेन शङ्खचूर्णेन तद्दधि ॥ ६ ॥
रसाला जीर्यति व्योषात्खण्डं नागरभक्षणात् ।
गुडो नागरमुस्ताभ्यां तथेक्षुश्चाऽऽर्द्रकाशनात् ॥ ७ ॥
मद्यं रसालया सा च हरिमन्थेन जीर्यति ।
फलानि सकलान्याशु यवक्षारात्पचन्ति हि ॥ ८ ॥
उष्णेन शीतं शिशिरेण चोष्णं
जीर्णो भवेत्क्षारगणस्तथाऽम्लैः ।
स्निग्धेषु रूक्षं च तदन्यनेन
स्निग्धं च रूक्षेण च पाकमेति ॥ ९ ॥
तप्तं तप्तं हेम वा तारमग्नौ
तोये क्षिप्तं सप्तकृत्वस्तदम्भः ।
पीत्वाऽजीर्णं तोयजातं निहन्या-
त्तत्र क्षौद्रं* भद्रमुक्तं विशेषात् ॥ ११० ॥
इत्यजीर्णकुलकण्डनं गणं
नूनमाह मुनिरत्रिसंभवः ।

* क. 'तत्र चाऽम्भो' इति पाठान्तरम् ।

सम्यगेनमधिगम्य योजयन्
न क्वचित्स्खलति जातु तत्त्ववित् ॥ ११ ॥

इत्यजीर्णकण्डनो गणः ।

पलं चिञ्चाक्षारं पलपरिमितं पञ्चलवणं
द्रवं सम्यक्पिष्टं भवति विधिना निम्बुकरसैः ।
ततस्तप्तं तप्तं पलपरिमितं शङ्खशकलं
क्षिपेद्वारान्सद्यः प्रमथितमनेनैव विधिना ॥ १२ ॥
पलप्रमाणं कटुकत्रयं च पलार्धमानेन लवङ्गभागः ।
बिल्वं पलद्वादशभागमानं पलार्धमानं रसगन्धकं च ॥ १३ ॥
बदरास्थिप्रमाणेन वटीं कुर्याद्विधानतः ।
सर्वाजीर्णप्रशान्त्यर्थं खादेच्छङ्खवटीमिमाम् ॥
गुल्मोदरेषु शूलेषु वह्निमान्द्येषु पूजिता ॥ १४ ॥

इति शङ्खवटी ।

## अथापरा शङ्खवटी—

शङ्खं सप्त दिनानि निम्बुकरसे निर्वाप्य तप्तं पल-
द्वंद्वं तिन्तिणिमूलिका पलमिता सार्धं च सौवर्चलात् ।
सिन्धूत्थाच्च पलं समुद्रलवणं काचाद्विडाचैकतो
गद्याणास्त्रिकटोर्नव द्विगुणिता एतद्द्विया योजयेत् ॥ १५ ॥
अष्टौ रामठगन्धयोर्मिलितयोर्गद्याणकः पारदा-
च्चत्वारोऽत्र विषस्य पञ्च कथिताः कोलास्थिमात्रा कृता ।
एषा शङ्खवटी निहन्ति पवनं शूलान्यजीर्णामयं
मन्दाग्नित्वमरोचकं प्रशमयेन्मूत्रस्य कृच्छ्राण्यपि ॥ १६ ॥

इत्यपरा शङ्खवटी ।

## शङ्खवटी—

चिञ्चाक्षारपलं पटुव्रजपलं निम्बूरसैः कल्कितं
तस्मिञ्शङ्खपलं प्रतप्तमसकृन्निर्वाप्य शीर्णावधि ।
हिङ्गुव्योषपलं रसामृतबलीन्संक्षिप्य निष्कांशकान्
बध्वा शङ्खवटी क्षयग्रहणिरुग्गुल्माग्निमान्द्यं जयेत् ॥ १७ ॥

इति शङ्खवटी ।

---

१ ग. 'बलि निष्कि' । २ ग. 'णिकाद्यवडिङ्क्शूलामनुन्' ।

अथाग्निकुमारः—

पारदं च विषं गन्धं टङ्कणं सममागतः ।
मरिचान्यष्ट भागाः स्युर्द्वौ द्वौ शङ्खवराटयोः ॥ १८ ॥
पक्वजम्बीरजैर्गाढं रसैः सप्त विभावयेत् ।
गुञ्जाद्वयमितो देयो रसो ह्यग्निकुमारकः ॥ १९ ॥
समीरणसमुद्भूतमजीर्णं च विषूचिकाम् ।
क्षणेन क्षपयत्येष कफरोगनिकृन्तनः ॥ २० ॥

इत्यग्निकुमारः ।

अथ शङ्खवटीरसः रसार्णवतः—

चिञ्चाश्वत्थस्नुहिक्षाराद्पामार्गार्कतस्तथा ।
लवणं पञ्च संगृह्य ततो लवणपञ्चकम् ॥ २१ ॥
सैन्धवाद्यान्समादाय सर्वमेतत्पलद्वयम् ।
कर्षं कर्षं विषं गन्धरसं टङ्कणकं तथा ॥ २२ ॥
हिङ्गुपिप्पलिशुण्ठीनां तथा मरिचजीरयोः ।
द्वौ द्वौ कर्षौ पृथक्कार्यौ तथा द्वौ शङ्खचूर्णतः ॥ २३ ॥
पलत्रयाच्च कर्षैकं द्विकर्षं तु लवङ्गतः ।
एतत्सर्वं समासाद्य श्लक्ष्णचूर्णीकृतं शुभम् ॥ २४ ॥
भावयेदम्लयोगेन सप्तधा च प्रयत्नतः ।
रसः शङ्खवटी नाम्ना सेवितः सर्वरोगजित् ॥ २५ ॥
गुञ्जामात्रमिदं खादेद्भवेद्दीपनपाचनम् ।
अजीर्णं वातसंभूतं पित्तश्लेष्मभवं तथा ॥
विषूचीं शूलमानाहं हन्यादत्र न संशयः ॥ २६ ॥

इति शङ्खवटीरसः ।

अथ बृहन्महोदधिः—

दन्तीबीजमकल्मषं सदहनं शुण्ठीलवङ्गं समं
गन्धं पारदटङ्कणं च मरिचं श्रीवृद्धदारं विषम् ।
खल्वे दण्डयुगं विमर्द्य विधिना दन्तीद्रवैर्भावना
देयाः पञ्चदशानु निम्बुकजलैस्त्रेधा त्रिधा चित्रकैः॥ २७॥
त्रेधा चाऽऽर्द्रकजै रसैः शुभधिया सप्तैव चाऽऽवेगिनः
पश्चाच्छुष्ककलायसंमितवटी कार्या भिषक्संमता ।

शुद्धोधमकरी त्रिशूलशमनी जीर्णज्वरध्वंसिनी
कासारोचकपाण्डुतोदरगदस्तोमामकृच्छ्रनाशिनी ॥ २८ ॥
पस्त्पाटोपहलीमकामयहरी मन्दाग्निसंदीपनी
सिद्धेयं तु महोदधिप्रकटिता सर्वामयघ्नी सदा ॥ २९ ॥
इति बृहन्महोदधिः ।

अथ क्रव्यादरसः—

शुद्धो रसः पलमितो द्विपलं गन्धकं मतम् ।
पलार्धं लोहभस्म स्यात्ताम्रमर्धपलं मतम् ॥ ३० ॥
सर्वं कज्जलिकां कृत्वा लोहपात्रे विनिक्षिपेत् ।
चुल्ह्यामग्निं मृदुं दद्याद्यथा गन्धो न दह्यते ॥ ३१ ॥
गोमयस्याऽऽलवाले तु पत्रं वातारिजं क्षिपेत् ।
स्थापयेच्च रसं तत्र पत्रं चोपरि निक्षिपेत् ॥ ३२ ॥
पञ्चशुद्धं ततः कृत्वा लोहपात्रे पुनः क्षिपेत् ।
पुनस्तत्तापयेच्चुल्ह्यां मातुलुङ्गरसं ततः ॥ ३३ ॥
तुलामानं प्रदापाद्य पञ्चकोलशृतां तुलाम् ।
चुकस्य च तुलां दत्त्वा सिद्धं तच्च समुद्धरेत् ॥ ३४ ॥
एकं तद्गोलकं कृत्वा तैः समं टङ्कणं क्षिपेत् ।
टङ्कणार्धं विषं दद्यान्मरिचं विषतुल्यकम् ॥ ३५ ॥
भावनाश्चणकक्षारैः सप्त दद्याद्विचक्षणः ।
सिध्यत्येवं रसस्तत्तु रसं माषद्वयात्मकम् ॥ ३७ ॥
सैन्धवं माषमात्रं तु तक्रेण सह पाययेत् ।
रसं क्रव्यादनामानं दद्यात्तं भोजनोपरि ॥ ३६ ॥
शीघ्रं तज्जारयेद्भुक्तं पुनर्भोजनमाचरेत् ।
अनेन क्रमयोगेण सर्वव्याधिहरो रसः ॥ ३८ ॥
इति क्रव्यादरसः ।

अथ मन्थानभैरवाद्बृहत्क्रव्यादरसः—

द्विपलं गन्धकं शुद्धं द्रावयित्वा विनिक्षिपेत् ।
पारदं पलमानं तु सूतशुल्वायसी पुनः ॥ ३९ ॥
पलमानेन संमिश्र्य पञ्चाङ्गुलदले क्षिपेत् ।
ततो विचूर्ण्य यत्नेन लोहपात्रे विनिक्षिपेत् ॥ १४० ॥

१ प. °तः । तेल°।

मृद्वग्निना पचेत्तं तु दर्व्या संचालयेन्मुहुः ।
पलमात्रं रसं सम्यग्दद्याज्जम्बीरकस्य तु ॥ ४१ ॥
संचूर्ण्य पञ्चकोलोत्थैः कषायैः साम्लवेतसैः ।
भावनाः किल दातव्याः पञ्चाशत्प्रमिताः पृथक् ॥ ४२ ॥
भृष्टटङ्कणचूर्णं च तुल्येन सह मेलयेत् ।
तदर्धं कृष्णलवणं मरिचं सर्वतुल्यकम् ॥ ४३ ॥
सप्तधा भावयेत्पश्चाच्चणकक्षारवारिणा ।
ततः संशोष्य संवेष्य कूप्यां च जठरे क्षिपेत् ॥ ४४ ॥
अत्यर्थं गुरुमांसानि गुरुभोज्यान्यनेकशः ।
भुक्तानि कण्ठपर्यन्तं चतुर्वल्लमितो रसः ॥ ४५ ॥
पट्वम्लतक्रसहितः पीतमात्रो हि पाचयेत् ।
पुनर्भोजयति क्षिप्रं का पुनर्वह्निमन्दता ॥ ४६ ॥
रसः क्रव्यादनामाऽयं प्रोक्तो मन्थानभैरवात् ।
सिंहलक्षोणिपालस्य भूरिमांसप्रियस्य च ।
पुनर्भोजनकामस्य भैरवानन्दयोगिना ॥ ४७ ॥
कुर्याद्दीपनमुद्धतं च पवनं दुष्टामयोच्छोषणं
तुन्दस्थौल्यनिबर्हणं गदहरः शूलार्तिमूलापहः ।
गुल्मप्लीहविनाशनं बहुरुजां विध्वंसनं स्रंसनं
वातग्रन्थिमहोदरापहरणं क्रव्यादनामा रसः ॥ ४८ ॥
इति बृहत्क्रव्यादः ।

अथ रामबाणो रसेन्द्रचिन्तामणौ—

पारदामृतलवङ्गगन्धकं भागयुग्ममरिचेन मिश्रितम् ।
तत्र जातिफलमर्धभागिकं तिन्तिडीफलरसेन मिश्रितम् ॥ ४९ ॥
वह्निमान्द्यदशवक्त्रनाशनो रामबाण इति विश्रुतो रसः ।
माषमात्रमनुपानयोगतः सद्य एव जठराग्निदीपनः ॥ १५० ॥
रामबाणममृतं रसायनं नागपत्रमरिचेन भक्षणम् ।
संग्रहग्रहणिकुम्भकर्णकं सामवातखरदूषणं जयेत् ॥ ५१ ॥
दीयते तु चणकानुपानतः सद्य एव जठराग्निदीपनः ।
रोचकः कफकुलान्तकारकः श्वासकासवमिजन्तुनाशनः ॥ ५२ ॥
इति रामबाणो रसेन्द्रचिन्तामणौ ।

---

१ क. चूर्णेन तु° । २ ख. च । दिशी माम समासाद्य भै° । ३ ख. °नमूर्धजग्रगदहदृश° ।

## अथाग्निमुखो रसः—

सूतं गन्धं विषं तुल्यं मर्दयेदार्द्रकद्रवैः ।
अश्वत्थचिञ्चापामार्गक्षारः क्षारौ च टङ्कणम् ॥ ५३ ॥
जातीफलं लवङ्गं च त्रिकटु त्रिफला समम् ।
शङ्खक्षारं पञ्चलवणं हिङ्गुजीरं द्विभागिकम् ॥ ५४ ॥
मर्दयेदम्लयोगेन गुञ्जामात्रा वटी शुभा ।
पाचनी दीपनी सद्योऽजीर्णशूलं विषूचिकाम् ॥ १५५ ॥
हिक्कां गुल्मं च मोहं च नाशयेन्नात्र संशयः ।
रसेन्द्रसंहितायाश्च नाम्ना वह्निमुखो रसः ॥ ५६ ॥

इत्यग्निमुखो रसः ।

## अथाजीर्णारी रसेन्द्रचिन्तामणौ—

शुद्धं सूतं गन्धकं च पलमानं पृथक्पृथक् ।
हरीतकी च द्विपला नागरस्त्रिपलः स्मृतः ॥ ५७ ॥
कृष्णा च मरिचं तद्वत्सिन्धूत्थं त्रिपलं पृथक् ।
चतुष्पला च विजया मर्दयेन्निम्बुकद्रवैः ॥ ५८ ॥
पुटानि सप्त देयानि घर्ममध्ये पुनः पुनः ।
अजीर्णारिरयं प्रोक्तः सद्यो दीपनपाचनः ॥ ५९ ॥
भक्षयेद्द्विगुणं भक्ष्यं पाचयेद्रेचयेदपि ।

इत्यजीर्णारी रसेन्द्रचिन्तामणौ ।

## अथ विषूच्यादिचिकित्सा—

विषूच्यामतिवृद्धायां पार्ष्ण्योर्दाहः प्रशस्यते ॥ १६० ॥
तद्दिने लङ्घनं कार्यमाचारस्तु विरिक्तवत् ।
जलपीतमपामार्गमूलं हन्याद्विषूचिकाम् ॥ ६१ ॥
सतैलं कारवेलाम्बु विधुनोति विषूचिकाम् ।
बालमूलस्य निष्क्राथः पिप्पलीचूर्णसंयुतः ॥ ६२ ॥
विषूचीनाशनश्रेष्ठो जठराग्निविवर्धनः ।
बिल्वनागरनिष्क्राथो हन्याच्छर्दिविषूचिकाम् ।
बिल्वनागरकैडर्यक्राथस्तदधिको गुणैः ॥ ६३ ॥

इति कैडर्यं कट्फलम् ।

अथानुभूतमिदम्—

त्र्योषं करञ्जस्य फलं हरिद्रे
मूलं समायाप्य च मातुलुङ्ग्याः ।
छायाविशुष्का गुटिकाः कृतास्ता
हन्युर्विषूचीं नयनाञ्जनेन ॥ ६४ ॥

इत्यनुभूतमिदम् ।

अथ चुकाद्यं तैलम्—

अपामार्गस्य पत्राणि मरिचानि समानि च ।
अश्वस्य लालया पिष्टान्यञ्जनाद्धन्ति सूचिकाम् ॥ ६५ ॥
विषूच्यामतिवृद्धायां तर्कं दधिसमं जलम् ।
नारिकेलाम्बु पेयं वा प्राणत्राणाय योजयेत् ॥ ६६ ॥
पलं चुक्रं कुष्ठं पिचुयुगमितं सैन्धवकणे
तदर्धं प्रत्येकं करतलमितं जातिफलकम् ।
करोस्तैलं किंचित्कुडवमितमग्नावधिशृतं
तदेतच्चुकाद्यं शमयति विषूचीं सगदाः ॥ ६७ ॥

इति चुकाद्यं तैलम् ।

त्वक्पत्ररास्नागरुशिग्रुकुष्ठैरम्लप्रपिष्टैः सवचाशताह्वैः ।
उद्वर्तनं खल्लिविषूचिकाघ्नं तैलं विपक्वं च तदर्थकारि ॥६८॥
कुष्ठसैन्धवयोः कल्कं चुक्रं तैलं च तच्छृतम् ।
विषूच्यां मर्दनं तेन खल्लीशूलनिवारणम् ॥ ६९ ॥
पिपासायां तथोत्क्लेशे लवङ्गस्याम्बु शस्यते ।
जातीफलस्य वा शीतं शृतं भद्रघनस्य वा ॥ १७० ॥

उत्क्लेशलक्षणं तु—

उत्क्लिश्यान्नं न निर्गच्छेत्प्रसेकष्ठीवनेरितम् ।
हृदयं पीड्यते चास्य तमुत्क्लेशं विनिर्दिशेत् ॥ ७१ ॥
सरुग्वाऽऽनद्धमुदरमम्लपिष्टैः प्रलेपयेत् ।

दारुपट्टकम्—

दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः ॥ ७२ ॥

हैमवती श्वेतवचा ।

---

१ क. चुकं ।

तक्रेण युक्तं यवचूर्णमुष्णं सक्षारमार्ति जठरे निहन्यात् ।
स्वेदो घटैर्वा बहुवाष्पपूर्णैरुष्णैस्तथाऽन्यैरपि पाणितापैः ॥ ७३ ॥

इति विषूचीचिकित्सा ।

विलम्बिकालसकयोरूर्ध्वाधः शोधनं हितम् ।
स्वेदेन फलवर्त्या च तथा शोधनभेषजैः ॥
दण्डाद्यलसकेऽप्युचैरयमेव क्रियाक्रमः ॥ ७४ ॥

## अथामृता हरीतकी—

तक्रे समुत्स्वेद्य शिवाशतानि तद्बीजमुद्धृत्य च कौशलेन ।
पञ्चपणं पञ्च पटूनि हिङ्गुक्षारावजाजीमजमोदकं च ॥ ७५ ॥
पञ्चपणादेस्त्रिवृदर्धभागा गणस्य देयाऽम्बरगालितस्य ।
विभाव्य चुक्रेण रजांस्यमीषां क्षिपेच्छिवाबीजनिवासगर्भे ॥७६॥
समुह्य घर्मे च विशोष्य तासां हरीतकीमन्यतमां निषेवेत् ।
अजीर्णमन्दानलजाठरामयान्सगुल्मशूलग्रहणीगुदाङ्कुरान् ॥ ७७ ॥
विबन्धमानाहरुजौ जयत्यसौ तथाऽऽमवातांस्त्वमृता हरीतकी॥७८॥

इत्यमृताहरीतकी ।

## अथ हुताशनः—

एकं च दिग्द्वादशभागमानं योज्यं विषं टङ्कणमूषणं च ।
हुताशनो नाम हुताशनस्य करोति वृद्धिं कफवातहन्ता ॥ ७९ ॥

इति हुताशनः ।

## अथ लघुक्रव्यादः—

पारदाद्द्विगुणं गन्धं गन्धांशं मृतलोहकम् ।
पिप्पलीपिप्पलीमूलमग्निशुण्ठीलवङ्गकम् ॥ १८० ॥
लोहसाम्यं पृथक्कुर्याद्रससाम्यं सुवर्चलम् ।
टङ्कणं मरिचं चापि गन्धतुल्यं प्रदापयेत् ॥ ८१ ॥
एतद्विचूर्ण्य यत्नेन भावयेत्सप्तधाऽम्लकैः ।
एतद्रसायनं माषमात्रं भुक्ते प्रदापयेत् ॥ ८२ ॥
तक्रेण केवलं वाऽपि दद्याद्भोजनपाचनम् ।
क्षिप्रं तज्जीर्यते भुक्तं दीपनं भवति ध्रुवम् ।
सर्वाजीर्णप्रशमनं लघुक्रव्यादसंज्ञकम् ॥ ८३ ॥

इति लघुक्रव्यादः ।

उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः ।
लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम् ॥ १८४ ॥

इति श्रीयोगतरङ्गिण्यामजीर्णनिदानचिकित्साकथनं नामैकसप्ततितमस्तरङ्गः ॥ ७१ ॥

---

अथ द्विसप्ततितमस्तरङ्गः ।

---

## अथ भस्मकरोगनिदानचिकित्सा—

कफे क्षीणे यदा पित्तं स्वस्थाने मारुतानुगम् ।
तीव्रं प्रवर्धयेद्वह्निं तदा तं भस्मकं वदेत् ॥ १ ॥

### अथोपद्रवाः—

तृड्दाहश्वासमूर्छादीन्कृत्वैवात्यग्निसंभवात् ।
पक्त्वाऽन्नमाशु धात्वादीन्स क्षिप्रं नाशयेत्तनुम् ॥ २ ॥

### क्रियामाह—

तं भस्मकं गुरुस्निग्धसान्द्रमण्डहिमास्थिरैः ।
अन्नपानैर्नयेच्छान्तिं पित्तघ्नैश्च विरेचनैः ॥ ३ ॥
अत्युद्धताग्निशान्त्यै माहिषदधिदुग्धतक्रसर्पींषि ।
सेवेत यवागूं वा समधूच्छिष्टां ससर्पिष्काम् ॥ ४ ॥
असकृत्पित्तहरणं पायसं प्रति भोजने ।

### विरेचनमाह—

श्यामात्रिवृद्विपक्वं वा पयो दद्याद्विरेचनम् ॥ ५ ॥

### हितमाह—

यत्किंचिन्मधुरं मेध्यं श्लेष्मलं गुरु भोजनम् ।
सर्वं तदत्यग्निहितं भुक्त्वा प्रस्वपनं दिवा ॥ ६ ॥

### विशिष्टत्वमाह—

कफे पूर्वं जिते पित्ते मारुते चानलः समः ।
समधातोः पचत्यन्नं पुष्ट्यायुर्बलवर्धनः ॥ ७ ॥

### दोषधात्वग्निपक्वापक्वमाह—

आहारं पचति शिखी दोषानाहारवर्जितः पचति ।
दोषक्षये च धातून्धातुक्षैण्ये तथा प्राणान् ॥ ८ ॥

तस्योपचाराः—

मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत् ।
निरिन्धनोऽन्तरं लब्ध्वा यथैनं न विपादयेत् ॥ ९ ॥
कोलास्थिमज्जकल्कस्तु पीतो वाऽप्युदकेन वै ।
अचिराद्विनिहन्त्येव प्रयोगो भस्मकं नृणाम् ॥ १० ॥
नारीक्षीरेण संपिष्टां पिबेदौदुम्बरीं त्वचम् ।
ताभ्यां वा पायसं सिद्धं पिबेदत्यग्निशान्तये ॥ ११ ॥
सिततण्डुलसितकमलं छागीक्षीरेण पायसं सिद्धम् ।
भुक्त्वा घृतेन पुरुषो द्वादश दिवसान्बुभुक्षितो न भवेत् ॥ १२ ॥

अथ विदार्यादिघृतम्—

विदारीस्वरसक्षीरे पचेदष्टगुणं घृतम् ।
माहिषं जीवनीयेन कल्केनात्यग्निनाशनम् ॥ १३ ॥

इति विदार्यादिघृतम् ।

इति श्रीयोगतरङ्गिण्यां भस्मकरोगनिदानचिकित्साकथनं नाम
द्विसप्ततितमस्तरङ्गः ॥ ७२ ॥

---

अथ त्रिसप्ततितमस्तरङ्गः ।

---

अथ कृम्यधिकारः—

कृमिनिदानम्—

कृमयस्तु द्विधा प्रोक्ता बाह्याभ्यन्तरभेदतः ।
बहिर्मलकफासृग्विड्जन्मभेदाश्चतुर्विधाः ॥ १ ॥
नामतो विंशतिविधा बाह्यास्तत्र मलोद्भवाः ।
तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः ॥ २ ॥
बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः ।
द्विधा ते कोठपिडकाः कण्डूगण्डान्प्रकुर्वते ॥ ३ ॥
अजीर्णभोजी मधुराम्लनित्यो द्रवप्रियः पिष्टगुडोपभोक्ता ।
व्यायामवर्जी च दिवाशयश्च विरुद्धभुक्संलभते कृमींश्च ॥ ४ ॥

कफोद्भवानाह—

माषमांसगुडक्षीरदधिसूक्तैः कफोद्भवाः ।

शोणितोद्भवानाह–

विरुद्धाजीर्णशाकाद्यैः शोणितोत्था भवन्ति हि ॥ ५ ॥

पुरीषजानाह–

माषपिष्टान्नलवणगुडशाकैः पुरीषजाः ।

अथाभ्यन्तरकृमिलक्षणम्–

ज्वरो विवर्णता शूलो हृद्रोगश्छर्दनं भ्रमः ॥ ६ ॥
भक्तद्वेषोऽतिसारश्च संजातकृमिलक्षणम् ।
कफादामाशये जाता वृद्धाः सर्पन्ति सर्वतः ॥ ७ ॥
पृथुवर्ध्रनिभाः केचित्केचिद्गण्डूपदोपमाः ।
रूढधान्याङ्कुराकारास्तनुदीर्घास्तथाऽणवः ॥ ८ ॥
श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते ।
अन्त्रादा उदरावेष्टा हृदयादा महाकुहाः ॥ ९ ॥
कुरवो दर्भकुसुमाः सुगन्धास्ते च कुर्वते ।
हृल्लासमास्यस्रवणमविपाकमरोचकम् ॥ १० ॥
मूर्छाछर्दिज्वरानाहकार्श्यक्षवथुपीनसान् ।
रक्तवाहिशिरास्थाना रक्तजा जन्तवोऽणवः ॥ ११ ॥
अपादा वृत्तताम्राश्च सूक्ष्माः केचिददर्शनाः ।
केशादा लोमविध्वंसा रोमद्वीपा उदुम्बराः ॥ १२ ॥
षट् ते कुष्ठैककर्माणः सहसौरसमातरः ।
पक्वाशये पुरीषोत्था जायन्तेऽधोविसर्पिणः ॥ १३ ॥
वृद्धास्ते स्युर्भवेयुश्च ते यदाऽऽमाशयोन्मुखाः ।
तदाऽऽस्योद्गारनिश्वासविड्गन्धानुविधायिनः ॥ १४ ॥
पृथुवृत्ततनुस्थूलाः श्यावपीतसितासिताः ।
ते पञ्च नाम्ना कृमयः ककेरुकमकेरुकाः ॥ १५ ॥
सौसुरादाः सलूनाख्या लेलिहा जनयन्ति च ।
विड्भेदः शूलविष्टम्भकार्श्यपारुष्यपाण्डुताः ।
लोहमर्षोऽग्निसदनं गुदकण्डूर्विनिर्गमात् ॥ १६ ॥

इति कृमिनिदानम् ।

## अथ क्रिमिरोगचिकित्सा—

बाह्यास्तैलादिलेपैर्बहुमिरपहरेच्छ्लेष्मणामाशयोत्था-
न्सेकाद्यै रक्तकोष्ठे रुधिरसमुचितानस्रदोषघ्नकाद्यैः ।
विड्जातांस्तांस्तु पक्वाशयसमुदयिनो रेचनैरौषधैश्च
प्रोक्तैरेवं समस्तान्विधिवदपनयेज्जन्तुमाजोऽन्नजन्तून् ॥१७॥
मुस्ताखुपर्णीफलदारुशिग्रुक्वाथः सकृष्णाक्रमिशत्रुकल्कः ।
मार्गद्वयेनापि चिरप्रवृत्तान्कृमीन्निहन्ति क्रिमिजांश्च रोगान् ॥१८॥

इति योगशतात् ।

## अथ राजमार्तण्डात्—

पारसीकयवानीकाः पीताः पर्युषितवारिणा प्रातः ।
गुडपूर्वाः क्रिमिजालं कोष्ठगतं पातयन्त्याशु ॥ १९ ॥
पलाशबीजस्वरसं पिबेद्वा मधुसंयुतम् ।
लिह्यात्क्षौद्रेण वैडङ्गचूर्णं वा क्रमिनाशनम् ॥ २० ॥
विडङ्गत्र्योषसंयुक्तमन्नमण्डं पिबेन्नरः ।
दीपनं क्रमिनाशाय जठराग्निविवृद्धये ॥ २१ ॥
प्रत्यहं कटुकं तिक्तं भोजनं कफनाशनम् ।
क्रमीणां नाशनं सेव्यमग्निसंदीपनं परम् ॥ २२ ॥
विडङ्गशृतपानीयं विडङ्गेनावधूलितम् ।
पीतं क्रमिहरं दृष्टं क्रमिजांश्च गदाञ्जयेत् ॥ २३ ॥
लिह्याद्विडङ्गचूर्णं वा मधुना क्रमिनाशनम् ।
कम्पिल्लचूर्णकर्षार्धं गुडेन सह भक्षितम् ॥ २४ ॥
नाशयेत्तत्क्रमीन्सर्वानुदरस्थान्न संशयः ।
विडङ्गकौटजं बीजं तथा बीजं पलाशजम् ॥ २५ ॥
संचूर्ण्य खादेत्खण्डेन क्रमीन्नाशयितुं नरः ।
निम्बपत्रसमुद्भूतं रसं क्षौद्रयुतं पिबेत् ॥ २६ ॥
धत्तूरपत्रजं वाऽपि क्रमिनाशनमुत्तमम् ।
रसेन्द्रेण समायुक्तो रसो धत्तूरपत्रजः ॥ २७ ॥
ताम्बूलपत्रजो वाऽपि लेपाद्यूकाविनाशनः ।
धत्तूरपत्रकल्केन तद्रसेनैव पाचितम् ॥ २८ ॥

---

१ क. °रुसेके उ° । २ क. सौषध° ।

तैलमभ्यङ्गमात्रेण यूका नाशयति क्षणात् ।
कृमीणां विट्कफोत्थानामेतदुक्तं चिकित्सितम् ॥ २९ ॥
रक्तजानां तु संहारं कुर्यात्कुष्ठचिकित्सया ॥ ३० ॥
ककुभकुसुमं विडङ्गं लाङ्गलिभल्लातकं तथोशीरम् ।
श्रीवेष्टकसर्जरसं चन्दनमथ कुष्ठमष्टमं दद्यात् ॥ ३१ ॥
एष सुगन्धो धूपो मशककृमीणां विनाशकः प्रोक्तः ।
शय्यासु मत्कुणानां शिरसि च गात्रेषु यूकानाम् ॥ ३२ ॥

इति राजमार्तण्डात् ।

## अथ विडङ्गादितैलम्—

दाडिमत्वक्कृतः क्वाथस्तिलतैलेन संयुतः ।
त्रिदिनात्पातयत्येव कोष्ठतः कृमिजालकम् ॥ ३३ ॥
मण्डीं पिष्ट्वाऽऽरनालेन गोमूत्रेणातिमुक्तकः ।
कुनटीकटुतैलेन योगो यूकाविनाशनः ॥ ३४ ॥
सविडङ्गं च शिलया सिद्धं सुरभीजलेन कटुतैलम् ।
निखिला नयति विनाशं लिक्षासहिता दिनैर्यूकाः ॥ ३५ ॥

इति विडङ्गादितैलम् ।

## अथ कृमिमुद्गरो रसः—

हरीतकीं चैव तथा हरिद्रां सौवर्चलं चैव समं विचूर्णितम् ।
इन्द्रवारुणिजलेन भावितं कीटसङ्घविनिवारणं परम् ॥ ३६ ॥
निम्बोऽजमोदा जन्तुघ्नं बह्निबीजं सचोरकम् ।
सहिङ्गुकं समगुडं सद्यो जन्तुविनाशनम् ॥ ३७ ॥
विशालायाः फलं पक्वं तप्तलोहोपरि क्षिपेत् ।
तद्धूमो दन्तलग्नानां कीटानां पातनः परः ॥ ३८ ॥
क्रमेण वृद्धं रसगन्धकाजमोदाविडङ्गं विषमुष्टिका च ।
पलाशबीजं च विचूर्ण्यमस्य निष्कप्रमाणं मधुनाऽवलीढम् ॥३९॥
पिबेत्कषायं घनजं तदूर्ध्वं रसोऽयमुक्तः कृमिमुद्गराख्यः ।
'कृमीन्निहन्ति कृमिजांश्च रोगान्संदीपयत्यग्निमयं त्रिरात्रात् ॥४०॥

इति कृमिमुद्गरो रसो रत्नप्रदीपात् ।

क्षीराणि मांसानि घृतानि चापि
दधीनि शाकानि च पर्णवन्ति ।

अम्लं च मिष्टं च रसं विशेषा-
त्क्रमीन्जिघांसुः परिवर्जयेद्धि ॥ ४१ ॥

इति योगतरङ्गिण्यां क्रिमिनिदानचिकित्साकथनं नाम
त्रिसप्ततितमस्तरङ्गः ॥ ७३ ॥

---

अथ चतुःसप्ततितमस्तरङ्गः ।

---

## अथ पाण्डुरोगनिदानम्—

पाण्डुरोगाः स्मृताः पञ्च वातपित्तकफैस्त्रयः ।
चतुर्थः संनिपातेन पञ्चमो भक्षणान्मृदः ॥ १ ॥

व्यवायमम्लं लवणानि मद्यं मृदं दिवास्वप्नमतीव तीक्ष्णम् ।
निषेव्यमाणस्य विदूष्य रक्तं दोषास्त्वचः पाण्डुरतां नयन्ति ॥२॥
त्वक्स्फोटनिष्ठीवनगात्रसादमृद्भक्षणप्रेक्षणकूटशोथाः ।
विण्मूत्रपीतत्वमथाविपाको भविष्यतस्तस्य पुरःसराणि ॥ ३ ॥

पाण्डुरः श्वासकासार्तः पीतत्वङ्नखलोचनः ।
वम्यग्निसादश्वयथुसहितः पाण्डुरोगवान् ॥ ४ ॥
कृष्णारुणत्वं नेत्रादेर्वातात्पित्तात्तु पीतता ।
कफेन शुक्लता पाण्डौ सर्वलक्ष्म त्रिदोषतः ॥ ५ ॥
सर्वान्नसेविनः सर्वे दुष्टा दोषास्त्रिदोषजम् ।
त्रिदोषलिङ्गं कुर्वन्ति पाण्डुरोगं सुदुःसहम् ॥ ६ ॥
ज्वरारोचकहृल्लासच्छर्दितृष्णाक्लमान्वितः ।
पाण्डुरोगी त्रिभिर्दोषैस्त्याज्यः क्षीणो हतेन्द्रियः ॥ ७ ॥
मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मलः ।
कषाया मारुतं पित्तमूषरा मधुरा कफम् ॥ ८ ॥
कोपयेन्मृद्रसादींश्च रूक्षाद्भुक्तं च रूक्षयेत् ।
पूरयत्यविपक्वैव स्रोतांसि निरुणध्यपि ॥ ९ ॥
इन्द्रियाणां बलं हत्वा तेजो वीर्यौजसी तथा ।
पाण्डुरोगं करोत्याशु बलवर्णाग्निनाशनम् ॥ १० ॥

---

[illegible] १ ग. 'श पैस्त्यादि' ।

मृज्जलक्षणमाह—

मृद्भक्षणाद्भवेत्पाण्डुस्तन्द्रालस्यनिपीडितः ।
सकासश्वासशूलार्शःसदारुचिसमन्वितः ॥ ११ ॥
शूनाक्षिकूटगण्डभ्रूः शूनपन्नाभिमेहनः ।
कृमिकोष्ठोऽतिसार्येत मलं सासृक्कफान्वितम् ॥ १२ ॥
पाण्डुरोगश्चिरोत्पन्नः खरीभूतो न सिध्यति ।
कालप्रकर्षाच्छूनाङ्गो यो वा पीतानि पश्यति ॥ १३ ॥
बद्धाल्पविट् च हरितं सकफं योऽतिसार्यते ।
दीनः श्वेतादिदिग्धाङ्गश्छर्दिमूर्छातृषान्वितः ॥ १४ ॥
स नास्त्यसृक्क्षयाद्यश्च पाण्डुः श्वेतत्वमाप्नुयात् ।
पाण्डुदन्तनखो यस्तु पाण्डुनेत्रश्च यो भवेत् ॥
पाण्डुसंघातदर्शी च पाण्डुरोगी विनश्यति ॥ १५ ॥

असाध्यत्वमाह—

अन्तेषु शूनं परिहीनमध्यं म्लानं तथाऽन्तेषु च मध्यशूनम् ।
गुदेऽथ शेफस्यथ मुष्कयोश्च शूनं प्रताम्यन्तमसंज्ञकल्पम् ॥
विवर्जयेत्पाण्डुकिनं यशोर्थी तथाऽतिसारज्वरपीडितं च ॥ १६ ॥

पाण्डुरोगे कामलामाह—

पाण्डुरोगी च योऽत्यर्थं पित्तलानि निषेवते ।
तस्य पित्तमसृङ्मांसं दग्ध्वा रोगाय कल्पते ॥ १७ ॥

कोष्ठशाखाश्रयामाह—

हारिद्रनेत्रः सुभृशं हारिद्रत्वङ्नखाननः ।
रक्तपीतशकृन्मूत्रो भेकाभो दुर्बलेन्द्रियः ॥ १८ ॥
दाहाविपाकदौर्बल्यसदनारुचिकर्षितः ।
कामला बहुपित्तैषा कोष्ठशाखाश्रया मता ॥ १९ ॥

अथ कुम्भकामला—

कालान्तरात्खरीभूता कृच्छ्रा स्यात्कुम्भकामला ।
कृष्णपीतशकृन्नेत्रो भृशं शूनश्च मानवः ॥ २० ॥
सरक्ताक्षिमुखच्छर्दिविण्मूत्रो यश्च ताम्यति ।
दाहारुचितृडानाहतन्द्रामोहसमन्वितः ॥ २१ ॥

नष्टाग्निसंज्ञः क्षिप्रं हि कामलावान्विपद्यते ।
छर्द्यरोचकहृल्लासज्वरक्लमनिपीडितः ॥ २२ ॥
नश्यति श्वासकासार्तो विड्भेदी कुम्भकामली ।

अथ हलीमकम्—

यदा तु पाण्डुवर्णः स्याद्धरितश्यावपीतकः ॥ २३ ॥
बलोत्साहक्षयस्तन्द्रामन्दाग्नित्वं मृदुज्वरः ।
स्त्रीष्वहर्षोऽङ्गमर्दश्च सावस्तृष्णाऽरुचिर्भ्रमः ॥ २४ ॥
हलीमकं तदा तस्य विद्यादनिलपित्ततः ।
पाण्डुरुक्कामला कुम्भकामला च हलीमकम् ॥ २५ ॥

इति पाण्डुरोगकामलाहलीमकनिदानम् ।

अथ चिकित्सा—

अथायोमोदकः—

साध्यं तु पाण्ड्वामयिनं समीक्ष्य स्निग्धं घृतेनोर्ध्वमधश्च शुद्धम् ।
संपादयेत्क्षौद्रघृतप्रगाढैर्हरीतकीचूर्णमयैः प्रयोगैः ॥ २६ ॥
पिबेद्घृतं वा रजनीविपक्वं यत्त्रैफलं तैल्वकमेव वाऽपि ।
विरेचन*द्रव्यकृतं पिबेद्वा योगांश्च वैरेचनिकान्घृतेन ॥ २७ ॥
विधिः स्निग्धोऽत्र वातोत्थे तिक्तशीतश्च पैत्तिके ।
श्लैष्मिके कटुरूक्षोष्णः कार्यो मिश्रस्तु मिश्रजे ॥ २८ ॥
द्विपञ्चमूलीक्कथितं सविश्वं कफात्मके पाण्डुगदे पिबेत्तम् ।
ज्वरेऽतिसारे श्वयथौ ग्रहण्यां कासेऽरुचौ कण्ठहृदामयेषु ॥ २९ ॥
अयस्तिलत्र्यूषणकोलभागैः सर्वैः समं माक्षिकधातुचूर्णम् ।
तैर्मोदकः क्षौद्रयुतोऽनुतक्रः पाण्ड्वामये दूरगतेऽपि शस्तः ॥३०॥

इत्ययोमोदकः ।

अथ मण्डूरवटकाः—

सप्तरात्रं गवां मूत्रे भावितं वाऽयसो रजः ।
पाण्डुरोगप्रशान्त्यर्थं पयसा प्रपिबेन्नरः ॥ ३१ ॥

---

* अत्रेयं टिप्पणी क. पुस्तके—इन्दुलोचननेत्राणि शिखिभागं हि योजयेत् । त्रुटिमन्थकमुद्गारं पातपुष्या विचूर्णिता ॥ १ ॥ माषद्वयं गवां दुग्धैः सेवयेद्दिनपञ्चकम् । रेचयेन्मृतिका शुद्धा शिशूनां हितमौषधम् ॥ २ ॥ पिष्ट्वा गन्धर्वबीजानि भाखुविट् निम्बवारिणा । नाभौ गुदे वा लेपेन शिशूनां रेचनं परम् ॥ ३ ॥

गोमूत्रसिद्धमण्डूरचूर्णं सगुडमश्नतः ।
पाण्डुरोगः क्षयं याति पक्तिशूलं च दारुणम् ॥ ३२ ॥
अयोमलं सुसंतप्तं भूयो गोमूत्रसाधितम् ।
साधुसर्पिर्युतं लीढ्वा पाण्डुरोगी सुखी भवेत् ॥ ३३ ॥
सग्रन्थिकाब्दचविकासुरदारुदार्वी-
माक्षीकधातुभिरिदं सविडङ्गभागैः ।
चूर्णं कटुत्रयफलत्रयचित्रकैश्च
मण्डूरकं द्विगुणमष्टगुणं च मूत्रम् ॥ ३४ ॥
पक्त्वा च लेहवदनेन कृताः प्रयुक्ता
मण्डूरकाख्यवटकास्त्वनुपानतक्राः ।
पाण्ड्वामयं श्वयथुयुक्तमपि प्रमेहं
बाधिर्यमूरुजडतां च जयन्ति जन्तोः ॥ ३५ ॥

इति मण्डूरवटकाः ।

अथ मण्डूरलवणम्—

कृत्वाऽग्निवर्णं मलमायसं तु
मूत्रे निषिञ्चेद्बहुशो गवां च ।
तत्रैव सिन्धूत्थसमं विपाच्यं
निरुद्धधूमं च बिभीतकाग्नौ ॥ ३६ ॥
तक्रेण पीतं मधुनाऽथ वाऽपि
बिभीतकाख्यं लवणं प्रयुक्तम् ।
पाण्ड्वामयिभ्यो हितमेतदस्मा-
त्पाण्ड्वामयघ्नं न हि किंचिदन्यत् ॥ ३७ ॥

इति मण्डूरलवणम् ।

अथ नवायसं चूर्णम्—

त्र्यूषणानि सफलत्रिकचित्रकाणि
साम्भोधराणि सविडङ्गफलानि च स्युः ।
कर्षाणि लोहरजसश्च नवेति चूर्ण-
मेतन्नवायसमिदं मधुनाऽवलीढम् ॥ ३८ ॥
न स्युः प्रमेहपिटका न च पाण्डुरोगाः
स्थौल्यं तनोः स्थविरता न च शीघ्रमेति ।

नो कुष्ठरुग्जठरजा जठरस्य नैव
नाग्नेरपाटवमनेन नवायसेन ॥ ३९ ॥

इति नवायसं चूर्णम् ।

रेचनं कामलार्तस्य स्निग्धस्याऽऽदौ प्रयोजयेत् ।
ततः प्रशमनी कार्या क्रिया वैद्येन जानता ॥ ४० ॥
फलत्रिकामृतावासातिक्ताभूनिम्बनिम्बजः ।
क्वाथः क्षौद्रयुतो हन्यात्पाण्डुरोगं सकामलम् ॥ ४१ ॥
हरिद्रात्रिफलानिम्बबलामधुकसाधितम् ।
सक्षीरं माहिषं सर्पिः कामलापहमुत्तमम् ॥ ४२ ॥
धात्रीलोहरजोव्योषनिशाक्षौद्राज्यशर्करा-
लेहो निवारयत्याशु कामलामुद्धतामपि ॥ ४३ ॥
अञ्जनं कामलार्तानां द्रोणपुष्पीरसैः शुभैः ।
हिङ्गुना द्रोणपुष्प्या वा रसेनाञ्जितलोचनः ॥ ४४ ॥
अचिरात्कामलां हन्ति पाण्डुरोगं हलीमकम् ।
त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसः ॥ ४५ ॥
प्रातर्माक्षिकसंयुक्तः शीलितः कामलापहः ।
गुडूचीपत्रकल्कं वा पिबेत्तक्रेण कामली ॥ ४६ ॥
कुम्भाख्यकामलायां तु हितः कामलिको विधिः ।
गोमूत्रेण पिबेत्कुम्भकामलायां शिलाजतु ॥ ४७ ॥
दग्ध्वाऽक्षकाष्ठैर्मलमायसं तु गोमूत्रनिर्वापितमष्ट वारान् ।
विचूर्ण्य लीढं मधुनाऽचिरेण कुम्भाह्वयं पाण्डुगदं निहन्ति ॥४८॥

अथ हलीमकविधिः—

पाण्डुरोगक्रियां सद्यो योजयेच्च हलीमके ।
कामलायां तु या दृष्टा साऽपि कार्या भिषग्वरैः ॥ ४९ ॥
मारितस्यायसश्चूर्णं मुस्ताचूर्णेन संयुतम् ।
खदिरस्य कषायेण पिबेद्धन्ति हलीमकम् ॥ ५० ॥
सितातिक्ताबलायष्टीत्रिफलारजनीयुगैः ।
लोहं लिह्यात्समध्वाज्यं हलीमकनिवृत्तये ॥ ५१ ॥

---

१ ग. °रता ज° ।

अथ त्रिफलायो लोहः—

त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य च ।
भागाश्चित्रकमूलाच्च विडङ्गानां तथैव च ॥ ५२ ॥
पञ्चाश्मजतुनो भागास्तथा रूप्यमलस्य च ।
माक्षिकस्य च शुद्धस्य लोहस्य रजसस्तथा ॥ ५३ ॥
अष्टौ भागाः सितायास्तु तत्सर्वं मधुसंयुतम् ।
श्लक्ष्णचूर्णं सुसंस्थाप्यमायसे भाजने शुभे ॥ ५४ ॥
उदुम्बरसमां मात्रां ततः खादेद्यथाग्नि ना ।
दिने दिने प्रयोक्तव्यं जीर्णे भोज्यं यथेप्सितम् ॥ ५५ ॥
वर्जयित्वा कुलित्थांश्च काकमाचीकपोतकान् ।
पाण्डुरोगं विषं कासं यक्ष्माणं विषमज्वरम् ॥ ५६ ॥
कुष्ठान्यजरकं मेहं श्वासं शोफमरोचकम् ।
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च ॥ ५७ ॥

इति त्रिफलाद्यो लोहः ।

अथ त्रैलोक्यनाथो रसरत्नप्रदीपात्—

पलानि चत्वारि रसस्य पञ्च
गन्धस्य सत्त्वस्य गुडूचिकायाः ।
व्योषस्य चूर्णस्य च तालमूल्याः
सशाल्मलस्येह पलत्रयं स्यात् ॥ ५८ ॥
पृथक् पृथक् षड्गगनस्य चाष्टौ लोहस्य सर्वं त्रिफलाजलेन ।
घृष्टं चतुःषष्टिमितं तदर्धाः स्युर्भावना मार्कवजद्रवस्य ॥ ५९ ॥
शिग्रूत्थनीरेण च षोडशाष्टौ तथा नलोत्था गृहकन्यकायाः ।
आर्द्रद्रवस्येति रसोऽयमुक्तः पाण्डुक्षयश्वासगदादिहर्ता ।
क्षौद्रेण वा शर्करया घृतेन कर्षार्धमेतस्य भजेत्प्रयत्नात् ॥ ६० ॥

इति त्रैलोक्यनाथो रसरत्नप्रदीपात् ।

अथामृताद्यं घृतम्—

अमृतारसकल्कं प्रसाधितं तुरगद्विपः सर्पिः ।
क्षीरचतुर्गुणमेतद्धितरेच्च हलीमकार्तेभ्यः ॥ ६१ ॥

---

१ ग. °गणरवचाष्टौ ।

यवगोधूमशालीनां मृदुजाङ्गलजै रसैः ।
मुद्गाढकीमसूराद्यैः पाण्डौ भोजनमिष्यते ॥ ६२ ॥

इति श्रीयोगतरङ्गिण्यां पाण्डुकामलाकुम्भकामलाहलीमकनिदानचिकित्सानाम
चतुःसप्ततितमस्तरङ्गः ॥ ७४ ॥

---

अथ पञ्चसप्ततितमस्तरङ्गः ।

---

## अथ रक्तपित्तनिदानम्—

क्षारकट्वम्लतीक्ष्णादिदग्धं पित्तं दहत्यसृक् ।
तदूर्ध्वाधोनिलैर्याति रक्तपित्तं तदुच्यते ॥ १ ॥

रुग्विनिश्चयात् ।

घर्मव्यायामशोकाध्वव्यवायैरतिसेवितैः ।
तीक्ष्णोष्णक्षारलवणैरम्लैः कटुनिषेवणैः ॥ २ ॥
कोद्रवोद्दालकैश्चान्यैस्तद्युक्तैरतिसेवितैः ।
पित्तं विदग्धं स्वगुणैर्विदहत्याशु शोणितम् ॥ ३ ॥
ततः प्रवर्तते रक्तमूर्ध्वं चाधो द्विधाऽपि वा ।
ऊर्ध्वं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः ॥ ४ ॥
कुपितं रोमकूपैश्च समस्तैर्वा प्रवर्तते ।
रक्तहारिद्रहरितवर्णता नयनादिषु ॥ ५ ॥
सदनं शीतकामित्वं कण्ठधूमायनं वमिः ।
लोहगन्धिश्च निःश्वासो भवत्यस्मिन्भविष्यति ॥ ६ ॥
सान्द्रं सपाण्डु सस्नेहं पिच्छिलं च कफात्मकम् ।
श्यावारुणं सफेनं च तनु रूक्षं च वातिकम् ॥ ७ ॥
रक्तपित्तं कषायाभं कृष्णं गोमूत्रसंनिभम् ।
मेचकागारधूमाभमञ्जनाभं च पैत्तिकम् ॥ ८ ॥
संसृष्टलिङ्गं संसर्गे त्रिलिङ्गं सांनिपातिकम् ।
ऊर्ध्वगं कफसंसृष्टमधोगं मारुतानुगम् ॥ ९ ॥
द्विमार्गं कफवाताभ्यामुभाभ्यामनुवर्तते ।

### अथ साध्यासाध्यत्वमाह—

ऊर्ध्वं साध्यमधो याप्यमसाध्यं युगपद्भवम् ॥ १० ॥

अथ त्रिफलाद्यो लोहः—

त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य च ।
भागाश्चित्रकमूलाच्च विडङ्गानां तथैव च ॥ ५२ ॥
पञ्चाश्मजतुनो भागास्तथा रूप्यमलस्य च ।
माक्षिकस्य च शुद्धस्य लोहस्य रजसस्तथा ॥ ५३ ॥
अष्टौ भागाः सितायास्तु तत्सर्वं मधुसंयुतम् ।
श्लक्ष्णचूर्णं सुसंस्थाप्यमायसे भाजने शुभे ॥ ५४ ॥
उदुम्बरसमां मात्रां ततः खादेद्यथाग्नि ना ।
दिने दिने प्रयोक्तव्यं जीर्णे भोज्यं यथेप्सितम् ॥ ५५ ॥
वर्जयित्वा कुलित्थांश्च काकमाचीकपोतकान् ।
पाण्डुरोगं विषं कासं यक्ष्माणं विषमज्वरम् ॥ ५६ ॥
कुष्ठान्यजरकं मेहं श्वासं शोफमरोचकम् ।
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च ॥ ५७ ॥

इति त्रिफलाद्यो लोहः ।

अथ त्रैलोक्यनाथो रसरत्नप्रदीपात्—

पलानि चत्वारि रसस्य पञ्च
गन्धस्य सत्त्वस्य गुडूचिकायाः ।
व्योषस्य चूर्णस्य च तालमूल्याः
सशाल्मलस्येह पलत्रयं स्यात् ॥ ५८ ॥
पृथक् पृथक् पङ्गगनस्य चाष्टौ लोहस्य सर्वं त्रिफलाजलेन ।
घृष्टं चतुःषष्टिमितं तदर्धाः स्युर्भावना मार्कवजद्रवस्य ॥ ५९ ॥
शिग्रूत्थनीरेण च षोडशाष्टौ तथा नलोत्था गृहकन्यकायाः ।
आर्द्रद्रवस्येति रसोऽयमुक्तः पाण्डुक्षयश्वासगदादिहर्ता ।
क्षौद्रेण वा शर्करया घृतेन कर्षार्धमेतस्य भजेत्प्रयत्नात् ॥ ६० ॥

इति त्रैलोक्यनाथो रसरत्नप्रदीपात् ।

अथामृताद्यं घृतम्—

अमृतारसकल्कं प्रसाधितं तुरगद्विपः सर्पिः ।
क्षीरचतुर्गुणमेतद्धितरेच्च हलीमकार्तेभ्यः ॥ ६१ ॥

---

१ ग. °गगनस्य चाष्टौ ।

यवगोधूमशालीनां मृदुजाङ्गलजै रसैः ।
मुद्गाढकीमसूराद्यैः पाण्डौ भोजनमिष्यते ॥ ६२ ॥

इति श्रीयोगतरङ्गिण्यां पाण्डुकामलाकुम्भकामलाहलीमकनिदानचिकित्सानाम
चतुःसप्ततितमस्तरङ्गः ॥ ७४ ॥

---

अथ पञ्चसप्ततितमस्तरङ्गः ।

---

## अथ रक्तपित्तनिदानम्—

क्षारकट्वम्लतीक्ष्णादिदग्धं पित्तं दहत्यसृक् ।
तदूर्ध्वाधोनिलैर्याति रक्तपित्तं तदुच्यते ॥ १ ॥

रुग्विनिश्चयात् ।

घर्मव्यायामशोकाध्वव्यवायैरतिसेवितैः ।
तीक्ष्णोष्णक्षारलवणैरम्लैः कटुनिषेवणैः ॥ २ ॥
कोद्रवोद्दालकैश्चान्यैस्तद्युक्तैरतिसेवितैः ।
पित्तं विदग्धं स्वगुणैर्विदहत्याशु शोणितम् ॥ ३ ॥
ततः प्रवर्तते रक्तमूर्ध्वं चाधो द्विधाऽपि वा ।
ऊर्ध्वं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः ॥ ४ ॥
कुपितं रोमकूपैश्च समस्तैर्वा प्रवर्तते ।
रक्तहारिद्रहरितवर्णता नयनादिषु ॥ ५ ॥
सदनं शीतकामित्वं कण्ठधूमायनं वमिः ।
लोहगन्धिश्च निःश्वासो भवत्यस्मिन्भविष्यति ॥ ६ ॥
सान्द्रं सपाण्डु सस्नेहं पिच्छिलं च कफात्मकम् ।
श्यावारुणं सफेनं च तनु रूक्षं च वातिकम् ॥ ७ ॥
रक्तपित्तं कषायाभं कृष्णं गोमूत्रसंनिभम् ।
मेचकागारधूमाभमञ्जनाभं च पैत्तिकम् ॥ ८ ॥
संसृष्टलिङ्गं संसर्गे त्रिलिङ्गं सांनिपातिकम् ।
ऊर्ध्वगं कफसंसृष्टमधोगं मारुतानुगम् ॥ ९ ॥
द्विमार्गं कफवाताभ्यामुभाभ्यामनुवर्तते ।

### अथ साध्यासाध्यत्वमाह—

ऊर्ध्वं साध्यमधो याप्यमसाध्यं युगपद्भवम् ॥ १० ॥

एकमार्गं बलवतो नातिवेगं नवोत्थितम् ।
रक्तपित्तं सुखे काले साध्यं स्यान्निरुपद्रवम् ॥ ११ ॥
एकदोषानुगं साध्यं द्विदोषं याप्यमुच्यते ।
त्रिदोषजमसाध्यं तन्मन्दाग्नेरतिवेगतः ॥
व्याधिभिः क्षीणदेहस्य वृद्धस्यानश्नतश्च यत् ॥ १२ ॥
दौर्बल्यं श्वासकासज्वरवमथुमदाः पाण्डुतादाहमूर्छा
भुक्ते घोरो विदाहस्त्वधृतिरपि सदा हृद्यतुल्या च पीडा ।
तृष्णा कोष्ठस्य भेदः शिरसि च तपनं पूतिनिष्ठीवनत्वं
भक्तद्वेषोऽविपाको विकृतिरपि भवेद्रक्तपित्तोपसर्गाः ॥ १३ ॥
मांसप्रक्षालनाभं कथितमिव च यत्कर्दमाम्भोनिभं वा
मेदःपूयास्रकल्पं यकृदिव यदि वा पक्वजम्बूफलाभम् ।
यत्कृष्णं यच्च नीलं भृशमतिकुणपं यत्र चोक्ता विकारा-
स्तद्वर्ज्यं रक्तपित्तं सुरपतिधनुषा यच्च तुल्यं विभाति ॥ १४ ॥
येन चोपहतो रक्तं रक्तपित्तेन मानवः ।
पश्येद्दृशं वियच्चापि तस्यासाध्यमसंशयम् ॥ १५ ॥
लोहितं छर्दयेद्यस्तु बहुशो लोहितेक्षणः ।
लोहितोद्गारदर्शी च म्रियते रक्तपैत्तिकः ॥ १६ ॥

इति रक्तपित्तनिदानम् ।

अथ रक्तपित्तचिकित्सा—

पित्तास्रं स्तम्भयन्नादौ प्रवृत्तं बलिनोऽश्नतः ।
हृत्पाण्डुग्रहणीरोगप्लीहगुल्मोदरादिकृत् ॥ १७ ॥
क्षीणमांसबलं बालं वृद्धं शोषानुबन्धिनम् ।
अवाम्यमविरेच्यं च शमनैरुपाचरेत् ॥ १८ ॥
ऊर्ध्वं प्रवृत्तदोषस्य सद्यं लोहितपित्तिनः ।
अक्षीणबलमांसाग्नेः कर्तव्यमपतर्पणम् ॥ १९ ॥
ऊर्ध्वगे रेचनं पूर्वमधोगे वमनं हितम् ।

अथ रेचनमाह—

आरग्वधेन धात्र्या वा त्रिवृता पथ्ययाऽथ वा ॥ २० ॥

१ क. °ह्यत्सर्वं र° । २ ग. °गुल्मज्वरा° ।

विरेचनं प्रयोक्तव्यं सर्पिषा माक्षिकोत्तरम् ।
मुस्तेन्द्रयवयष्ट्याह्वमदनाश्च पयो मधु ॥ २१ ॥
शिशिरे वमनं योज्यं रक्तपित्तहरं परम् ।

तस्योपचारः—

शालिपर्ण्यादिना सिद्धा पेया पूर्वमधोगमे ॥ २२ ॥
रक्तातिसारहन्ता च योज्यो विधिरशेषतः ।

तस्यान्नमाह—

शालिषष्टिकनीवारकोरदूषप्रशान्तिकाः ॥ २३ ॥
श्यामाकाश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम् ।

यूषार्थेऽन्नमाह—

मसूरमुद्गचणकाः समकुष्ठाढकीफलाः ॥ २४ ॥
प्रशस्ताः सूपयूपार्थे कल्पिता रक्तपित्तिनाम् ।

अम्लदानमाह—

दाडिमामलकं विद्वानम्लार्थं चापि दापयेत् ॥ २५ ॥

दानार्थं फलान्याह—

पटोलनिम्बवेत्राग्रप्लक्षवेतसपल्लवाः ।

शाकम्—

शाकार्थं शाककाम्यानां तण्डुलीयादयो हिताः ॥ २६ ॥

मांसरसदानार्थं तानाह—

पारावतकपोतांश्च लावान्रक्ताक्षवर्तकान् ।
शशान्कपिञ्जलानेणान्हरिणान्कालपुच्छकान् ॥ २७ ॥
रक्तपित्तहरान्विद्याद्रसं तेषां प्रयोजयेत् ।
ईषदम्लाननम्लांश्च घृतभृष्टान्ससैन्धवान् ॥ २८ ॥
कफानुगे यूपशाकं दद्याद्वातानुगे रसम् ।
पथ्यं सतीनयूषेण ससितैर्लाजसक्तुभिः ॥ २९ ॥
पक्वोदुम्बरकाश्मर्यपथ्याखर्जूरगोस्तनी ।
मधुना हन्ति संलीढा रक्तपित्तं न संशयः ॥ ३० ॥

---

१ क. °व्यं शर्करया° । २ ग. मधुना द° ।

अथ चन्दनाद्यं चूर्णम्—

चन्दनं नलदं लोध्रमुशीरं पद्मकेसरम् ।
नागपुष्पं च बिल्वं च भद्रमुस्तं सशर्करम् ॥ ३१ ॥
ह्रीबेरं चैव पाठा च कुटजोत्पलमेव च ।
शृङ्गवेरं सातिविषा धातकी रससाञ्जना ॥ ३२ ॥
आम्रास्थि जम्बूसारास्थि तथा मोचरसोऽपि च ।
नीलोत्पलं समङ्गा च सूक्ष्मैला दाडिमत्वचः ॥ ३३ ॥
चतुर्विंशतिरेतानि समभागानि कारयेत् ।
तण्डुलोदकसंयुक्तं मधुना सह योजयेत् ॥ ३४ ॥
योगं लोहितपित्तानामर्शसां ज्वरिणां तथा ।
मूर्छामदोपसृष्टानां तृष्णार्तानां प्रदापयेत् ॥ ३५ ॥
अतीसारं तथा छर्दिं स्त्रीणां चापि रजोग्रहे ।
प्रच्युतानां च गर्भाणां स्थापनं परमिष्यते ।
अश्विनोः संमतो योगो रक्तपित्तनिबर्हणः ॥ ३६ ॥

इति चन्दनाद्यं चूर्णम् ।

अथ राजमार्तण्डात्—

मध्वाटरूपकरसौ यदि तुल्यभागौ
कृत्वा नरः पिबति पुण्यतरः प्रभाते ।
तद्रक्तपित्तमतिदारुणमप्यवश्य-
माशु प्रशाम्यति जलैरिव वह्निपुञ्जः ॥ ३७ ॥

इति राजमार्तण्डात् ।

अथैलादिगुटिका—

आटरूपकनिर्यूहे प्रियङ्गुं मृत्तिकाञ्जनैः ।
विनीय लोध्रं सक्षौद्रं रक्तपित्तहरं पिबेत् ॥ ३८ ॥
वासाकषायोत्पलमृत्प्रियङ्गुं लोध्राञ्जनाम्भोरुहकेसराणि ।
पीत्वा सिताक्षौद्रयुतानि जह्यात्पित्तासृजो वेगमुदीर्णमाशु ॥३९॥
वासायां विद्यमानायामाशायां जीवितस्य च ।
रक्तपित्ती क्षयी कासी किमर्थमवसीदति ॥ ४० ॥
पक्वोदुम्बरकाश्मर्यपथ्याखर्जूरगोस्तनी ।
मधुना हन्ति संलीढा रक्तपित्तं न संशयः ॥ ४१ ॥

---

१ क. घां मरि° । २ ग. °तिका जले.। ति° ।

खदिरस्य प्रियङ्गूणां कोविदारस्य शाल्मलेः ।
पुष्पचूर्णानि मधुना लिहन्नारोग्यमश्नुते ॥ ४२ ॥
वासकस्वरसैः पथ्या सप्तधा परिभाविता ।
कृष्णा वा मधुना लीढा रक्तपित्तं द्रुतं जयेत् ॥ ४३ ॥
द्रवेण यावता द्रव्यमेकीभूयाऽऽर्द्रतां व्रजेत् ।
तावत्प्रमाणं निर्दिष्टं भिषग्भिर्भावनाविधौ ॥ ४४ ॥
अभया मधुसंयुक्ता पाचनी दीपनी मता ।
श्लेष्माणं रक्तपित्तं च हन्ति शूलातिसारजित् ॥ ४५ ॥
लोहगन्धिनि निःश्वास उद्गारे रक्तगन्धिनि ।
मृद्वीकापणमात्रां तु खादेद्द्विगुणशर्कराम् ॥ ४६ ॥
एलापत्रत्वचो* द्राक्षाः पिप्पल्यर्धपलं तथा ।
सितामधुकखर्जूरमृद्वीकाश्च पलोन्मिताः ॥ ४७ ॥
संचूर्ण्य मधुना युक्ता गुटिकाः संप्रकल्पयेत् ।
अक्षमात्रां ततश्चैकां भक्षयेत्तां दिने तथा ॥ ४८ ॥
कासश्वासं ज्वरं हिक्कां छर्दिं मूर्छां मदभ्रमम् ।
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ॥ ४९ ॥
शोषं प्लीहाढ्यवातं च स्वरभेदं क्षतक्षयम् ।
गुटिका तर्पणी वृष्या रक्तपित्तं विनाशयेत् ॥ ५० ॥

इत्येलादिगुटिका ।

अथ प्रियङ्ग्वादिचूर्णम्—

नासाप्रवृत्तरुधिरं घृतभृष्टं श्लक्ष्णपिष्टमामलकम् ।
सेतुरिव तोयवेगं रुणद्धि मूर्ध्नि प्रलेपेन ॥ ५१ ॥
घ्राणप्रवृत्ते जलमाशु देयं सशर्करं नासिकया पयो वा ।
द्राक्षारसं क्षीरघृतं पिबेद्वा सशर्करं चेक्षुरसं हितं वा ॥ ५२ ॥
नस्यं दाडिमपुष्पोत्थं रसो दूर्वाभवोऽथ वा ।
आम्रास्थितः पलाण्डोर्वा नासिकास्रुतरक्तजित् ॥ ५३ ॥
वृषस्य स्वरसं कृत्वा द्रव्यैरेभिः प्रयोजयेत् ।
प्रियङ्गुमृत्तिकालोध्रमञ्जनं चेति चूर्णयेत् ॥ ५४ ॥

---

* क. पुस्तके °चोऽक्षा इति पाठान्तरम् ।

---

— °निभश्च° ।

तच्चूर्णं योजयेत्तत्र रसे क्षौद्रसमन्वितम् ।
नासिकामुखपायुभ्यो योनिमेढ्राच्च वेगितम् ॥ ५५ ॥
रक्तपित्तस्रवं हन्ति सिद्ध एष प्रयोगराट् ।
यत्र शस्त्रक्षते चैव रक्तं स्रवति वेगतः ॥
तदप्यनेन चूर्णेन तिष्ठत्येवावचूर्णितम् ॥ ५६ ॥

इति प्रियङ्ग्वादिचूर्णम् ।

## अथ दूर्वाद्यं घृतम्—

मेढ्रतोऽतिप्रवृत्तेस्तु वस्तिरुत्तर इष्यते ।
दूर्वासोत्पलकिञ्जल्कमञ्जिष्ठा सैलवालुकम् ॥ ५७ ॥
मूर्वा लोध्रमुशीरं च मुस्तं चन्दनपद्मकम् ।
द्राक्षा मधुकपथ्या च काश्मरी चन्दनं सितम् ॥ ५८ ॥
एतैः पिष्टं कर्षमात्रैर्घृतप्रस्थं विपाचयेत् ।
अजाक्षीरं तण्डुलाम्बु पृथग्दत्त्वा चतुर्गुणम् ॥ ५९ ॥
तत्पानं वमतो रक्तं नावनं नासिकागते ।
कर्णाभ्यां यस्य गच्छेत्तु तस्य कर्णौ प्रपूरयेत् ॥ ६० ॥
चक्षुःस्राविणि रक्ते च पूरयेत्तेन चक्षुषी ।
मेढ्रपायुप्रवृत्ते च तत्तत्कर्मसु तद्धितम् ॥
रोमकूपप्रवृत्ते च तदभ्यङ्गे प्रयोजयेत् ॥ ६१ ॥

इति दूर्वाद्यं घृतम् ।

## अथ वासाद्यं घृतम्—

वासां सशाखां सदलां समूलां
कृत्वा कषायं कुसुमानि चास्याः ।
प्रदाय कल्कं विपचेद्घृतं च
सक्षौद्रमाश्वेव निहन्ति रक्तम् ॥ ६२ ॥

इति वासाद्यं घृतम् ।

शणस्य कोविदारस्य वृषस्य ककुभस्य च ।
कल्काढ्यत्वात्प्रशंसन्ति पुष्पकल्कं चतुष्पलम् ॥ ६३ ॥

---

१ ग. °न्दनद्वयम् । २ ग. °म् । विपचेत्कार्षिकैरेतैः सर्पिराज्ञं सुखाग्निना । अ° ।

## अथ शतावरीघृतम्--

शतावरीदाडिमतिन्तिडीकं काकोलिमेदामधुकं विदारीम् ।
पिष्ट्वा च मूलं फलपूरकस्य पचेद्घृतं क्षीरचतुर्गुणं तत् ॥ ६४ ॥
कासज्वरोन्मादविबन्धशूलं तद्रक्तपित्तं विविधं निहन्ति ॥ ६५ ॥

इति लघुशतावरीघृतम् ।

## अथ बृहच्छतावरीघृतम्--

शतावर्यास्तु मूलानां रसं प्रस्थद्वयं मतम् ।
तत्समं च भवेत्क्षीरं घृतप्रस्थं विपाचयेत् ॥ ६६ ॥
जीवकर्षभकौ मेदा महामेदा तथैव च ।
काकोली क्षीरकाकोली मृद्वीका मधुकं तथा ॥ ६७ ॥
मुद्गपर्णी माषपर्णी विदारी रक्तचन्दनम् ।
शर्करामधुसंयुक्त सिद्धं विस्रावयेद्भिषक् ॥ ६८ ॥
रक्तपित्तविकारेषु वातरक्तगदेषु च ।
क्षीणे शुक्रे तु दातव्यं वाजीकरणमुत्तमम् ॥ ६९ ॥
अन्तर्दाहं शिरोदाहं ज्वरं पित्तसमुद्भवम् ।
योनिशूलं सदाहं च मूत्रकृच्छ्रं च पैत्तिकम् ॥ ७० ॥
एतान्रोगान्निहन्त्याशु छिन्नाभ्रमिव मारुतः ।
शतावरीसर्पिरिदं बलवर्णाग्निवर्धनम् ॥ ७१ ॥

इति बृहच्छतावरीघृतम् ।

## अथ कुष्माण्डावलेहः--

शतावरीघृते चास्मिञ्शर्करामधुपादिकम् ।
मध्वेव पादिकं देयं वासासर्पिषि संमतम् ॥ ७२ ॥
कूष्माण्डकात्पलशतं सुस्विन्नं निष्कुलीकृतम् ।
पचेत्तस्मिन् घृते प्रस्थे पात्रे ताम्रमये दृढे ॥ ७३ ॥
यदा मधुनिभः पाकस्तदा खण्डशतं न्यसेत् ।
पिप्पलीशृङ्गवेराभ्यां द्वे पले जीरकस्य च ॥ ७४ ॥
त्वगेलापत्रमरिचधान्यकानां पलार्धकान् ।
न्यसेच्चूर्णीकृतं तत्र दर्व्या संघट्टयेत्ततः ॥ ७५ ॥

---

१ क. 'र्तामितं ।

लेहीभूते सुशीते च दद्यात्क्षौद्रं घृतार्धकम् ।
तद्यथाऽग्निबलं खादेद्रक्तपित्ते क्षतक्षये ॥ ७६ ॥
कासश्वासतमश्छर्दितृष्णाज्वरनिपीडितः ।
वृष्यं पुनर्नवकरं वलवर्णप्रसादनम् ॥ ७७ ॥
उरःसंधानकरणं बृंहणं स्वरबोधनम् ।
अश्विभ्यां निर्मितं श्रेष्ठं कूष्माण्डकरसायनम् ॥ ७८ ॥

इति कूष्माण्डकावलेहः ।

अथ खण्डकूष्माण्डः—

खण्डकामलकाद्यो रसः मस्यद्वयोन्मितः ।
खण्डकूष्माण्डके रसः स्विन्नकूष्माण्डकद्रवात् ॥ ७९ ॥
अन्यत्र खण्डकूष्माण्डे संमतः सकलो रसः ।
पञ्चाशच्च पलं स्विन्नं कूष्माण्डात्प्रस्थमाज्यतः ॥ ८० ॥
पक्वं पलशतं खण्डं वासाक्वाथाढके पचेत् ।
शिवा धात्री धनं भार्गी त्रिसुगन्धैश्च कार्षिकैः ॥ ८१ ॥
तालीसविश्वधान्याकमरिचैश्च पलांशकैः ।
पिप्पलीकुडवं चैव मधुमानीं प्रवापयेत् ॥ ८२ ॥
कासं श्वासं ज्वरं हिक्कां रक्तपित्तं हलीमकम् ।
हृद्रोगमम्लपित्तं च पीनसं च व्यपोहति ॥ ८३ ॥

इति खण्डकूष्माण्डः ।

अथ वासाखण्डः—

शुक्तसार्पिपि कूष्माण्डे पाको मन्येन युक्तया ।
तुल्यमादाय वासायाः पचेदष्टगुणे जले ॥ ८४ ॥
तेन पादावशेषेण पाचयेदाढकं भिषक् ।
चूर्णानामभयानां तु खण्डाच्छतपलं तथा ॥ ८५ ॥
द्वे पले पिप्पलीचूर्णात्सिद्धे सीते च माक्षिकात् ।
कुडवं पलमानं च चातुर्जातं सुचूर्णितम् ॥ ८६ ॥
क्षिप्त्वाऽवलोड्य तं खादेद्रक्तपित्ती क्षतक्षयी ।
कासश्वासगृहीतश्च यक्ष्मणा च निपीडितः ॥ ८७ ॥

इति वासाखण्डः ।

१ ग. °लकियापाद्रसः । २ ग. °योक्तितः । ३ ग. °क्षाच्छुद्धासया शतम् ।

अथ खण्डखाद्यो लेहः—

शतावरी छिन्नरुहा सिंहास्यो मुण्डिका बला ।
तालमूली च गायत्री त्रिफलायास्त्वचस्तथा ॥ ८८ ॥
भार्गी पुष्करमूलं च पृथक्पञ्च पलानि च ।
जलद्रोणे विपक्तव्यमष्टभागावशेषितम् ॥ ८९ ॥
वस्त्रपूतं च तं क्वाथं गृहीत्वा तत्र निक्षिपेत् ।
दिव्यौषधिहतस्यापि माक्षिकेण हतस्य वा ॥९०॥
पलद्वादशकं देयं रुक्मलोहस्य चूर्णितम् ।
खण्डतुल्यं घृतं देयं पलषोडशकं बुधैः ॥ ९१ ॥
पचेत्ताम्रमये पात्रे गुडपाको मतो यथा ।
प्रस्थार्धं मधुनो देयं शुभाश्मजतुकं त्वचम् ॥ ९२ ॥
शृङ्गी विडङ्गं कृष्णा च शुण्ठ्यजाजी पलं पलम् ।
त्रिफला धान्यकं पत्रं द्व्यक्षं मरिचकेसरम् ॥ ९३ ॥
चूर्णं दत्त्वा सुमथितं स्निग्धे भाण्डे निधापयेत् ।
यथाकालं प्रयुञ्जीत विडालपदकं ततः ॥ ९४ ॥
गव्यक्षीरानुपानं च सेव्यं मांसरसं पयः ।
गुरुवृष्यान्नपानानि स्निग्धं मांसादिबृंहणम् ॥ ९५ ॥
रक्तपित्तं क्षयं कासं पक्तिशूलं विशेषतः ।
वातरक्तं प्रमेहं च शीतपित्तं वमिं क्लमम् ॥ ९६ ॥
श्वयथुं पाण्डुरोगं च कुष्ठं प्लीहोदरं तथा ।
आनाहं रक्तसंस्रावमम्लपित्तं नियच्छति ॥ ९७ ॥
चक्षुष्यं बृंहणं वृष्यं माङ्गल्यं प्रीतिवर्धनम् ।
आरोग्यपुत्रदं श्रेष्ठं कायाग्निबलवर्धनम् ॥ ९८ ॥
श्रीकरं लाघवकरं खण्डखाद्यं प्रकीर्तितम् ।
छागं पारावतं मांसं तित्तिरिक्रकरास्तथा ॥ ९९ ॥
कुलिङ्गाः कृष्णसाराश्च तेषां मांसानि योजयेत् ।
नारिकेलपयःपानं सुनिषण्णकवास्तुकम् ॥ १०० ॥
शुष्कमूलकजीवाख्यं पटोलं बृहतीफलम् ।
फलं वार्ताकपक्वाम्रं खर्जूरं स्वादु दाडिमम् ॥ १०१ ॥
ककारपूर्वकं यच्च मांसं चानूपसंभवम् ।
वर्जनीयं विशेषेण खण्डखाद्यं प्रकीर्तितम् ॥ १०२ ॥

इति खण्डखाद्यो लेहः ।

लेहीभूते सुशीते च दद्यात्क्षौद्रं घृतार्धकम् ।
तद्यथाऽग्निबलं खादेद्रक्तपित्ते क्षतक्षये ॥ ७६ ॥
कासश्वासतमश्छर्दितृष्णाज्वरनिपीडितः ।
वृष्यं पुनर्नवकरं बलवर्णप्रसादनम् ॥ ७७ ॥
उरःसंधानकरणं बृंहणं स्वरबोधनम् ।
अश्विभ्यां निर्मितं श्रेष्ठं कूष्माण्डकरसायनम् ॥ ७८ ॥

इति कूष्माण्डकावलेहः ।

अथ खण्डकूष्माण्डः—

खण्डकामलकाद्ब्राह्मो रसः प्रस्थद्वयोन्मितः ।
खण्डकूष्माण्डके कंसः स्विन्नकूष्माण्डकद्रवात् ॥ ७९ ॥
अन्यत्र खण्डकूष्माण्डे संमतः सकलो रसः ।
पञ्चाशच्च पलं स्विन्नं कूष्माण्डात्प्रस्थमाज्यतः ॥ ८० ॥
पक्वं पलशतं खण्डं वासाक्वाथाढके पचेत् ।
शिवा धात्री घनं भार्गी त्रिसुगन्धैश्च कार्षिकैः ॥ ८१ ॥
तालीसविश्वधान्याकमरिचैश्च पलांशकैः ।
पिप्पलीकुडवं चैव मधुमानीं प्रदापयेत् ॥ ८२ ॥
कासं श्वासं ज्वरं हिक्कां रक्तपित्तं हलीमकम् ।
हृद्रोगमम्लपित्तं च पीनसं च व्यपोहति ॥ ८३ ॥

इति खण्डकूष्माण्डः ।

अथ वासाखण्डः—

शुक्तसर्पिषि कूष्माण्डे पाको यन्धेन मुद्रया ।
तुल्यमादाय वासायाः पचेदष्टगुणे जले ॥ ८४ ॥
तेन पादावशेषेण पाचयेदाढकं भिषक् ।
चूर्णानामभयानां तु खण्डाच्छतपलं तथा ॥ ८५ ॥
द्वे पले पिप्पलीचूर्णात्सिद्धे शीते च माक्षिकात् ।
कुडवं पलमात्रं च चातुर्जातं सुचूर्णितम् ॥ ८६ ॥
क्षिप्त्वाऽवलोड्य तं खादेद्रक्तपित्ती क्षतक्षयी ।
कासश्वासगृहीतश्च यक्ष्मणा च निपीडितः ॥ ८७ ॥

इति वासाखण्डः ।

१ ग. °वाकि[illegible]यापाद्रसः । २ ग. °थोक्तितः । ३ ग. °वहाल्लुकालमा पातम् ।

अथ खण्डखाद्यो लेहः—

शतावरी छिन्नरुहा सिंहास्यो मुण्डिका बला ।
तालमूली च गायत्री त्रिफलायास्त्वचस्तथा ॥ ८८ ॥
भार्गी पुष्करमूलं च पृथक्पञ्च पलानि च ।
जलद्रोणे विपक्तव्यमष्टभागावशेषितम् ॥ ८९ ॥
वस्त्रपूते च तं क्काथे गृहीत्वा तत्र निक्षिपेत् ।
त्रिंशौषधिहतस्यापि माक्षिकेण हतस्य वा ॥ ९० ॥
पलद्वादशकं देयं रुक्मलोहस्य चूर्णितम् ।
खण्डतुल्यं घृतं देयं पलषोडशकं बुधैः ॥ ९१ ॥
पचेत्ताम्रमये पात्रे गुडपाको मतो यथा ।
प्रस्थार्धं मधुनो देयं शुभाश्मजतुकं त्वचम् ॥ ९२ ॥
शृङ्गी विडङ्गं कृष्णा च शुण्ठ्यजाजी पलं पलम् ।
त्रिफला धान्यकं पत्रं द्वाक्षं मरिचकेसरम् ॥ ९३ ॥
चूर्णं दत्त्वा सुमथितं स्निग्धे भाण्डे विधापयेत् ।
यथाकालं प्रयुञ्जीत विडालपदकं ततः ॥ ९४ ॥
गव्यक्षीरानुपानं च सेव्यं मांसरसं पयः ।
गुरुवृष्यान्नपानानि स्निग्धं मांसादिबृंहणम् ॥ ९५ ॥
रक्तपित्तं क्षयं कासं पक्तिशूलं विशेषतः ।
वातरक्तं प्रमेहं च शीतपित्तं वमिं क्लमम् ॥ ९६ ॥
श्वयथुं पाण्डुरोगं च कुष्ठं प्लीहोदरं तथा ।
आनाहं रक्तसंस्रावमम्लपित्तं नियच्छति ॥ ९७ ॥
चक्षुष्यं बृंहणं वृष्यं माङ्गल्यं प्रीतिवर्धनम् ।
आरोग्यपुत्रदं श्रेष्ठं कायाग्निबलवर्धनम् ॥ ९८ ॥
श्रीकरं लाघवकरं खण्डखाद्यं प्रकीर्तितम् ।
छागं पारावतं मांसं तित्तिरिक्रकरास्तथा ॥ ९९ ॥
कुलिङ्गाः कृष्णसाराश्च तेषां मांसानि योजयेत् ।
नारिकेलपयःपानं सुनिषण्णकवास्तुकम् ॥ १०० ॥
शुष्कमूलकजीवाख्यं पटोलं बृहतीफलम् ।
फलं वार्ताकपक्वाम्रं खर्जूरं स्वादु दाडिमम् ॥ १०१ ॥
ककारपूर्वकं यच्च मांसं चानूपसंभवम् ।
वर्जनीयं विशेषेण खण्डखाद्यं प्रकीर्तितम् ॥ १०२ ॥

इति खण्डखाद्यो लेहः ।

### अथ खण्डामलकं च खण्डहरीतकी—

कार्पासीदलसंस्तरे ससलिलें भाण्डे शिवां वाऽभयाः
संस्वेद्याथ परत्र वारिणि पुनस्तोयान्तरे ताः प्लुताः।
विद्ध्वा वंशशलाकयाऽथ विजलाः खण्डस्य पाके शनैः
पक्त्वा मिष्टशिवाः शिवानि दधतेऽसृक्पित्तरोगे नृणाम्॥१०३॥

इति खण्डामलकं च खण्डहरीतकी।

### अथ रसाः—

शुद्धपारदंवलिप्रवालकं हेममाक्षिकभुजङ्गरङ्ककम्।
मारितं सकलमेतदुत्तमं भावयेत्पृथगथ द्रवैस्त्रिशः॥ १०४॥
चन्दनस्य कमलस्य मालतीकोरकस्य वृषपल्लवस्य च।
धान्यवारणकणाशतावरीशाल्मलीवटजटामृतस्य च॥ १०५॥
रक्तपित्तकुलकण्डनाभिधो जायते रसवरोऽस्रपित्तिनाम्।
प्राणदो मधुवृषद्रवैरयं सेवितस्तु वसुकृष्णलामितः।
नास्त्यनेन सममत्र भूतले भेषजं किमपि रक्तपित्तिनाम्॥ १०६॥

इति रक्तपित्तकुलकण्डनो रसो रसेन्द्रचिन्तामणेः॥

### अथ वासासूतः—

आटरूपनवपल्लवद्रवं पालिकं सरसभस्मवल्लकम्।
कर्षसंमितमधुप्रयोजितं प्राश्य नाशयति रक्तपित्तकम्॥१०७॥

इति वासासूतः।

यच्च पित्तज्वरे प्रोक्तं बहिरन्तश्च भेषजम्।
रक्तपित्ते हितं तच्च क्षतक्षीणे हितं च यत्॥ १०८॥

इति योगतरङ्गिण्यां रक्तपित्तनिदानचिकित्साकथनं नाम पञ्चसप्ततितमस्तरङ्गः॥ ७५॥

---

अथ षट्सप्ततितमस्तरङ्गः।

---

### अथ क्षयरोगनिदानम्—

वेगरोधात्क्षयाच्चैव साहसाद्विषमाशनात्।
त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात्॥ १॥

---

१ क. °वाताम्भसं सं°। २ क. °दवल्लीप्र°।

अथ क्षयलक्षणम्—

कफप्रधानैर्दोषैस्तु रुद्धेषु रसवर्त्मसु ।
अतिव्यवायिनो वाऽपि क्षीणे रेतस्यनन्तराः ॥ २ ॥
क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः ।
अनेकरोगानुगतो बहुरोगपुरोगमः ॥ ३ ॥
राजयक्ष्मा क्षयः शोषो रोगराडिति स स्मृतः ।
नक्षत्राणां द्विजानां च राज्ञश्चाभूदयं पुरा ॥ ४ ॥
यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः ।
राज्ञश्चन्द्रमसो यस्मादभूदेष किलाऽऽमयः ॥ ५ ॥
तस्मात्तं राजयक्ष्मेति प्रवदन्ति मनीषिणः ।
देहौषधक्षयकृतेः क्षयस्तस्मान्निगद्यते ।
रसादिशोषणाच्छोषो रोगराट् तेषु राजवान् ॥ ६ ॥

शोषलक्षणम्—

श्वासाङ्गसादकफसंस्रवतालुशोष-
वम्यग्निसादमदपीनसकासनिद्राः ।
शोषे भविष्यति भवन्ति स चापि जन्तुः
शुक्लेक्षणो भवति मांसपरो रिरंसुः ॥ ७ ॥

स्वप्नदृष्टत्वमाह—

स्वप्नेषु काकशुकसल्लकनीलकण्ठ-
गृध्रास्तथैव कपयः कृकलासकाश्च ।
तं वाहयन्ति स नदीर्विजलाश्च पश्ये-
च्छुष्कांस्तरूनपवनधूमदवार्दितांश्च ॥ ८ ॥

राजयक्ष्मणो लक्षणमाह—

अंसपार्श्वाभितापश्च संतापः करपादयोः ।
ज्वरः सर्वाङ्गगश्चेति लक्षणं राजयक्ष्मणः ॥ ९ ॥
स्वरभेदोऽनिलाच्छूलं संकोचश्चांसपार्श्वयोः ।
ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चाऽऽगमः ॥ १० ॥
शिरसः परिपूर्णत्वमभक्तच्छन्द एव च ।
कासः कण्ठस्य च ध्वंसो विज्ञेयः कफकोपतः ॥ ११ ॥

---

१ क. °सादक° ।

एकादशभिरेतैर्वा षड्भिर्वाऽपि समन्वितम् ।
कासातिसारपार्श्वार्तिस्वरभेदारुचिज्वरैः ॥ १२ ॥
त्रिभिर्वा पीडितैर्लिङ्गैर्ज्वरकासासृगामयैः ।
जह्याच्छोषार्दितं जन्तुमिच्छन्सुविपुलं यशः ॥ १३ ॥
सर्वैरर्धैस्त्रिभिर्वाऽपि लिङ्गैर्मांसबलक्षये ।
उक्तो वर्ज्यश्चिकित्स्यस्तु सर्वरूपोऽप्यतोऽन्यथा ॥ १४ ॥
महाशनं क्षीयमाणमतीसारनिपीडितम् ।
शूनमुष्कोदरं चैव यक्ष्मिणं परिवर्जयेत् ॥ १५ ॥
उपक्रमेदात्मवन्तं दीप्ताग्निमकृशं नरम् ।
शुक्लाक्षमन्नद्वेष्टारमूर्ध्वश्वासनिपीडितम् ॥ १६ ॥
कृच्छ्रेण बहुमेहन्तं यक्ष्मा हन्तीह मानवम् ।
व्यवायशोकवार्धक्यव्यायामाध्वप्रशोषिणम् ॥ १७ ॥
व्रणोरःक्षतसंज्ञौ च शोषिणो लक्षणं शृणु ।

व्यवायशोषिशोकशोषिणौ—

व्यवायशोषी शुक्रस्य क्षयलिङ्गैरुपद्रुतः ॥ १८ ॥
पाण्डुदेहो यथापूर्वं क्षीयन्ते चास्य धातवः ।
प्रध्यानशीलः स्रस्तांसः शोकशोष्यपि तादृशः ॥ १९ ॥

जराशोषिणमाह—

जराशोषी कृशो मन्दवीर्यबुद्धिबलेन्द्रियः ।
कम्पनोऽरुचिमान्भिन्नकांस्यपात्रहतस्वनः ॥ २० ॥
ष्ठीवति श्लेष्मणा हीनं गौरवारुचिपीडितः ।
संप्रस्रुतास्यनासाक्षः शुष्करूक्षमलच्छविः ॥ २१ ॥

व्यायामशोषिणमाह—

व्यायामशोषी भूयिष्ठमेभिरेव समन्वितः ।
लिङ्गैरुरःक्षतकृतैः संयुक्तश्च क्षतं विना ॥ २२ ॥

अध्वप्रशोषिणमाह—

अध्वप्रशोषी स्रस्ताङ्गः संभृष्टपरुषच्छविः ।
प्रसुप्तगात्रावयवः शुष्कक्लोमगलाननः ॥ २३ ॥

रक्तशोषिणमाह—

रक्तक्षयाद्वेदनाभिस्तथैवाऽऽहारयन्त्रणात् ।
व्रणिनश्च भवेच्छोषः स चासाध्यतमो मतः ॥ २४ ॥
उरःक्षती कफं सास्रं सपूयं पूतिमुद्वमेत् ।
सकासश्वासपार्श्वार्तिरसाध्यो ज्वरदाहवान् ॥ २५ ॥
परं दिनसहस्रं तु यदि जीवति मानवः ।
सुभिषग्भिरुपक्रान्तस्तरुणः शोषपीडितः ॥ २६ ॥

इति क्षयरोगनिदानम् ।

## अथ क्षयरोगचिकित्सा—

### अथ षडङ्गयूपः सुश्रुतात्—

व्यवायशोषिणं क्षीररसमांसाज्यभोजनैः ।
मुकुलैर्मधुरैर्गन्धैर्जीवनीयैरुपाचरेत् ॥ २७ ॥
हर्षणाश्वासनैः क्षीरैः स्निग्धैर्मधुरशीतलैः ।
दीपनैर्लघुभिश्चान्नैः शोकशोषमुपाचरेत् ॥ २८ ॥
व्रणशोषं जयेत्स्निग्धैर्दीपनैः स्वादुशीतलैः ।
आस्यासुखैर्दिवास्वप्नैः शीतैर्मधुरबृंहणैः ॥ २९ ॥
तक्रमांसरसाहारैरध्वशोषिणमाचरेत् ।
ईषदम्लैरनम्लैर्वा यूषमांसरसादिभिः ॥ ३० ॥
व्यायामशोषिणं स्निग्धैः क्षतक्षयहितैर्हिमैः ।
उपाचरेज्जीवनीयैर्विधिना श्लेष्मकेण तु ॥ ३१ ॥
बलिनो बहुदोषस्य पञ्च कर्माणि कारयेत् ।
यक्ष्मिणः क्षीणदेहस्य यत्कृतं स्याद्विषोपमम् ॥ ३२ ॥
मलायत्तं बलं पुंसां शुक्रायत्तं तु जीवितम् ।
अतो विशेषात्संरक्षेद्यक्ष्मिणो मलरेतसी ॥ ३३ ॥
शालिषष्टिकगोधूमयवमुद्गादयः शुभाः ।
मद्यानि जाङ्गलाः पक्षिमृगाः शस्ता विशुष्यतः ॥ ३४ ॥
मूलकानां कुलित्थानां यूषैर्वा सूपसंस्कृतैः ।
सपिप्पलीकं सयवं सकुलित्थं सनागरम् ॥ ३५ ॥
दाडिमामलकोपेतं स्निग्धमाजं रसं पिबेत् ।
तेन [illegible] विकाराः पीनसादयः ॥ ३६ ॥

द्रैपतो द्विगुणं मांसं सर्वतोऽष्टगुणं जलम् ।
पादस्थं संस्कृतं चाऽऽद्ये षडङ्गो यूष उच्यते ॥ ३७ ॥

इति षडङ्गयूषः सुखदः ।

अथ सप्तामृतलोहम्—

धान्यकं पिप्पलीविश्वदशमूलजलं पिबेत् ।
पार्श्वशूलज्वरश्वासपीनसादिनिवृत्तये ॥ ३८ ॥
अश्वगन्धामृताभीरुदशमूली बलावृषाः ।
पौष्करातिविषे घ्नन्ति क्षयं क्षीररसाशिनः ॥ ३९ ॥
कपिमांसं समादाय श्लक्ष्णचूर्णं तु कारयेत् ।
तालिकक्षीरसंयुक्तं क्षयरोगहरं परम् ॥ ४० ॥
हरिणच्छागमांसं तु श्लक्ष्णचूर्णीकृतं शुभम् ।
अजाक्षीरेण पातव्यं क्षयव्याधिनिवारणम् ॥ ४१ ॥
छागमांसं पयश्छागं छागं सर्पिः सनागरम् ।
छागोपसेवाशयनं छागमध्ये तु यक्ष्मनुत् ॥ ४२ ॥
मधुताप्यविडङ्गाश्मजतुलोहघृताभयाः ।
घ्नन्ति यक्ष्माणमत्युग्रं सेव्यमाना हिताशिना ॥ ४३ ॥

इति सप्तामृतलोहम् ।

अथ दशमूलादिकाथः—

शर्करामधुसंयुक्तं नवनीतं लिहन्क्षयी ।
क्षीराशी लभते पुष्टिमतुल्ये चाऽऽज्यमाक्षिके ॥ ४४ ॥
दशमूलबलारास्नापुष्करनागरैः कथितम् ।
पेयं पार्श्वांसशिरोरुक्क्षयकासाग्निशान्तये सलिलम् ॥४५॥

इति दशमूलादिकाथः ।

ककुभत्वङ्नागबला वानरीबीजचूर्णितं पयसा ।
पीतं मधुघृतयुक्तं ससितं यक्ष्मादिकासहरम् ॥ ४६ ॥

अथ तालीसाद्यं चूर्णम्—

तालीसोषणविश्वपिप्पलितुगाः कर्षाभिवृद्ध्यास्त्रुटिः
कर्षार्धा त्वगपि प्रकामधवला द्वात्रिंशकर्षा सिता ।

---

१ ग. द्रव्यतो ।

तालीसाद्यमिदं सुचूर्णमरुचाबाध्मानमन्दानल-
श्वासच्छर्द्यतिसारशोपकसनप्लीहज्वरे शस्यते ॥ ४७ ॥

इति तालीसाद्यं चूर्णम् ।

## अथ सितोपलाद्यं चूर्णम्—

चूर्णं षोडशकुञ्जराब्धिनयनक्ष्मामागभाजः सिता
वांशीमागधिकात्रुटित्वच इह क्षौद्राज्ययुक्तं प्रगे ।
लीढं हन्ति सितोपलादिकमिदं हस्ताङ्घ्रिदाहं क्षयं
पार्श्वार्तिज्वररक्तपित्तकसनश्वासाग्निमान्द्यारुचीः ॥ ४८ ॥

इति सीतोपलाद्यं चूर्णम् ।

## अथ च्यवनप्राशविभीतकावलेहौ—

द्राक्षैलाब्धदशाङ्घ्रिजी*वनबलाशृङ्गघुच्चटायःकणा-
पथ्याकाननसाब्जपुष्करशठीछिन्नाविदारीवृषम् ।
वर्षाभूहिममाम्रकं जलघटे धात्रीशतैः पञ्चभिः
पक्त्वा व्यस्थिशिवायुतं यम+कतो द्विः षट्पले भर्जितम् ॥ ४९ ॥
सश्वेतार्धतुलां पचेन्मधुतुगाकृष्णाचतुर्जातत:
षड्द्वित्र्येकपलान्वितश्च्यवनकप्राशो जरामृत्युजित् ।
कासश्वासखुडज्वरक्षयतमोहृन्मूत्रशुक्रार्तिजित्
सक्षौद्रोऽक्षशताजमूत्र×शतजः कासे कफश्वासहा ॥ ५० ॥

इति च्यवनप्राशविभीतकावलेहौ ।

## अथ चतुर्दशाङ्गलोहम्—

रास्ना कर्पूरतालीसभेकपर्णी शिलाजतु ।
त्रिकटुत्रिफलामुस्ताविडङ्गदहनाः समाः ॥ ५१ ॥
चतुर्दशायसो भागास्तच्चूर्णं मधुसर्पिषा ।
लीढं कासज्वरं श्वासं राज(हन्ति)यक्ष्माणमेव च ।
बलवर्णाग्निपुष्टीनां वर्धनं दोषनाशनम् ॥ ५२ ॥

इति चतुर्दशाङ्गलोहम् ।

---

* क. पुस्तके—[illegible] द्वौ च योजितौ । द्वे शूर्पपर्ण्यौ जीवन्ती मधुकं चेलयं गणः ॥ १ ॥ + क. [illegible]भ्यां घृततैलाभ्यां यमकः । × क. पुस्तके—तुलत

## अथागस्त्यहरीतकी—

शङ्खाख्यादशमूलपुष्करशठीवासस्वगुप्ताबला-
पामार्गेभकणामृतौपधवृकीग्रन्थ्यग्निमार्गीरसाः ।
आम्रापथ्यशतं यवाढकमपां पञ्चाढकं वा यव-
स्वेदात्पाच्यमिमाः शिवाः स च रसो गौडीतुला त्र्यञ्जलिः॥५३॥
कृष्णातैलघृतात्पुनः कुडविकक्षौद्रैरगस्त्यामयाः
कासार्शोग्रहणीक्षयज्वरजराश्वासप्रतिश्यारुचौ ॥ ५४ ॥

इत्यगस्त्यहरीतकी ।

## अथ च्यवनप्राशश्चिकित्साकलिकातः—

द्विपञ्चमूले जलसिद्धमाज्यं वासाघृतं वाऽप्यथ षट्पलं च ।
हितं पयश्छागलमव्यवाये प्रयुज्यते नागबलाभिधानम् ॥ ५५ ॥
शृङ्गीं सामलकीं फलत्रिकबलीं छिन्नां विदारीं शठीम्
जीवन्तीं दशमूलचन्दनघनैर्नीलोत्पलैलावृषैः ।
मृद्वीकाष्टकवर्गपौष्करयुतैः सार्धं पृथक्पालिकै-
स्त्वद्रोणेन शतानि पञ्च विपचेद्धात्रीफलानामतः ॥ ५६ ॥
उद्धृत्याऽऽमलकानि तैलघृतयोः षड्भिश्च षड्भिः पलै-
र्मृष्टान्यर्धतुलां निधाय विधिवन्मत्स्यण्डिकायाः पचेत् ।
शीते षण्मधुनः पलानि कुडवो वांश्याश्चतुर्जाततो
मुष्टिर्मागधिका पलद्वयमयं प्राशः स्मृतश्च्यावनः ॥ ५७ ॥
न शोषः साफल्यं भजति वपुषि क्षीणमनसो
न मूर्छा न छर्दिस्तृडपि च न च श्वासकसनम् ।
न चालक्ष्मीर्विघ्नं क्वचिदपि च न व्यापदमयं
प्रयोगादेतस्मान्मनसिजधियो बिभ्रति मनः ॥ ५८ ॥

इति च्यवनप्राशः ।

## अथ खण्डपिप्पल्यवलेहः—

कृष्णाप्रस्थं पचेच्चाऽऽढकपयसि घृतस्याञ्जलिं खण्डपात्रं
दत्त्वा लेहोपमेऽस्मिन्सुरकुसुमचतुर्जातविश्वोपणेन्दून् ।

---

१ क. °वणादीन् ।

ग्रन्थिश्रीखण्डयष्टीमधुघु*सृणजलं जातिकोशं च कर्षं
प्रत्येकं चूर्णयित्वा मधुकुडवयुतः स्याच्च कृष्णावलेहः ॥ ५९ ॥
आदौ मन्दाग्निकार्श्यं हरति स च शिशुस्त्रीजरन्मानुषेषु
प्रायो वृष्योऽक्षिपथ्यो विपुलबलकरो दीपनः पाचनश्च ।
कासश्वासप्रमेहक्षयरुगतितृषाकामलापाण्डुकण्डू-
प्लीहाजीर्णज्वरं चानिलकफविकृतीरम्लपित्तं च हन्यात् ॥६०॥
इति खण्डपिप्पल्यवलेहः ।

## अथ शिवगुटिका—

त्रीन्वारान्प्रथमं शिलाजतुजले भाव्यं भवेत्त्रैफले
निष्काथे दशमूलजेऽथ तदनु च्छिन्नोद्भवाया रसे ।
बाट्यालक्रथने पटोलसलिले यष्टीकषाये पुन-
र्गोमूत्रेऽथ पयस्यथापि च गवामेषां कषाये ततः ॥ ६१ ॥
द्राक्षाभीरुविदारिकाद्वयपृथक्पर्णीस्थिरापौष्करैः
पाठाकौटजकर्कटाख्यकटुकारास्नाम्बुदालम्बुदैः ।
दन्तीचित्रकचव्यवारणकणावीराष्टवर्गौषधै-
स्त्द्रोणे चरणस्थितैः पलमितैरेभिः पृथग्भावयेत् ॥ ६२ ॥
धात्रीमेषविषाणिकात्रिकटुकैरेभिः पृथक्पञ्चकै-
र्द्रव्यैश्च द्विपलोन्मितैरपि पलं चूर्णाद्विदारीभवात् ।
तालीसात्कुडवं चतुष्पलमिह प्रक्षिप्यते सर्पिष-
स्तैलस्य द्विपलं पलाष्टकमथ क्षौद्राद्भिषग्योजयेत्॥ ६३ ॥
तुल्यं पलैः षोडशभिः सितायास्त्वक्क्षीरिकापत्रककेसरैश्च ।
विल्वांशकैस्त्वक्त्रुटिसंप्रयुक्तैरित्यक्षमात्रा गुटिकाः प्रकल्प्याः ॥
तासामेकतमां प्रयोज्य विधिवत्प्रातः पुमान्भोजनात्
प्राग्वा मुद्गदलाम्बु जाङ्गलरसं शीतं शृतं वा जलम् ।
माक्षीकं मदिरामगुर्वशनभुक्पीत्वा पयो वा गवां
प्राप्नोत्यङ्गमनङ्गवत्सुभगतासंपन्नमानन्दकृत् ॥ ६४ ॥
शोफग्रन्थ्यधिमन्थवेपथुवमीपाण्ड्वामयश्लीपद-
प्लीहार्शःप्रदरप्रमेहपिटकामेहाश्मरीशर्कराः ।

---

* घ. कुङ्कुमम् ।

---

१ 'म्बुदैः । द' ।

हृद्रोगार्बुदवृद्धिविद्रधिपक्त्युन्यामयाः सानिला
ऊरुस्तम्भभगंदरज्वररुजस्तूणीप्रतूणीतृपः ॥ ६५ ॥
वातासृक्प्रबलं प्रवृद्धमुदरं कुष्ठं किलासं क्रमीन्
कासश्वासमुरःक्षतक्षयमसृक्पित्तं सपानात्ययम् ।
उन्मादं मदमप्यपस्मृतिमतिस्थौल्यं कृशत्वं तनौ
सालस्यं च हलीमकं च शमयेन्मूत्रस्य कृच्छ्राणि च॥६६॥
भवति जरया सर्वश्वेतैरकालजराकृतै-
र्वृतमलिकुलाकारैरेभिः शिरःसु शिरोरुहैः ।
प्रसरति वलाव्यस्तातङ्कं वपुश्च समुद्वहन्
प्रभवति शतं स्त्रीणां गन्तुं जनो जनवल्लभः ॥ ६७ ॥
स्तिमितमतिरप्यज्ञानान्धः सदस्यपटुः पुमान्
सकृदपि यथा ज्ञानोपेतः श्रुतिस्मृतिमान्भवेत् ।
व्रजति च यथा युक्तो योगी शिवस्य समीपतां
शिवगुटिकया कस्तामेतां करोति न मानुषः ॥ ६८ ॥
इति शिवगुटिका ।

## अथ लघुशिवगुटिका—

कीटजं त्रिफलानिम्बपटोलघननागरैः ।
भावितानि वृशाहानि रसैर्द्वित्रिगुणानि च ॥ ६९ ॥
शिलाजतुपलान्यष्टौ तावती सितशर्करा ।
त्वक्क्षीरीपिप्पलीधात्रीकर्कटाख्यान्पलोन्मितान् ॥ ७० ॥
निदिग्धिफलमूलाभ्यां पलं युञ्ज्यात्त्रिजातकात् ।
मधु त्रिफलसंयुक्तं कुर्यादक्षसमान्गुडान् ॥ ७१ ॥
दाडिमाम्लपयःक्षीररसयूषसुरासवान् ।
तान्भक्षयित्वाऽनु पिबेन्निरन्नो हितभक्ष्यभाक् ॥ ७२ ॥
पाण्डुकुष्ठज्वरप्लीहतमकार्शोभगंदरान् ।
नाशयेन्मूत्रकृच्छ्राणि मूत्रस्थानविबन्धनात् ॥ ७३ ॥
यद्यत्र बीजतोयेन कान्तलोहं तथाऽभ्रकम् ।
पलं पलं च मिलितं तदा स्यात्किमतः परम् ॥ ७४ ॥
तीव्रदुःखप्रदं पाण्डुं प्रमेहं सपरिग्रहम् ।
राजरोगं च व्याधिं च जयेदिति किमद्भुतम् ॥ ७५ ॥
इति लघुशिवगुटिका ।

## अथ चरकात्—

फलत्रिकक्वाथविशुद्धमादौ
शुद्धं गुडूच्या दशमूलशुद्धम् ।
स्थिरादिकाकोलियुगादिसिद्धं
शिलाजतु स्यात्क्षयिषु प्रशस्तम् ॥ ७६ ॥

इति चरकात् ।

## अथ यवान्याद्यं चूर्णम्—

यवानी तिन्तिडीकं च नागरं चाम्लवेतसम् ।
दाडिमं बादरं चाम्लं कार्षिकाण्युपकल्पयेत् ॥ ७७ ॥
धान्यसौवर्चलाजाजीवराङ्गं चार्धकार्षिकम् ।
पिप्पलीनां शतं चैकं द्वे शते मरिचस्य तु ॥ ७८ ॥
शर्करायाश्च चत्वारि पलान्येकत्र चूर्णयेत् ।
जिह्वासंशोधनं हृद्यं तच्चूर्णं भक्ष्यरोचनम् ॥ ७९ ॥
हितं पार्श्वार्तिशूलघ्नं विबन्धानाहनाशनम् ।
कासश्वासहरं ग्राहि ग्रहण्यर्शोविबन्धनुत् ॥ ८० ॥

इति यवान्याद्यं चूर्णम् ।

## अथ द्विपञ्चमूलाद्यं घृतम्—

द्विपञ्चमूलस्य पचेत्कषाये प्रस्थद्वये मांसरसस्य चैकम् ।
कल्कं बलायाः सुनियोज्य गर्भे सिद्धं पयः प्रस्थयुतं घृतं च ।
सर्वाभिघातोत्थितयक्ष्मशूलक्षतक्षयोत्कासहरं प्रदिष्टम् ॥ ८१ ॥

## अथ बलाद्यं घृतम्—

बलां श्वदंष्ट्रां बृहतीं कलशीं धावनीं स्थिराम् ।
निम्बपर्पटकं मुस्तं त्रायमाणां दुरालभाम् ॥ ८२ ॥
कृत्वा कषायं पेष्याथ दद्यात्तामलकीं सटीम् ।
द्राक्षां पुष्करमूलं च मेदामामलकानि च ॥ ८३ ॥
घृतं पयश्च तत्सिद्धं सर्पिर्ज्वरहरं परम् ।
क्षयकासप्रशमनं शिरःपार्श्वरुजापहम् ॥ ८४ ॥

---

१ ग. भक्षरो° । २ ग. °म् । हृत्पार्श्वा° ।

अथ द्राक्षासवः—

मृद्वीकायास्तुलार्धं तु द्विद्रोणेऽपां विपाचयेत् ।
पादशेषे कषाये च पूते शीते प्रदापयेत् ॥ ८५ ॥
गुडस्य द्वितुलां मानीं धातक्या घृतभाजने ।
विडङ्गं फलिनी कृष्णा त्वगेलापत्रकेसरम् ॥ ८६ ॥
मरिचं च भिषक्चूर्णं सम्यक्कृत्वा विचक्षणः ।
क्षिपेच्च पलिकैर्भागैः स्थापयेच्च कियद्दिनम् ॥ ८७ ॥
ततो यथाबलं पीत्वा कासश्वासात्प्रमुच्यते ।
हन्ति यक्ष्माणमत्युग्रमुरःसंधिं करोति च ॥ ८८ ॥
चतुर्थभागं द्राक्षाया धातकीमत्र केचन ।
प्रयच्छन्ति ततो वीर्यमेतस्योच्चैः प्रजायते ॥ ८९ ॥

अथ पिप्पल्याद्यरिष्टः—

पिप्पलीलोध्रमरिचपाठाधान्येलवालुकैः ।
चव्यचित्रकजन्तुघ्नक*मुकोशीरचन्दनैः ॥ ९० ॥
मुस्तभिषक्कुल्यवल्लीहरिद्राभिशिपेलवैः ।
पत्रत्वक्कुष्ठतगरैर्नागकेसरसंयुतैः ॥ ९१ ॥
भागैः स्यादर्धपलिकैर्द्राक्षां षष्टिपलां क्षिपेत् ।
पलानि दश धातक्या गुडस्य च शतत्रयम् ॥ ९२ ॥
तोयार्मणद्वये सिद्धं भवत्येतत्सुखावहम् ।
ग्रहणीपाण्डुरोगार्शःकासगुल्मोदरापहम् ॥ ९३ ॥
पिप्पल्यादिरिष्टोऽयं क्षयक्षयकरः परः ।

अथ छागलादिघृतम्—

छागमांसतुलां सम्यक्पाचयेदर्मणेऽम्भसि ॥ ९४ ॥
पादशेषेण तेनैव सर्पिः प्रस्थं विपाचयेत् ।
ऋद्धिर्वृद्धिश्च मेदे द्वे तथा जीवकऋषभौ ॥ ९५ ॥
काकोलीक्षीरकाकोल्यौ कल्कैरेभिः पलोन्मितैः ।
सम्यक्सिद्धेऽवतार्याथ शीते तस्मिन्प्रदापयेत् ॥ ९६ ॥
शर्करायाः पलान्यष्टौ मधुनः कुडवं क्षिपेत् ।
पलं पलं पिबेत्प्रातर्यक्ष्माणं हन्ति दुस्तरम् ॥ ९७ ॥
बल्यं स्थौल्यकरं वृष्यं दीपनं मन्दवह्निजित् ।

* क. भद्र ।

अथ चन्दनादितैलम्—

चन्दनाम्बुनखं वाप्यं यष्टीशैलेयपद्मकम् ॥ ९८ ॥
मञ्जिष्ठा सरलं दारु सट्येलापूतिकेसरम् ।
पत्रं बिल्वमुशीरं च कङ्कोलं च नताम्बुदम् ॥ ९९ ॥
हरिद्रे सारिवे तिक्ता लवङ्गागुरुकुङ्कुमम् ।
त्वग्रेणुनालिका चैभिस्तैलं मस्तु चतुर्गुणम् ॥ १०० ॥
लाक्षारससमं सिद्धं ग्रहघ्नं बलवर्णकृत् ।
अपस्मारज्वरोन्मादकृत्यालक्ष्मीविनाशनम् ॥ १०१ ॥
आयुःपुष्टिकरं चैव वशीकरणमुत्तमम् ।
विशेषात्क्षयरोगघ्नं रक्तपित्तहरं परम् ॥ १०२ ॥

अन्यच्च—

श्रीखण्डाम्बुनखाब्दरात्रिसरलश्रीपूतिमांसीचतु-
र्जातोग्रागरुयष्टिपद्मकमुराशैलेयबिल्वामरैः ।
गोव्यंस्राण्डलवङ्गरेणुशठिरुग्भाण्डचेणजामिश्वतु-
र्मस्तु स्यात्समलाक्षवारितिलजं सिद्धं क्षयादौ हितम् ॥१०३॥

इति चन्दनादितैलम् ।

अथ बृहन्नवायसम्—

त्रिकटुत्रिफलैलाभिर्जातीफललवङ्गकैः ।
नवभागोन्मितैरेतैः समं तीक्ष्णं मृतं भवेत् ॥ १०४ ॥
संचूर्ण्य लोडयेत्क्षौद्रैर्नित्यं भक्षति मानवः ।
कासं श्वासं क्षयं मेहं पाण्डुरोगं भगंदरम् ॥
ज्वरं मन्दानलं शोथं संमोहं ग्रहणीं जयेत् ॥ १०५ ॥

इति बृहन्नवायसम् ।

अथ लाक्षादितैलम्—

तैलं मस्थमितं चतुर्गुणजतुक्वाथं चतुर्मस्तुरु-
ग्यष्टीदारुनिशाब्दमूर्वकटुकामिश्यश्च कौन्ती हिमैः ।
रास्नाद्यैः पिचुसंमितैः कृतमिदं शस्तं तु जीर्णे ज्वरे
सर्वास्मिन्विषमेऽपि यक्ष्मणि शिशौ वृद्धे सगर्भासु च ॥१०६॥

१ — क. °द्यः खाण्ड° । ३ क. °रुग्भाण्डचेणजाभि° ।

अथ महालाक्षादितैलम्—

तैलं तुल्यजतूदकं दशजटाक्वाथेन तुल्यं सरा-
वाट्यालकथनेन चापि पयसा दध्नश्च धान्याम्बुना ।
चातुर्जातलवङ्गकुन्दुरुमुरागोपीतिरीटामया-
श्यामासत्रिघनाम्बुदारुसरलारास्नानरोशीरकैः ॥ १०७ ॥
काळीयागुरुरक्तचन्दनरसामांसीतुरुष्काण्डिका
कर्चूरैस्तगरैणजामिशिहिमैः शैलेयमूर्वानलैः ।
षट्टीपद्मकरेणुकापटुकटुव्योपैश्च मण्डीयुतैः
संपिष्टैश्चतुरम्बुमिश्च विधिवन्मन्दाग्निपक्कं क्रमात् ॥ १०८ ॥
यक्ष्माणं क्षयमङ्गसादमनिलव्याधिं च जीर्णज्वरं
कण्डूपाण्डुमुदर्दमण्डलमसृक्पित्तं च रौक्ष्यं जयेत् ।
सूत्यां राजनि बालके च तरुणे वृद्धे सगर्भस्त्रियां
मूर्धार्तौ पलितेऽपि शूलिनि महालाक्षादितैलं हितम् ॥१०९॥

अथ रसाः—

अथ रत्नगर्भपोटलीरसः—

रसं वज्रं हेम तारं नागं लोहं तथाऽभ्रकम् ।
तुल्यांशं मारितं योज्यं मुक्तामाक्षिकविद्रुमम् ॥ ११० ॥
राजावर्तं च वैक्रान्तं गोमेदं पुष्परागकम् ।
शङ्खं च तुल्यतुल्यांशं सप्ताहं चित्रकद्रवैः ॥ १११ ॥
मर्दयित्वा विचूर्ण्याथ तेनाऽऽपूर्य वराटकान् ।
टङ्कणं रविदुग्धेन पिष्ट्वा तन्मुद्रणं चरेत् ॥ ११२ ॥
मृद्भाण्डे तान्सुसंयम्य सम्यग्गजपुटे पचेत् ।
आदाय चूर्णयेत्सम्यङ्निर्गुण्ड्याः सप्त भावनाः ॥ ११३ ॥
आर्द्रकस्य रसैः सप्त चित्रकस्यैकविंशतिः ।
द्रवैर्भाव्यं ततः शुष्कं देयं गुञ्जाचतुष्टयम् ॥ ११४ ॥
क्षयरोगं निहन्त्याशु सत्यं शिव इवान्धकम् ।
योजयेत्पिप्पलीक्षौद्रैः सघृतैर्मरिचैश्च वा ॥ ११५ ॥
पोटलीरत्नगर्भोऽयं सर्वरोगहरो मतः ॥ ११६ ॥

इति रत्नगर्भपोटलीरसः ।

---

१ क. °मथ द्या° । २ क. °मारानि ।

अथ कुमुदेश्वरो रसो रसार्णवात्—

पारदं शोधितं गन्धमभ्रकं च समं समम्।
तदर्धं दरदं दद्यात्तदर्धां च मनःशिलाम्॥ ११७॥
सर्वार्धं मृतलोहं च खल्वमध्ये विनिक्षिपेत्।
त्रिःसप्त भावना देयाः शतावर्या रसेन च॥ ११८॥
ततः सिद्धो भवत्येष कुमुदेश्वरसंज्ञकः।
सितया मरिचेनाथ गुञ्जाद्विप्रमाणतः॥ ११९॥
भक्षयेत्प्रातरुत्थाय पूजयित्वेष्टदेवताम्।
यक्ष्माणमुग्रं हन्त्येव वातपित्तकफामयान्॥ १२०॥
ज्वरादीनखिलान्रोगान्यथा दैत्याञ्जनार्दनः।
सतताभ्यासयोगेन वलीपलितनाशनः॥ १२१॥

इति कुमुदेश्वरो रसः।

अथ पञ्चामृताख्यो रसः—

भस्मीभूतसुवर्णतारदिनकृत्सूताभ्रसत्त्वैः क्रमा-
त्संवृद्धैस्त्रितयं त्रयः क्रिमिहराम्भोदैर्युतः कट्फलैः।
निर्गुण्डीदशमूलवह्निरजनीव्योषार्द्रकैर्भावितो
गोलीकृत्य विशेषतो निगदितः पञ्चामृताख्यो रसः॥१२२॥
नानेन सदृशः कोऽपि रसोऽस्ति भुवनत्रये।
निहन्ति सकलान्रोगान्भवरोगमिवाच्युतः॥ १२३॥
सर्वरोगहरः सूतस्तत्तद्रोगानुपानतः।
अयं पञ्चामृतो नृणां त्रिदशानामिवामृतम्॥ १२४॥

इति पञ्चामृतो रसः सारसंग्रहात्।

अथ राजमृगाङ्कः—

रसभस्म त्रयो भागाः स्वर्णभस्मैकभागिकम्।
मृतताम्रस्यैकभागः शिलागन्धकतालकम्॥ १२५॥
यथाभागद्वयं शुद्धं मेलयित्वा विचूर्णयेत्।
वराटीः पूरयेत्तेन अजाक्षीरेण टङ्कणम्॥ १२६॥
पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डे तं निरोधयेत्।
शुष्कं गजपुटे पक्त्वा चूर्णयेत्स्वाङ्गशीतलम्॥ १२७॥

## अथ महालाक्षादितैलम्—

तैलं तुल्यजतुद्रवं दशजटाक्राथेन तुल्यं सरा-
वाटयालकथनेन चापि पयसा दध्नश्च धान्याम्बुना ।
धातुजातलवङ्गकुन्दुरुगुरागोपीतिरीटामया-
श्यामांसग्रिघनाम्बुदारुसरलारास्नानरोशीरकैः ॥ १०७ ॥
फालीयागुरुरक्तचन्दनरसामांसीतुरुष्काण्विका
कर्चूरैस्तगरेणजामिशिहिमैः शैलेयमूर्वानलैः ।
पट्टीपद्मकरेणुकापटुकटुभ्योपैश्च मण्डीयुतैः
संपिष्टैश्चतुरम्बुभिश्च विधिवन्मन्दाग्निपक्वं क्रमात् ॥ १०८ ॥
यक्ष्माणं क्षयमङ्गसादमनिलव्याधिं च जीर्णज्वरं
कण्डूपाण्डुमुदर्दमण्डलमसृक्पित्तं च रौक्ष्यं जयेत् ।
सूत्यां राजनि बालके च तरुणे वृद्धे सगर्भस्त्रियां
मूर्धार्तौ पलितेऽपि शूलिनि महालाक्षादितैलं हितम् ॥१०९॥

## अथ रसाः—

### अथ रत्नगर्भपोटलीरसः—

रसं वज्रं हेम तारं नागं लोहं तथाऽभ्रकम् ।
तुल्यांशं मारितं योज्यं मुक्तामाक्षिकविद्रुमम् ॥ ११० ॥
राजावर्तं च वैक्रान्तं गोमेदं पुष्परागकम् ।
शङ्खं च तुल्यतुल्यांशं सप्ताहं चित्रकद्रवैः ॥ १११ ॥
मर्दयित्वा विचूर्ण्याथ तेनाऽऽपूर्य वराटकान् ।
टङ्कणं रविदुग्धेन पिष्ट्वा तन्मुद्रणं चरेत् ॥ ११२ ॥
मृद्भाण्डे तान्सुसंयन्त्र्य सम्यग्गजपुटे पचेत् ।
आदाय चूर्णयेत्सम्यङ्निर्गुण्ड्याः सप्त भावनाः ॥ ११३ ॥
आर्द्रकस्य रसैः सप्त चित्रकस्यैकविंशतिः ।
द्रवैर्भाव्यं ततः शुष्कं देयं गुञ्जाचतुष्टयम् ॥ ११४ ॥
क्षयरोगं निहन्त्याशु सत्यं शिव इवान्धकम् ।
योजयेत्पिप्पलीक्षौद्रैः सघृतैर्मरिचैश्च वा ॥ ११५ ॥
पोटलीरत्नगर्भोऽयं सर्वरोगहरो मतः ॥ ११६ ॥

इति रत्नगर्भपोटलीरसः ।

---

१ क. °मय श्या° । २ क. °मारान्नि ।

## अथ कुमुदेश्वरो रसो रसार्णवात्—

पारदं शोधितं गन्धमभ्रकं च समं समम् ।
तदर्धं दरदं दद्यात्तदर्धां च मनःशिलाम् ॥ ११७ ॥
सर्वार्धं मृतलोहं च खल्वमध्ये विनिक्षिपेत् ।
द्विःसप्त भावना देयाः शतावर्या रसेन च ॥ ११८ ॥
ततः सिद्धो भवत्येष कुमुदेश्वरसंज्ञकः ।
सितया मरिचेनाथ गुञ्जाद्वित्रप्रमाणतः ॥ ११९ ॥
भक्षयेत्प्रातरुत्थाय पूजयित्वेष्टदेवताम् ।
पक्षमाणमुग्रं हन्त्येव वातपित्तकफामयान् ॥ १२० ॥
ज्वरादीनखिलान्रोगान्यथा दैत्याञ्जनार्दनः ।
सतताभ्यासयोगेन वलीपलितनाशनः ॥ १२१ ॥

इति कुमुदेश्वरो रसः ।

## अथ पञ्चामृताख्यो रसः—

भस्मीभूतसुवर्णतारदिनकृत्सूताभ्रसत्त्वैः क्रमा-
त्संवृद्धैस्त्रितयं त्रयः क्रिमिहराम्भोदैर्युतः कट्फलैः ।
निर्गुण्डीदशमूलवह्निरजनीव्योषार्द्रकैर्भावितो
गोलीकृत्य विशेषतो निगदितः पञ्चामृताख्यो रसः ॥१२२॥
नानेन सदृशः कोऽपि रसोऽस्ति भुवनत्रये ।
निहन्ति सकलान्रोगान्भवरोगमिवाच्युतः ॥ १२३ ॥
सर्वरोगहरः सूतस्तत्तद्रोगानुपानतः ।
अयं पञ्चामृतो नृणां त्रिदशानामिवामृतम् ॥ १२४ ॥

इति पञ्चामृतो रसः सारसंग्रहात् ।

## अथ राजमृगाङ्कः—

रसभस्म त्रयो भागाः स्वर्णभस्मैकभागिकम् ।
मृतताम्रस्यैकभागः शिलागन्धकतालकम् ॥ १२५ ॥
यथाभागद्वयं शुद्धं मेलयित्वा विचूर्णयेत् ।
वराटीः पूरयेत्तेन अजाक्षीरेण टङ्कणम् ॥ १२६ ॥
पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डे तं निरोधयेत् ।
शुष्कं गजपुटे पक्त्वा चूर्णयेत्स्वाङ्गशीतलम् ॥ १२७ ॥

रसो राजमृगाङ्कोऽयं पञ्चगुञ्जः क्षयापहः ।
दशपिप्पलिकाक्षौद्रैर्मरिचैकोनविंशतिः ।
सघृतं दापयेत्पथ्यं राजरोगप्रशान्तये ॥ ३ ॥

अथ मृगाङ्कः—

रसेन तुल्यं कनकं तयोस्तु साम्येन युञ्ज्यान्नवमौक्तिकानि ।
सूतप्रमाणो बलिरङ्घ्रिभागः क्षीरस्य सर्वं तुपवारिणा तु ॥१२८॥
संमर्द्य पक्षे सुनिधाय गोलं दिनं पचेत्तं लवणेन पूर्णे ।
भाण्डे मृगाङ्कोऽयमतिप्रगल्भः क्षयाग्निमान्द्यग्रहणीगदेषु ॥१२९॥
साज्योपणाभिर्मधुपिप्पलीभिर्वल्लोऽस्य देयो न ततोऽधिकस्तु ।
पथ्यं हितं शीतलमेव योज्यं त्याज्यं सदा पित्तकरं विदाहि॥१३०॥
इति रसरत्नप्रदीपात् ।

अथ कनकसुन्दरो रसः—

रसः कनकभागिकः कनकमाक्षिकस्तालकः
शिलारसकगन्धकौ रससमाः सतुत्था इमे ॥ १३१ ॥
विमर्द्य पयसा रवेः सकलमेतदस्योपरि
द्रवैः प्रतिदिनं पृथक् तदिति भावयेद्बुद्धिमान् ॥ १३२ ॥
जयामुनिकलिप्रियादहनभृङ्गवासोद्भवै-
र्विभाव्य च रसैस्ततः सुदृढगोलकं स्वेदयेत् ।
मृगाङ्कवदथाऽऽर्द्रकद्रवभरेण तं सप्तधा
विमर्द्य च कटुत्रयाम्बुभिरयं क्षयस्यान्तकृत् ॥ १३३ ॥
रसः कनकसुन्दरो भवति संनिपातेऽप्ययं
सहाऽऽर्द्रकरसैस्तथा पवनगुल्मशूलादिहृत् ।
सविश्वघृतयोजितः सकलमत्र पथ्यं हितं
मृगाङ्कवदथापरं किमपि नैव योज्यं क्वचित् ॥ १३४ ॥

अथ सुवर्णपर्पटीरसः—

शुद्धं सुवर्णदलमष्टगुणेन शुद्ध-
सूतेन पिण्डितमथो वसुभागभाजम् ।
गन्धं हुते बदरवह्निषु लोहपात्रे
दत्वा विलोड्य लघुलोहशलाकया तत् ॥ १३५ ॥

---

१ ग. 'दिनको' ।

मन्दं निरस्य सुरभीमलमण्डलस्थं
रम्भादले तदुपरि प्रणिधाय चान्यत् ।
रम्भादलं लघु निपच्य तदाददीत
शीतं सुवर्णरसपर्पटकाभिधानम् ॥ १३६ ॥
पित्तोल्बणे ससितया तुगयाऽथ वाते
श्लेष्मोल्बणे किल तुगामधुपिप्पलीभिः ।
क्षीणे विरेकिणि च शोषिणि मन्दवह्नौ
पाण्डौ प्रमेहिणि चिरज्वरिणि ग्रहण्याम् ।
वृद्धे शिशौ सुखिनि राज्ञि नरे च नार्यां
भैषज्यमेतदुदितं हितमामयघ्नम् ॥ १३७ ॥

अथ प्राणदा पर्पटी—

सूताभ्रायोहिवङ्गोपणविषमखिलांशेन गन्धेन लौह्यां
कोलाग्नौ विद्रुतेन क्षणमथ मिलितं ढालितं गोमयस्थे ।
रम्भापत्रेऽमुनाऽन्येन च दृढपिहितं प्राणदा पर्पटी स्या-
त्पाण्डौ रेके ग्रहण्यां ज्वररुजि कसने यक्ष्ममेहाग्निमान्द्ये ॥१३८॥
प्राणदा पर्पटी सैषा भाषिता शंभुना स्वयम् ।
तत्तद्रोगानुपानेन सर्वरोगविनाशिनी ॥ १३९ ॥

अथ लोकेश्वररसः—

पलं कपर्दिचूर्णस्य पलं पारदगन्धयोः ।
माषटङ्कणकस्यैकं जम्बीराद्भिर्विमर्दयेत् ॥ १४० ॥
पुटेल्लोकेश्वरो नाम्ना लोकनाथोऽयमुत्तमः ।
क्षते कुष्ठं रक्तपित्तमन्यरोगान्क्षयं जयेत् ॥ १४१ ॥
पुष्टिवीर्यप्रसादौजःकान्तिलावण्यदः परः ।
कोऽस्ति लोकेश्वरादन्यो नृणां शंभुमुखोद्गतात् ॥ १४२ ॥

अथ लोकेश्वरपोटलीरसः—

रसस्य भस्मना हेम पादांशेन प्रकल्पयेत् ।
द्विगुणं गन्धकं दत्त्वा मर्दयेच्चित्रकाम्बुना ॥ १४३ ॥
वराटकांश्च संपूर्य टङ्कणेन निरुध्य च ।
भाण्डे चूर्णप्रलिप्तेऽथ क्षिप्त्वा रुन्धीत मृन्मये ॥ १४४ ॥

---

१ ग. 'भ्रायाहि' । २ ग. 'मलमि' ।

शोषयित्वा पुटेद्गर्ते रत्निमात्रेऽपराह्णके ।
स्वाङ्गशीतलमुद्धृत्य चूर्णयित्वाऽथ विन्यसेत् ॥ १४५ ॥
एष लोकेश्वरो नाम वीर्यपुष्टिविवर्धनः ।
गुञ्जाचतुष्टयं चास्य पिप्पलीमधुसंयुतम् ॥ १४६ ॥
खादयेत्परया भक्त्या लोकेशः सर्वदर्शनः ।
अङ्गकार्श्येऽग्निमान्द्ये च कासे पित्ते रसक्षये ॥ १४७ ॥
मरिचैर्घृतसंयुक्तैः प्रदातव्यो दिनत्रयम् ।
लवणं वर्जयेत्तत्र साज्यं दधि च योजयेत् ॥ १४८ ॥
एकविंशद्दिनं यावन्मरिचं सघृतं पिबेत् ।
पथ्यं मृगाङ्कवज्ज्ञेयं शयीतोत्तानपादतः ॥ १४९ ॥

ये शुष्का विषमाशनैः क्षयरुजा व्याप्ताश्च ये कुष्ठिनो
ये पाण्डुत्वहताः कुवैद्यविधिना ये शोषिणो दुर्भगाः ।
ये तप्ता विविधैर्ज्वरैर्भ्रममदोन्मादैः प्रमादं गता-
स्ते सर्वे विगतामया हि परया स्युः पोटलीसेवया ॥ १५० ॥

इति लोकेश्वरपोटलीरसः ।

## अथ द्वितीयो राजमृगाङ्कः—

रसभस्म त्रयो भागा भागैकं हेमभस्मकम् ।
मृतताम्रस्य भागैकं शिलागन्धकतालकम् ॥ १५१ ॥
प्रतिभागद्वयं सिद्धमेकीकृत्य विचूर्णयेत् ।
वराटान्पूरयेत्तेन अजाक्षीरेण टङ्कणम् ॥ १५२ ॥
पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डे तांश्च धारयेत् ।
शुष्कं गजपुटे पाच्यं चूर्णयेत्स्वाङ्गशीतलम् ॥ १५३ ॥
रसो राजमृगाङ्कोऽयं चतुर्गुञ्जः क्षयापहः ।
दशभिः पिप्पलीक्षौद्रैर्मरिचैकोनविंशतिः ।
सघृतैर्दापयेद्वाऽथ वातश्लेष्मोद्भवे क्षये ॥ १५४ ॥

इति राजमृगाङ्कः ।

## अथ शिलाजत्वादिलौहम्—

शिलाजतुयुतं लोहवल्लं तु विधिमारितम् ।
पथ्याशी सेवते [illegible]

## अथ वसन्तकुसुमाकरः—

प्रवालरसमौक्तिकाम्बरमिदं चतुर्भागभाक्
पृथक्पृथगथो मृते रजतहेमनी द्वोशके ।
अयोभुजगवङ्गकं त्रिलवकं विमर्द्याखिलं
शुभेऽहनि विभावयेद्भिषगिदं धिया सप्तशः ॥ १५६ ॥
द्रवैर्वृषनिशेक्षुजैः कमलमालतीपुष्पजैः
पयःकदलिकन्दजैर्मृगजचन्दनाद्युद्भवैः ।
वसन्तकुसुमाकरो रसपतिर्द्विवल्लोऽशितः
समस्तगदहृद्भवेत्किल निजानुपानैरयम् ॥ १५७ ॥
क्षिणोत्यनु मधूषणैः क्षयगदेषु सर्वेष्वपि
प्रमेहरुजि रात्रिभिः समधुशर्कराभिः सह ।
सितामलयजद्रवैर्महति रक्तपित्तेऽथ वा
सितामधुसमन्वितैर्वृषमपल्लवानां द्रवैः ॥ १५८ ॥
त्रिजातगजचन्दनैरपि च तुष्टिपुष्टिप्रदो
मनोभवकरः परो वमिषु शङ्खपुष्पीरसैः ।
अभीरुरसशर्करामधुभिरम्लपित्तामये
परेषु तु यथोचितं ननु गदेष्वसुं सेवयेत् ॥ १५९ ॥

इति वसन्तकुसुमाकरः ।

## अथ त्रैलोक्यचिन्तामणिः—

सूताभ्रस्वर्णताराऽरुणभिदुरशिलाताप्यगन्धप्रवाला-
योमुक्ताशङ्खतालं वरमिदमनलक्वाथतः सप्तभाव्यम् ।
निर्गुण्डीसूरणाम्भःपविरविपयसा त्रिः पृथग्भावयित्वा
तेनाऽऽपूर्यान्वराटानथ मिहिरपयष्टङ्कणालिप्तवक्त्रान् ॥१६०॥
कृत्वा भाण्डे च रुद्ध्वा गजपुटजठरे युक्तितस्तांस्तु पक्त्वो-
द्धृत्यैतान्मर्दयित्वा तदखिलतुलितं सूतमस्मात्र दद्यात् ।
वैक्रान्तं सूततुर्यांशकमथ मिलितं सप्तशः शिग्रुमूल-
त्वङ्नीरैश्चित्रमूलोद्भवसलिलकृता भावनास्त्वेकविंशत् ॥१६१॥
आर्द्रैर्जम्बीरनीरैः पृथगथ विजयालुङ्गतोयैश्च सप्त-
भाव्यं शुष्कं च कृत्वाऽप्यथ सकलचतुर्थांशकं टङ्कणं च ।

---

१ क. °रमावर°।

टङ्कारपादं विषं तत्सममरिचमथो नागरं देवपुष्पं
पथ्याजाती*फलाख्यं पृथगथ मिलितं पादभागं विषस्य॥१६२॥
पश्चाल्लुङ्गाम्बुनीरैरपि मृगमदया भावयेत्तच्च सर्वं
गोलं कृत्वा मुलग्ने विधिवदथ भजेद्राजयोग्यो रसेन्द्रः।
एष त्रैलोक्यचिन्तामणिरखिलगदध्वान्तविध्वंसहंस-
स्तत्तद्रोगानुपानाद्रुपसि कवलितः सार्धवल्लप्रमाणः॥ १६३॥
वातव्याध्यामवातज्वरजठरकृमिश्वासशूलास्रवाता-
सृक्पित्तक्षैण्यकासक्षयकफजगदोरःक्षताजीर्णमेहे।
कुष्ठातीसारपाण्डुग्रहणिमुखमकोष्ठमर्णार्शःप्रकष्टे
साक्षे खञ्जाढ्यवातश्रुतिभगजगदे सर्वथैव प्रशस्तः॥ १६४॥

इति त्रैलोक्यचिन्तामणिरसः।

## अथ सूर्यप्रभा गुटिका—

वार्षीव्योषविडङ्गचित्रकवचापीताकरञ्जामृता-
देवाह्वाऽतिविषा त्रिवृत्सकटुका कुस्तुम्बरुः कारवी।
द्वौ क्षारौ लवणत्रयं गजकणा चव्यं तथाऽरुष्करं
तालीसं कणमूलपुष्करजटामूनिम्बसंज्ञैर्युतम्॥ १६५॥
भार्गीपद्मकजीरकोशकुटजं दन्ती वचा भद्रकं
सर्वं कर्षसमांशकं सुभिषजा सूक्ष्मं च संचूर्णितम्।
तद्वत्पञ्चपलं परं गिरिजतु स्यात्पञ्चमुष्टिः पुरो-
र्लोहस्य द्विपलं पलद्वयमथो ताप्यस्य संमिश्रितम्॥१६६॥
क्षिप्त्वा पञ्च पलानि शुभ्रसिकतां वांशीपलं योजितं
चैकैकं त्रिसुगन्धिवस्तु पलिकं क्षौद्रैर्घृतैर्लेहवत्।
एकीकृत्य समांशमेव गुटिका कार्या सुवर्णोन्मिता
सा च ब्रह्ममुखाम्बुजप्रकटिता सूर्यप्रभा नामतः॥१६७॥
शोषं कासमुरःक्षतं सतमकं पाण्डवामयं कामलां
गुल्मं विद्रधिपार्श्वशूलमुदरं प्लीहं क्षयं च क्रिमीन्।
कुष्ठार्शोविषमज्वरग्रहणिकामूत्रग्रहं नाशये-
द्भुक्त्वैकां गुटिकां प्रहृष्टमनसा योज्यं यथेष्टाशनम्॥१६८॥

---

* क. कणाख्यम्।

---

१ क. °पिसुवमके°।

नास्त्येतत्सममौषधं त्रिजगतीचक्रे हितं प्राणिनां
मुद्दामममदामदद्विपदरादसिंही नु सूर्यप्रभा ॥ १६९ ॥

इति सूर्यप्रभा गुटिका ।

ज्वराणां शमने यो यः पूर्वमुक्तः क्रियाविधिः ।
यक्ष्मिणां ज्वरदाहेषु ससर्पिष्कः प्रशस्यते ॥ १७० ॥
नित्यं स्वदेवपूजा भक्तो भैषज्यदेवतागुरुषु ।
छागलमांसपयोऽश्वञ्जीवति यक्ष्मी चिरं धृतिमान् ॥१७१॥
उपद्रवान्सस्वरवैकृतादीञ्जयेद्यथास्वं प्रसमीक्ष्य शास्त्रम् ।
त्यजेत्कुवैद्यप्रतिपादितानि बुधो विरुद्धानि च भेषजानि ॥१७२॥

इति श्रीयोगतरङ्गिण्यां क्षयरोगनिदानचिकित्साकथनं नाम
षट्सप्ततितमस्तरङ्गः ॥ ७६ ॥

---

अथ सप्तसप्ततितमस्तरङ्गः ।

---

## अथोरःक्षतनिदानचिकित्सा—

धनुरायस्यतोऽत्यर्थं भारमुद्वहतो गुरुम् ।
युध्यमानस्य बलिभिः पततो विषमोच्चतः ॥ १ ॥
वृषं हयं वा धावन्तं दम्यं चान्यं निगृह्णतः ।
शिलाकाष्ठाश्मनिर्घातान्क्षिपतो निघ्नतः परान् ॥ २ ॥
अधीयानस्य वाऽत्युच्चैर्दूरं वा व्रजतो द्रुतम् ।
महानदीं वा तरतो हयैर्वा सह धावतः ॥ ३ ॥
सहसोत्पततो दूरं तूर्णं वा विप्रनृत्यतः ।
तथाऽन्यैः कर्मभिः क्रूरैर्भृशमभ्याहतस्य वा ॥ ४ ॥
विक्षते वक्षसि व्याधिर्बलवान्समुदीर्यते ।
स्त्रीषु चातिप्रसक्तस्य रूक्षाल्पप्रमिताशिनः ॥ ५ ॥
उरो विरुज्यतेऽत्यर्थं स्विद्यतेऽथ विभज्यते ।
संपीड्यते ततः पार्श्वे शुष्यत्यङ्गं प्रवेपते ॥ ६ ॥
क्रमाद्वीर्यं बलं वर्णो रुचिरग्निश्च हीयते ।
ज्वरो व्यथा मनोदैन्यं विड्भेदोऽग्निवधस्तथा ॥ ७ ॥
दुष्टः शावः सदुर्गन्धः पीतो विग्रथितो बहुः ।
कासमानस्य चाऽभीक्ष्णं कफः सास्रः प्रवर्तते ॥ ८ ॥

रक्षतः क्षीयतेऽत्यर्थं तथा शुक्रौजसोः क्षयात् ।
अव्यक्तं लक्षणं तस्य पूर्वरूपमिति स्मृतम् ॥ ९ ॥
उरोरुक्शोणितच्छर्दिः कासो वैशेषिकः क्षते ।
क्षीणे सरक्तमूत्रत्वं पार्श्वपृष्ठकटिग्रहः ॥ १० ॥
अल्पलिङ्गस्य दीप्ताग्नेः साध्यो बलवतो नवः ।
परिसंवत्सरो याप्यः सर्वलिङ्गं तु वर्जयेत् ॥ ११ ॥
भक्तद्वेषो ज्वरः श्वासः कासः शोणितदर्शनम् ।
स्वरभेदश्च जायेत षड्रूपे राजयक्ष्मणि ॥ १२ ॥

इत्युरःक्षतनिदानम् ।

## अथोरःक्षतचिकित्सा—

उरोमन्थी क्षती लाजान्पयसा मधुसंयुतान् ।
सद्य एव पिबेज्जीर्णे पयसाऽद्यात्सशर्करम् ॥ १३ ॥
पार्श्वबस्तिरुजि स्वल्पपित्ताग्निस्तान्सुरायुतान् ।
चित्रपक्षा समुस्ताऽतिविषा पाठा सवत्सिका ॥ १४ ॥
बलाऽश्वगन्धा श्रीपर्णी बहुपुत्री पुनर्नवा ।
पयसा नित्यमभ्यस्ताः शमयन्ति उरःक्षतम् ॥ १५ ॥
शर्करामधुसंयुक्तं जीवकर्षभकौ मधु ।
लिह्यात्क्षीरानुपानं वा लिह्यात्क्षीणतरः कृशः ॥ १६ ॥
नीलिकातिविषाग्रन्थिपद्मकेसरचन्दनैः ।
शृतं पयो मधुयुतं संधानार्थं पिबेत्क्षती ॥ १७ ॥
लाक्षाचूर्णं सुकृतं क्षौद्राज्येनान्वितं सकृल्लीढम् ।
शमयति शोषोद्भूतं वमनं रक्तस्य सिद्धमिव ॥ १८ ॥
एलापत्रत्वचोक्ष*द्राक्षां पिप्पल्यर्धपलं तथा ।
सितामधुकखर्जूरमृद्वीकाश्च पलोन्मिताः ॥ १९ ॥
संचूर्ण्य मधुना युक्ता गुटिकाः संप्रकल्पयेत् ।
अक्षमात्रां ततश्चैकां भक्षयेच्च दिने दिने ॥ २० ॥
कासं श्वासं ज्वरं हिक्कां छर्दिं मूर्छां मदं भ्रमम् ।
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ॥ २१ ॥

---

* क. पुस्तके लाक्षेति पाठान्तरम् ।

शोषप्लीहाढ्यवातांश्च स्वरभेदं क्षतक्षयम् ।
गुटिका तर्पणी वृष्या रक्तपित्तं च नाशयेत् ॥ २२ ॥

इत्येलादिगुटिका ।

## अथ यष्ट्याह्वाद्यं घृतम्—

यष्ट्याह्वनागबलयोः क्वाथे क्षीरसमं घृतम् ।
पयस्यापिप्पलीवांशीकल्कसिद्धं क्षते हितम् ॥ २३ ॥

इति यष्ट्याह्वाद्यं घृतम् ।

## अथ बलाद्यं घृतम्—

घृतं बलानागबलार्जुनाम्बुसिद्धं सयष्टीमधुकल्कपादम् ।
हृद्रोगशूलक्षतरक्तपित्तकासानिलान्संशमयत्युदीर्णान् ॥ २४ ॥

इति बलाद्यं घृतम् ।

## अथ श्वदंष्ट्राद्यं घृतम्—

श्वदंष्ट्रोशीरमञ्जिष्ठाबलाकाश्मर्यकत्तृणम् ।
दर्भमूलं पृथक्पर्णी बला सर्षपका स्थिरा ॥ २५ ॥
पलिकान्साधयेत्तेषां रसे क्षीरे चतुर्गुणे ।
कल्कः स्वगुप्तवर्षाभूमेदाजीवन्तिजीवकैः ॥ २६ ॥
शतावर्यादिमृद्वीकाशर्कराश्रावणीवृषैः ।
प्रस्थः सिद्धो घृताद्वातपित्तहृद्रोगगुल्मनुत् ॥ २७ ॥
मूत्रकृच्छ्रप्रमेहार्शःकासशोषक्षयापहः ।
धनुस्तम्भाध्वभाराध्वक्षीणानां बलमांसदः ॥ २८ ॥

इति श्वदंष्ट्राद्यं घृतम् ।

## अथ कल्याणघृतम्—

तालीसत्रिफलैलवालुफलिनीसौम्यापृथक्पर्णिनी-
दन्तीदाडिमदारुचन्दननिशादार्वीविशालोत्पलैः ।
जातीपुष्पहरेणुपद्मकयुतैर्जन्तुघ्नमञ्जिष्ठिका-
रुक्सिंहीत्रुटिसारिवाद्वयनतैर्नागेन्द्रपुष्पान्वितैः ॥ २९ ॥
अष्टाविंशतिभिश्चतुर्गुणजले कल्याणमेभिः शृतं
हन्त्येतद्धि चतुर्थकं ज्वरमुरःकम्पं सवन्ध्यामयम् ।

सापस्मारगदोदराः सपवनोन्मादाः सजीर्णज्वरा
जायन्ते न पुनः कृतेन हविषा कल्याणकेनामुना ॥ ३० ॥
इति कल्याणघृतम् ।

## अथ द्राक्षादिघृतम्—

द्राक्षायाः संमतं प्रस्थं मधुकस्य पलाष्टकम् ।
पचेत्तोयाढके सिद्धे पादशेषेण तेन तु ॥ ३१ ॥
पलिके मधुकद्राक्षे पिष्टे कृष्णापलद्वयम् ।
प्रदाय सर्पिषः प्रस्थं पचेत्क्षीरे चतुर्गुणे ॥ ३२ ॥
सिद्धे शीते पलान्यष्टौ शर्करायाः प्रदापयेत् ।
एतद्द्राक्षाघृतं सिद्धं क्षीणक्षतहितं परम् ॥ ३३ ॥
वातपित्तज्वरश्वासविस्फोटकहलीमकान् ।
प्रदरं रक्तपित्तं च हन्यान्मांसबलप्रदम् ॥ ३४ ॥
इति द्राक्षादिघृतम् ।

## अथामृतप्राशावलेहः—

क्षीरे धात्रीविदारीक्षुक्षीरिणां च तथा रसे ।
पचेत्समं घृतं प्रस्थं *मधुकैरिक्षुकान्वितैः ॥ ३५ ॥
द्राक्षादिचन्दनोशीरशर्करोत्पलपद्मकैः ।
मधूककुसुमानन्ताकाश्मरीतृणसंज्ञकैः ॥ ३६ ॥
प्रस्थार्धं मधुनः शीते शर्करायास्तुलां तथा ।
पलार्धिकांश्च संचूर्ण्य त्वगेलापत्रकेसरान् ॥ ३७ ॥
विनीय तस्य संलिह्यान्मात्रां नित्यं सुयन्त्रितः ।
अमृतप्राश इत्येतदश्विभ्यां परिकीर्तितः ॥ ३८ ॥
क्षीरमांसाशिनो हन्ति रक्तपित्तं क्षतक्षयम् ।
तृष्णारुचिश्वासकासच्छर्दिहिक्काप्रमर्दनः ।
मूत्रकृच्छ्रज्वरघ्नश्च बल्यः स्त्रीरतिवर्धनः ॥ ३९ ॥
इत्यमृतप्राशावलेहः ।

## अथ रसराजः—

मुक्ताप्रवालरसहेमसिताभ्रकान्त-
वङ्गं मृतं सकलमेतदहो विभाव्यम् ।

---

* क. मधुरैः फलसंमितैरिति पाठान्तरम् ।

छिन्नारसेन च वरीसलिलेन सप्त-
वारं ततो मधुहविर्मरिचेन साकम् ॥
लिह्याद्दुरःक्षतहरं रसराजकाख्यं
माषप्रमाणमतनूद्भवहेतुमेनम् ॥ ४० ॥

इति रसराजः ।

## अथामृतेश्वरो रसः—

रसभस्मामृतासत्त्वं लोहं मधुघृतान्वितम् ।
अमृतेश्वरनामाऽयं पञ्चगुञ्जो राजयक्ष्मणि ॥ ४१ ॥

इत्यमृतेश्वरो रसः ।

## अथ राजमृगाङ्को रसो रसेन्द्रचिन्तामणौ—

त्रयोऽशा मारितात्सूतादेकोऽशो हेमभस्मतः ।
एकोऽशो मृतताम्रस्य शिलागन्धश्च तालकम् ॥ ४२ ॥
प्रत्येकं भागयुग्मं स्यादेतत्सर्वं विचूर्णयेत् ।
वराटीः पूरयेत्तेन च्छागीक्षीरेण टङ्कणम् ॥ ४३ ॥
पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डे तांश्च धारयेत् ।
ततो गजपुटे पक्त्वा चूर्णयेत्स्वाङ्गशीतलम् ॥ ४४ ॥
रसो राजमृगाङ्कोऽयं चतुर्गुञ्जः क्षयापहः ।
मरिचैरूनविंशत्या कणाभिर्दशभिस्तथा ॥ ४५ ॥
मधुना सर्पिषश्चापि दद्यादेतं रसं भिषक् ।
अनेन नश्यति क्षिप्रं वातश्लेष्मभवक्षयः ॥ ४६ ॥
उरःक्षतादिकासानां नाशनः परमः स्मृतः ।

इति राजमृगाङ्को रसो रसेन्द्रचिन्तामणौ ।

## अथाग्निरसः शार्ङ्गधरात्—

शुद्धसूतं द्विधागन्धं कुर्यात्खल्वेन कज्जलिम् ॥ ४७ ॥
तयोः समं तीक्ष्णचूर्णं मर्दयेत्कन्यकाद्रवैः ।
द्वियाममातपे गोलं ताम्रपात्रे निधापयेत् ॥ ४८ ॥
आच्छाद्यैरण्डपत्रैश्च स्यादुष्णं यामयुग्मतः ।
धान्यराशौ न्यसेत्पश्चाद्दत्रात्रात्तदुद्धरेत् ॥ ४९ ॥

१-क. °स पश्चात्पञ्च ग° ।

संचूर्ण्य गालयेद्वस्त्रैः सत्यं वारितरं भवेत् ।
त्रिकटुत्रिफलैलाभिर्जातीफललवङ्गकैः ॥ ५० ॥
नवभागोन्मितैरेतैः सम एष रसो भवेत् ।
निष्कद्वयमिदं नित्यं मधुना सह लेहयेत् ॥ ५१ ॥
अयमग्निरसो नाम्ना कासक्षयहरः परः ।

इत्यग्निरसः शार्ङ्गधरात् ।

यच्च तर्पणं शीतमविदाहि हितं लघु ॥ ५२ ॥
अन्नपानं निषेव्यं स्यात्क्षतक्षीणैः सुखार्थिभिः ।
हितमत्र विशेषेण खण्डकूष्माण्डसंज्ञितम् ॥ ५३ ॥

उपद्रवांश्च स्वरभेदकृतादींश्चपेद्यथास्वं प्रसमीक्ष्य शास्त्रम् ।
शोकं स्त्रियः क्रोधमसूयनं च त्यजेदुदारान्विजयान्भजेत ॥
गुरुद्विजातींस्त्रिदशांश्च पूजयेत्कथाः सुपुण्याः शृणुयाद्विजेभ्यः ॥ ५४ ॥

सुहृदां दर्शनं गीतं वादित्रोत्सवसंश्रुतिः ।
बस्तयः क्षीरसर्पींषि हृद्यमद्यं सुशीलता ॥ ५५ ॥
बृंहणं दीपनं चाग्नेः स्रोतसां च विशोधनम् ।
व्यत्यासात्क्षयकासिभ्यो बल्यं पूर्वं प्रशस्यते ॥ ५६ ॥
व्यायामं च व्यवायं च शोकं क्रोधमसूयनम् ।
धातुक्षयकरं यच्च तत्सर्वं वर्जयेत्क्षयी ॥ ५७ ॥

इति श्रीयोगतरङ्गिण्यामुरःक्षतनिदानचिकित्साकथनं नाम सप्तसप्ततितमस्तरङ्गः ॥ ७७ ॥

---

अथाष्टसप्ततितमस्तरङ्गः ।

---

## अथ कासनिदानम्—

धूमोपघाताद्रजसस्तथैव व्यायामरूक्षान्ननिषेवणाच्च ।
विमार्गगत्वादतिभोजनस्य वेगावरोधात्क्षवथोस्तथैव ॥ १ ॥
प्राणो ह्युदानानुगतः प्रदुष्टः संभिन्नकांस्यस्वनतुल्यघोषः ।
निरेति वक्त्रात्सहसा सदोषो मनीषिभिः कास इति प्रदिष्टः ॥ २ ॥

### पञ्च प्रकारानाह—

पञ्च कासाः स्मृता वातपित्तश्लेष्मक्षतक्षयैः ।
क्षयायोपेक्षिताः सर्वे बलिनश्चोत्तरोत्तरम् ॥ ३ ॥

पूर्वरूपमाह—

पूर्वरूपं भवेत्तेषां शूकपूर्णगलास्यता ।
कण्ठे कण्डूश्च भोज्यानामवरोधश्च जायते ॥ ४ ॥

वातजमाह—

हृच्छङ्खमूर्धोदरपार्श्वशूली क्षामाननः क्षीणबलस्वरौजाः ।
प्रसक्तवेगस्तु समीरणेन भिन्नस्वरः कासति शुष्कमेव ॥ ५ ॥

पित्तजमाह—

उरोविदाहज्वरवक्त्रशोषैरभ्यर्दितस्तिक्तमुखस्तृषार्तः ।
पित्तेन पीतानि वमेत्कटूनि कासेत्सपाण्डुः परिदह्यमानः ॥ ६ ॥

कफजमाह—

प्रलिप्यमानेन मुखेन सीदञ्शिरोरुजार्तः कफपूर्णदेहः ।
अभक्तरुग्गौरवकण्डुयुक्तः कासेद्भृशं सान्द्रकफः कफेन ॥ ७ ॥

अतिव्यवायभाराध्वयुद्धाश्वगजनिग्रहैः ।
रूक्षस्योरःक्षतं वायुर्गृहीत्वा कासमावहेत् ॥ ८ ॥
स पूर्वं कासते शुष्कं ततः ष्ठीवेच्च शोणितम् ।
कण्ठेन रुजताऽत्यर्थं विभुग्नेनेव चोरसा ॥ ९ ॥
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ।
दुःखस्पर्शेन शूलेन भेदपीडाभितापिना ॥ १० ॥
पर्वभेदज्वरश्वासतृष्णावैस्वर्यपीडितः ।
पारावत इवाऽऽकूजन्कासवेगात्क्षतोद्भवात् ॥ ११ ॥

क्षयजमाह—

विषमासात्म्यभोज्यातिव्यवायाद्वेगनिग्रहात् ।
घृणिनां शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मलाः ॥ १२ ॥
कुपिताः क्षयजं कासं कुर्युर्देहक्षयप्रदम् ।
सगात्रशूलज्वरदाहमोहान्प्राणक्षयं चोपलभेत कासी ॥ १३ ॥
शुष्कं विनिष्ठीवति दुर्बलस्तु प्रक्षीणमांसो रुधिरं सपूयम् ।
तं सर्वलिङ्गं भृशदुश्चिकित्स्यं चिकित्सितज्ञाः क्षयजं वदन्ति ॥ १४ ॥

---

१ ग. °तिव्यायामभा° ।

इत्येष क्षयजः कासः क्षीणानां देहनाशनः।
साध्यो बलवतां वा स्याद्याप्यस्त्वेवं क्षतोत्थितः॥ १५॥
नवौ कदाचित्सिध्येतामपि पादगुणान्वितौ।
स्थविराणां जराकासः सर्वो याप्यः प्रकीर्तितः॥ १६॥
त्रीन्पूर्वान्साधयेत्साध्यान्पथ्यैर्याप्यांस्तु पालयेत्।
पूयाममरुणं श्यावं हरितं पीतनीलकम्॥ १७॥
निष्ठीवञ्श्वासकासार्तो न जीवति हतस्वरः।
कासाच्छ्वासक्षयच्छर्दिस्वरसादादयो गदाः॥ १८॥
भवन्त्युपेक्षया यस्मात्तस्मात्तं त्वरया जयेत्।
इति कासनिदानम्।

अथ कासचिकित्सा—

रूक्षस्यानिलजं कासमादौ स्नेहैरुपाचरेत्।
सर्पिर्भिर्वस्तिभिः पेयं क्षीरं यूषरसादिभिः॥ १९॥

पथ्यमाह—

ग्राम्यानूपोदकैः शालियवगोधूमषष्टिकान्।
रसैर्माषात्मगुप्तानां यूषैर्वा भोजयेद्धितान्॥ २०॥

तस्योपचारः—

दशमूली शृता श्वासकासहिक्कारुजापहा।
यवागूर्दीपनी वृष्या वातरोगविनाशिनी॥ २१॥
पञ्चमूलीकृतः क्वाथः पिप्पलीचूर्णसंयुतः।
रसान्नमश्नतो नित्यं वातकासमुदस्यति॥ २२॥
रसं कर्कटकानां च घृतभृष्टं सनागरम्।
वातकासप्रशमनं शृङ्गीमत्स्यकस्य वा पुनः॥ २३॥

अथापराजितो लेहः—

शठीशृङ्गीकणाभार्गीगुडवारिदयासकैः।
सतैलैर्वातकासघ्नो लेहोऽयमपराजितः॥ २४॥
इत्यपराजितो लेहः।

अथ भार्ग्यादिलेहः—

भार्गीद्राक्षामृताशृङ्गीपिप्पलीविश्वभेषजम्।
गुडतैलयुतो लेहो हितो मारुतकासिनाम्॥ २५॥
इति भार्ग्यादिलेहः।

## अथ विश्वादिलेहः

विश्वमार्गीकणा*सोमवल्कद्राक्षाः शठीं सिताम् ।
लीढ्वा तैलेन वातोत्थं कासं जयति दुस्तरम् ॥ २६ ॥

इति विश्वादिलेहः ।

## अथ दशमूलादिघृतम्—

दशमूलीकषायेण मार्गीकल्कं घृतं पचेत् ।
दक्षतित्तिरनिर्यूहे तत्परं वातकासजित् ॥ २७ ॥

इति दशमूलादिघृतम् ।

## अथ कण्टकारीलेहः—

चित्रकं पिप्पलीमूलं व्योषं मुस्तं दुरालभाम् ।
शठीपुष्करमूलं च श्रेयसीं सुरसां वचाम् ॥ २८ ॥
मार्गीं छिन्नरुहां रास्नां कर्कटाख्यां च कर्पिकाम् ।
कल्कान्निदिग्धिद्वितुलाकषाये पलविंशतिम् ॥ २९ ॥
मत्स्यण्डिकाया दत्त्वाऽनु सर्पिषः कुडवं पचेत् ।
सिद्धशीते पृथक्क्षौद्रे पिप्पलीकुडवान्वितम् ॥ ३० ॥
चतुष्पलं तुगाक्षीर्याश्चूर्णितं तत्र दापयेत् ।
लेहयेत्कासहृद्रोगश्वासगुल्मनिवारणम् ॥ ३१ ॥

इति कण्टकारीलेहः । इति वातकासचिकित्सा ।

## अथ बलादिक्काथः—

बलाद्विबृहतीद्राक्षावासाभिः क्वथितं जलम् ।
पित्तकासापहं पेयं शर्करामधुसंयुतम् ॥ ३२ ॥

इति बलादिक्काथः ।

## अथ शठ्यादिक्काथः—

शठीह्रीबेरबृहतीशर्कराविश्वभेषजम् ।
एतत्क्काथं पिबेत्पूतं सघृतं पित्तकासनुत् ॥ ३३ ॥

इति शठ्यादिक्काथः ।

---

* क. विट्खदिरः ।

---

१ ग. 'दिग्ध्यर्भेतु' ।

इत्येष क्षयजः कासः क्षीणानां देहनाशनः।
साध्यो बलवतां वा स्याद्याप्यस्त्वेवं क्षतोत्थितः॥ १५॥
नवौ कदाचित्सिध्येतामपि पादगुणान्वितौ।
स्थविराणां जराकासः सर्वो याप्यः प्रकीर्तितः॥ १६॥
त्रीन्पूर्वान्साधयेत्साध्यान्पथ्यैर्याप्यांस्तु पालयेत्।
पूयाममरुणं श्यावं हरितं पीतनीलकम्॥ १७॥
निष्ठीवञ्श्वासकासार्तो न जीवति हतस्वरः।
कासाच्छ्वासक्षयच्छर्दिस्वरसादादयो गदाः॥ १८॥
भवन्त्युपेक्षया यस्मात्तस्मात्तं त्वरया जयेत्।

इति कासनिदानम्।

अथ कासचिकित्सा—

रूक्षस्यानिलजं कासमादौ स्नेहैरुपाचरेत्।
सर्पिर्भिर्बस्तिभिः पेयं क्षीरं यूषरसादिभिः॥ १९॥

पथ्यमाह—

ग्राम्यानूपौदकैः शालियवगोधूमषष्टिकान्।
रसैर्माषात्मगुप्तानां यूषैर्वा भोजयेद्धितान्॥ २०॥

तस्योपचारः—

दशमूली शृता श्वासकासहिक्कारुजापहा।
यवागूर्दीपनी वृष्या वातरोगविनाशिनी॥ २१॥
पञ्चमूलीकृतः क्वाथः पिप्पलीचूर्णसंयुतः।
रसान्नमश्नतो नित्यं वातकासमुदस्यति॥ २२॥
रसं कर्कोटकानां च घृतभृष्टं सनागरम्।
वातकासप्रशमनं शृङ्गीमत्स्यस्य वा पुनः॥ २३॥

अथापराजितो लेहः—

शठीशृङ्गीकणाभार्गीगुडवारिदयासकैः।
सतैलैर्वातकासघ्नो लेहोऽयमपराजितः॥ २४॥

इत्यपराजितो लेहः।

अथ भार्ग्यावलेहः—

भार्गीद्राक्षामृताशृङ्गीपिप्पलीविश्वभेषजम्।
गुडतैलयुतो लेहो हितो मारुतकासिनाम्॥ २५॥

इति भार्ग्यावलेहः।

## अथ विश्वादिलेहः

विश्वमार्गीकणा*सोमवल्कद्राक्षाः शठीं सिताम् ।
लीढ्वा तैलेन वातोत्थं कासं जयति दुस्तरम् ॥ २६ ॥

इति विश्वादिलेहः ।

## अथ दशमूलादिघृतम्—

दशमूलीकषायेण मार्गीकल्कं घृतं पचेत् ।
दक्षतित्तिरनिर्यूहे तत्परं वातकासजित् ॥ २७ ॥

इति दशमूलादिघृतम् ।

## अथ कण्टकारीलेहः—

चित्रकं पिप्पलीमूलं व्योषं मुस्तं दुरालभाम् ।
शठीपुष्करमूलं च श्रेयसीं सुरसां वचाम् ॥ २८ ॥
मार्गीं छिन्नरुहां रास्नां कर्कटाख्यां च कर्षिकाम् ।
कल्कान्निदिग्धिद्वितुलाकषाये पलविंशतिम् ॥ २९ ॥
मत्स्यण्डिकाया दत्त्वाऽनु सर्पिषः कुडवं पचेत् ।
सिद्धशीते पृथक्क्षौद्रं पिप्पलीकुडवान्वितम् ॥ ३० ॥
चतुष्पलं तुगाक्षीर्याश्चूर्णितं तत्र दापयेत् ।
लेहयेत्कासहृद्रोगश्वासगुल्मनिवारणम् ॥ ३१ ॥

इति कण्टकारीलेहः । इति वातकासचिकित्सा ।

## अथ बलादिक्वाथः—

बलाद्विबृहतीद्राक्षावासाभिः क्वथितं जलम् ।
पित्तकासापहं पेयं शर्करामधुसंयुतम् ॥ ३२ ॥

इति बलादिक्वाथः ।

## अथ शठ्यादिक्वाथः—

शठीह्रीबेरबृहतीशर्कराविश्वभेषजम् ।
एतत्क्वाथं पिबेत्पूतं सघृतं पित्तकासनुत् ॥ ३३ ॥

इति शठ्यादिक्वाथः ।

---

* क. चिद्वदिरः ।

---

अथ खर्जूरादिलेहः—

शरादिपञ्चमूलस्य पिप्पलीद्राक्षयोस्तथा ।
कषायेण शृतं क्षीरं पिबेत्समधुशर्करम् ॥ ३४ ॥
खर्जूरं पिप्पलीद्राक्षासितालाजाः समांशकाः ।
मधुसर्पिर्युतो लेहः पित्तकासहरः परः ॥ ३५ ॥

इति खर्जूरादिलेहः ।

अथ क्षीरामलघृतम्—

माहिष्यजाविगोक्षीरधात्रीफलरसैः समैः ।
सर्पिः प्रस्थं पचेद्युक्त्या पित्तकासनिबर्हणम् ॥ ३६ ॥

इति क्षीरामलघृतम् । इति पित्तकासचिकित्सा ।

अथ नवाङ्गयूषः—

कफजे वमनं कार्यं कासे लङ्घनमेव च ।
शस्ता यवान्नविकृतिर्यूषाश्च कटुतिक्तकाः ॥ ३७ ॥
मुद्गामलाभ्यां यवदाडिमाभ्यां कर्कन्धुना मूलकशुण्ठकेन ।
शुण्ठीकणाभ्यां सकुलित्थकेन यूषो नवाङ्गः कफकासहन्ता ॥३८॥

इति नवाङ्गयूषः ।

अथ शठ्याद्यवलेहः—

शठी सातिविषा मुस्तं शृङ्गी कर्कटकस्य च ।
अभया शृङ्गबेरं च समान्कृपदि पेषयेत् ॥ ३९ ॥
हिङ्गुसैन्धवसंयुक्तं तक्रोदकपरिप्लुतम् ।
श्लेष्मकासी लिहेदेतमवलेहं मुहुर्मुहुः ॥ ४० ॥

इति शठ्याद्यवलेहः ।

अथ व्योषाद्यं घृतम्—

व्योषाजमोदचित्रकजीरकपट्वग्रन्थिचव्यकल्कितं सर्पिः ।
कफकासश्वासहरं वासकरससाधितं समधु ॥ ४१ ॥

इति व्योषाद्यं घृतम् । इति श्लेष्मकासः ।

अथ द्वन्द्वजकासचिकित्सा—

अथ कट्फलादिः—

कट्फलं कत्तृणं भार्गी मुस्तं धान्यं वचाऽभया ।
शुण्ठी पर्पटकः शृङ्गी सुराह्वं च जले शृतम् ॥ ४२ ॥

---

१ क. शठीद्विप° ।

मधुहिङ्गुयुतं पेयं कासे वातकफान्विते ।
कण्ठरोगे मुखे शूले हिक्काश्वासज्वरेषु च ॥ ४३ ॥

इति कट्फलादिः ।

सिंहास्यामृतसिंहीनां क्वाथं मधुसमायुतम् ।
पिबेत्सपित्तकफजे कासे श्वासे क्षये ज्वरे ॥ ४४ ॥
वासकस्वरसः पेयो मधुयुक्तो हिताशिना ।
पित्तश्लेष्मकृते कासे तालीसाद्यं च योजयेत् ॥ ४५ ॥

अथ क्षतकासचिकित्सा—

कासे तु क्षतजे बल्यैर्जीवनैर्बृंहणैरपि ।
शमनं पित्तकासघ्नैरन्यैश्च मधुरौषधैः ॥ ४६ ॥
यवागूं वा पिबेत्सिद्धां क्षतोरस्कः सुशीतलाम् ।
इक्ष्विक्षुवालिकापद्ममृणालोत्पलचन्दनैः ॥ ४७ ॥
मधुकं पिप्पली द्राक्षा शृङ्गी चैव शतावरी ।
द्विगुणा च तुगा क्षीरी सिता सर्वैश्चतुर्गुणा ।
लिह्यात्तं मधुसर्पिर्भ्यां क्षतकासनिवृत्तये ॥ ४८ ॥

इतीक्ष्वाद्यवलेहः ।

मञ्जिष्ठमूर्वानतवह्निपाठां कृष्णां हरिद्रां विलिहेद्विचूर्ण्य ।
क्षौद्रेण कासेऽवलिहेत्क्षतोत्थे पिबेद्घृतं चेक्षुरसे विपक्वम् ॥ ४९ ॥
इक्ष्विक्षुवालिकापद्ममृणालोत्पलचन्दनैः ।
शृतं पयो मधुयुतं संधानार्थं पिबेत्क्षती ॥ ५० ॥

इति क्षतकासः ।

अथ क्षयकासचिकित्सा—

अथ पिप्पल्यवलेहः—

पिप्पलीपद्मकं द्राक्षा सुपक्वबृहतीफलम् ।
घृतक्षौद्रयुतो लेहः क्षयकासनिबर्हणः ॥ ५१ ॥

इति पिप्पल्यवलेहः ।

अथ काकुभचूर्णम्—

चूर्णं काकुभपिष्टं वासकरसभावितं बहून्वारान् ।
मधुघृतसितोपलाभिर्लेह्यं क्षयकासरक्तपित्तहरम् ॥ ५२ ॥

इति काकुभचूर्णम् ।

---

१ ग. °इक्षुवा° । २ ग. °वीजगर्भं° । ३ ग. द्राक्षा । ४ ग. °भसिद्धं ।

## अथ पिप्पल्यादिघृतम्—

पिप्पलीगुडसंसिद्धं छागक्षीरयुतं घृतम् ।
एतदग्निविवृद्ध्यर्थं सर्पिश्च क्षयकासिनाम् ॥ ५३ ॥

इति पिप्पल्यादिघृतम् ।

## अथ पिप्पल्याद्यवलेहः—

पिप्पलीमधुकं पिष्टं कार्षिकं ससितोपलम् ।
प्रास्थिकं गव्यमाज्यं च क्षीरमिक्षुरसं तथा ॥ ५४ ॥
यवगोधूममृद्वीकाचूर्णमामलकाद्रसम् ।
तैलं च प्रसृतांशानि तत्सर्वं मृदुनाऽग्निना ॥ ५५ ॥
पचेल्लेहं घृतक्षौद्रयुक्तं स श्वासकासनुत् ।
क्षयहृद्रोगकासघ्नो हितो वृद्धाल्परेतसाम् ॥ ५६ ॥

इति पिप्पल्याद्यवलेहः ।

संनिपातभवो ह्येष क्षयकासः सुदारुणः ।
संनिपातहितं तस्मात्कार्यमत्र चिकित्सितम् ॥ ५७ ॥

इति क्षयकासः ।

## अथ कासश्वासः—

## अथामृतादिक्वाथः—

अमृतानागरफञ्जीव्याघ्रीपर्णीसुसाधितः क्वाथः ।
पीतः सकणाचूर्णः कासश्वासौ जयत्याशु ॥ ५८ ॥

इत्यमृतादिक्वाथः ।

## अथ भार्ग्यादिक्वाथः—

भार्गीं सनागरां सिंहीं कुलित्थं मूलकं तथा ।
पिबेत्पिप्पलिचूर्णेन कासश्वासौ ह्यपोहति ॥ ५९ ॥

इति भार्ग्यादिक्वाथः ।

## अथ पथ्यादिगुटिका—

स्वरसं शृङ्गबेरस्य माक्षिकेण समन्वितम् ।
पाययेच्छ्वासकासघ्नं प्रतिश्यायकफापहम् ॥ ६० ॥

पथ्याशुण्ठीघनगुडैर्गुटिकां धारयेन्मुखे ।
सर्वेषु श्वासकासेषु केवलं वा बिभीतकम् ॥ ६१ ॥

इति पथ्यादिगुटिका ।

नागरेणाभया तद्वत्कासमाशु व्यपोहति ॥ ६२ ॥

इति कासश्वासचिकित्सा ।

अथ सर्वकासः—

सपिप्पलीपुष्करमूलपथ्याशुण्ठीशठीमूलकसूक्ष्मचूर्णैः ।
गुडेन युक्ता गुटिका प्रयोज्या श्वासेषु कासेषु च वर्धितेषु॥ ६३ ॥

लघुभृष्टकण्टकारीस्वरसं चपलारजोमिश्रम् ।
यः पिबति तस्य कासाः सश्वासा नाशमुपयान्ति ॥ ६४ ॥

नास्यमानस्य कासेन नासास्रावे स्वरे जडे ।
क्षवथौ गन्धनाशे च धूमपानं प्रयोजयेत् ॥ ६५ ॥

मनःशिलेन मरिचं मांसीमुस्तेङ्गुदैः पिबेत् ।
धूमं तस्यानु च पयः सुखोष्णं सगुडं पिबेत् ॥ ६६ ॥

एष कासक्षयद्वन्द्वसर्वदोषसमुत्थितान् ।
शतैरपि प्रयोगाणां साधयेदप्रसाधितान् ॥ ६७ ॥

मनःशिलालिप्तदलं बदर्या घर्मशोषितम् ।
सक्षीरं धूमपानं तु महाकासनिवारणम् ॥ ६८ ॥

पीत्वा त्रिपुटधत्तूरमूलव्योषमनःशिलाः ।
तेन प्रक्षिप्य वसनं धूमवर्तिं प्रकल्पयेत् ॥ ६९ ॥

धूमं तस्याः पिबेद्यस्तु त्रिदिनात्कासमस्यति* ।
जातीपत्रजटामांसीशिलालैर्गुग्गुलुः समः ॥ ७० ॥

अजामूत्रेण पिष्टोऽयं धूमः कासहरः परः ।
कुनटीसैन्धवं व्योषविडङ्गामरहिङ्गुभिः ।
लेहः साज्यमधुः कासहिक्काश्वासनिवारणः ॥ ७१ ॥

इति कुनट्यादिलेहः ।

अथ हरीतक्याद्यो मोदकः—

हरीतकी कणा शुण्ठी मरिचं गुडसंयुतम् ।
कासघ्नो मोदकः प्रोक्तः परं चानलदीपनः ॥ ७२ ॥

इति हरीतक्याद्यो मोदकः ।

---

* क. 'नाशकासं हरेत्' इति पाठान्तरम् ।

---

१ ग. °ठीमुस्तक° । २ क. °शिलालं स° ।

अथ शर्करासमं चूर्णम्—

शुण्ठीकणामरिचनागदलत्वगेलं
चूर्णीकृतं क्रमविवर्धितमूर्ध्वमन्त्यात् ।
खादेदिदं समसितं गुदजाग्निमान्द्य-
गुल्मारुचिश्वसनकण्ठहृदामयेषु ॥ ७३ ॥

इति शर्करासमं चूर्णम् ।

अथ कर्पूराद्यं चूर्णम्—

कर्पूरवालकक्कोलजातीफलदलं समम् ।
लवङ्गनागमरिचकृष्णाशुण्ठ्यो विवर्धिताः ॥ ७४ ॥
चूर्णं सितासमं ग्राह्यं रोचनं क्षयकासजित् ।
वैस्वर्यश्वासकासघ्नं छर्दिकण्ठामयापहम् ।
प्रयुक्तं चान्नपानेषु भेषजं द्विगुणं हितम् ॥ ७५ ॥

इति कर्पूराद्यं चूर्णम् ।

अथ मरिचाद्यं चूर्णम्—

कर्षः कर्षांशपलं पलद्वयं स्यात्ततोऽर्धकर्षश्च ।
मरिचस्य पिप्पलीनां दाडिमगुडयावशूकानाम् ॥ ७६ ॥
सर्वौषधैरसाध्या ये कासाः सर्ववैद्यनिर्मुक्ताः ।
अपि पूयं छर्दयतां तेषामिदमौषधं पथ्यम् ॥ ७७ ॥

अत्र कर्षांशो द्विकर्षमेव । इति मरिचाद्यं चूर्णम् ।

अथ कण्टकारीघृतम्—

कण्टकार्यास्तुलां क्षुण्णां कृत्वा द्रोणेऽम्भसः पचेत् ।
तेनाऽऽढकेन क्वाथस्य घृतप्रस्थं पिचून्मितैः ॥ ७८ ॥
रास्नादुस्पर्शषड्ग्रन्थापिप्पलीद्वयचित्रकैः ।
सौवर्चलयवक्षारकृष्णामूलैश्च तज्जयेत् ।
कासश्वासकफष्ठीवहिध्मारोचकपीनसान् ॥ ७९ ॥

इति कण्टकारीघृतम् ।

अथ व्याघ्रीहरीतकी—

समूलपुष्पच्छदकण्टकार्या तुलां जलद्रोणपरिप्लुतां च ।
हरीतकीनां च शतं निदध्यादेतत्त पक्त्वा चरणावशेषम् ॥ ८० ॥

गुडस्य दत्त्वा शतमेतदग्नौ विपक्कमुत्तार्य ततः सुशीते ।
कटुत्रिकं च त्रिपलप्रमाणं फलानि षट् पुष्परसस्य चापि ॥ ८१ ॥
क्षिपेच्चतुर्जातपलं यथाग्नि प्रयुज्यमानो विधिनाऽवलेहः ।
वातात्मकं पित्तकफोद्भवं च द्विदोषकासानपि सन्निदोषान् ॥८२॥
क्षतोद्भवं च क्षयजं च हन्यात्सपीनसश्वासमुरःक्षतं च ।
यक्ष्माणमेकादशरूपमुग्रं भृगूपदिष्टं हि रसायनं स्यात् ॥ ८३ ॥

इति व्याघ्रीहरीतकी ।

### अथ कासकण्डनोऽवलेहः—

अजामूत्रं शतपलं मन्दाग्नौ गुडपाकवत् ।
पक्त्वा बैभीतकं चूर्णं पलद्वयमितं क्षिपेत् ॥ ८४ ॥
पलं पिप्पलिचूर्णं च पलमात्रं मृतायसम् ।
कण्टकारीफलरजो दद्यादत्र पलद्वयम् ॥ ८५ ॥
ततो माषद्वयं खादेट्टङ्कं कर्षमथापि वा ।
क्षौद्रेणोष्णाम्बुना वाऽपि सर्वकासात्प्रमुच्यते ॥ ८६ ॥
असाध्या भिषजा त्यक्ताश्चिरजाः पथ्यवर्जिताः ।
ये कासास्तेऽप्यनेनाऽऽशु प्रणश्यन्ति न संशयः ॥ ८७ ॥
कासकण्डननामाऽयं योग आत्रेयभाषितः ।

इति कासकण्डनोऽवलेहः ।

### अथ पारदादिचूर्णं योगरत्नालितः—

पारदं गन्धकं शुद्धं मृतं लोहं च टङ्कणम् ॥ ८८ ॥
रास्नां विडङ्गं त्रिफलां देवदारु कटुत्रयम् ।
अमृतां पद्मकं क्षौद्रं पिचुतुल्यानि चूर्णयेत् ॥ ८९ ॥
त्रिगुञ्जः सर्वकासघ्नो ज्वरारोचकमेहनुत् ।

इति पारदादिचूर्णं योगरत्नालितः ।

### अथ कासकर्तरी गुटिका—

रङ्गं कृष्णाभयाक्षारं रूपभार्गी क्रमोत्तरा ॥ ९० ॥
तत्समं खादिरं सारं बब्बूलक्काथभावितम् ।
एकविंशतिवारांश्च मधुनाऽक्षमिता गुटी ॥
कासं श्वासं क्षयं हिक्कां हन्त्येषा कासकर्तरी ॥ ९१ ॥

इति कासकर्तरी गुटिका ।

---

१ ग. कण्डनम् । २ ग. °हं विधं तु ।

निषेधः—

मैथुनं स्निग्धमधुरं दिवास्वापं पयो दधि ।
पिष्टान्नं पायसादीनि कासी धूमं च वर्जयेत् ॥ ९२ ॥

इति श्रीयोगतरङ्गिण्यां कासनिदानचिकित्साकथनं नाम-
ष्टसप्ततितमस्तरङ्गः ॥ ७८ ॥